ऊर्यादयः शब्दाः च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसंज्ञा भवन्ति। च्विडाचोः कृभ्वस्तियोगे विधानं यत्साहचर्यादूर्यादीनामपि तैरेव योगे गतिसंज्ञा विधीयते। ऊरीउररीशब्दावङ्गीकरणे विस्तारे च। ऊरीकृत्य। ऊरीकृतम्। यदूरीकरोति। उररीकृत्य। उररीकृतम्। यदुररीकरोति। पापी। ताली। आताली। वेताली। धूसी। शकला। संशकला। ध्वंसकला। भ्रंशकला। एते शकलादयो हिंसायाम्। शकलाकृत्य। संशकलाकृत्य। ध्वंसकलाकृत्य। भ्रंशकलाकृत्य। गुलुगुधा पीडार्थे। गुलुगुधाकृत्य। सजूः सहार्थे। सजूःकृत्य। फलू, फली, विक्ली, आक्ली, इति विकारे। फलूकृत्य। फलीकृत्य। विक्लीकृत्य। आक्लीकृत्य। आलोष्ठी, कराली केवाली, शेवाली, वर्षाली, मस्मसा, मसमसा एते हिंसायाम्। वषट्। वौषट्। श्रौषट्। स्वाहा। स्वधा। वन्धा। प्रादुस्। श्रत्। आविस्। च्व्यन्ताः खल्वपि—शुक्लीकृत्य। शुक्लीकृतम्। यच्छुक्लीकरोति। डाच्—पटपटाकृत्य। पटपटाकृतम्। यत्पटपटाकरोति॥

## अनुकरणं चानितिपरम् ॥ ६२ ॥

इतिः परो यस्मादिति बहुव्रीहिः। अनुकरणमनितिपरं क्रियायोगे गतिसंज्ञं भवति। खाट्कृत्य। खाट्कृतम्। यत् खाट्करोति। अनितिपरमिति किम्? खाडिति कृत्वा निरष्ठीवत्(१)॥

## आदरानादरयोः सदसती ॥ ६३ ॥

प्रीत्यतिशय आदरः(२)। परिभवौदासीन्यमनादरः। आदरानादरयोर्यथाक्रमं सदसच्छब्दौ गतिसंज्ञौ भवतः। सत्कृत्य। सत्कृतम्। यत्सत्करोति। असत्कृत्य। असत्कृतम्। यदसत्करोति। आदरानादरयोरिति किम्? सत्कृत्वा काण्डं गतः, असत्कृत्वा काण्डं गतः॥

## भूषणेऽलम् ॥ ६४ ॥

अलमिति प्रतिषेधे सामर्थ्ये पर्याप्तौ भूषणे चेति विशेषणमुपादीयते। भूषणे योऽलंशब्दः स गतिसंज्ञो भवति। अलंकृत्य। अलंकृतम्। यदलंकरोति। भूषण इति किम्? अलं भुक्त्वा ओदनं गतः॥

## अन्तरपरिग्रहे ॥ ६५ ॥

अन्तःशब्दोऽपरिग्रहेऽर्थे गतिसंज्ञो भवति। परिग्रहः स्वीकरणम्, तदभावे गतिसंज्ञा विधीयते। अन्तर्हत्य। अन्तर्हतम्। यदन्तर्हन्ति। अपरिग्रह इति किम्? अन्तर्हत्वा मूषिकां श्येनो गतः। परिगृह्य गत इत्यर्थः। ॐअन्तः शब्दस्याङ्किविधिणत्वेषूपसर्गसंज्ञा वक्तव्या॥। अन्तर्द्धा। अन्तर्द्धिः। अन्तर्णयति॥

**अनुकरणम्**—'इति' शब्द जिसके उत्तर में न हो ऐसे अनुकरणात्मक शब्दों की क्रियायोग में 'गति' संज्ञा होती है।

**आदरानादरयोः**—क्रमशः आदर तथा अनादर अर्थ में प्रयुज्यमान सत् तथा असत् शब्दों की 'गति' संज्ञा होती है।

**भूषणेऽलम्**—भूषणार्थक 'अलम्' शब्द की 'गति' संज्ञा होती है।

**अन्तर**—अपरिग्रहार्थक 'अन्तः' शब्द की 'गति' संज्ञा होती है।

**अन्तःशब्द**—'अन्तः' शब्द की अङ्, कि-विधि तथा णत्व के प्रसङ्ग में 'उपसर्ग' संज्ञा समझनी चाहिए।

---

(१) कस्यचित्कवेरयं प्रयोगः। सम्पूर्णोऽयं श्लोकः—चुम्बनसक्तः सोऽस्याः च्युतमूलं दशनमात्मनो वदने। जिह्वामूलस्पृष्टं खाडिति कृत्वा निरष्ठीवत्॥

(२) प्रीतिसम्भ्रमः इति पाठः क्वचित्।

## कणेमनसी श्रद्धाप्रतीघाते ॥ ६६ ॥

कणेशब्दो मनस्शब्दश्च श्रद्धाप्रतीघाते गतिसंज्ञौ भवतः। कणेहत्य पयः पिबति। मनोहत्य पयः पिबति। तावत्पिबति यावदस्याभिलाषो निवृत्तः। श्रद्धा प्रतिहतेत्यर्थः॥ श्रद्धाप्रतीघात इति किम्? कणे हत्वा गतः, मनो हत्वा गतः॥

## पुरोऽव्ययम् ॥ ६७ ॥

असिप्रत्ययान्तः पुरः शब्दोऽव्ययम्, स गतिसंज्ञो भवति। समासस्वरोपचाराः प्रयोजनम्। पुरस्कृत्य। पुरस्कृतम्। यत्पुरस्करोति। अव्ययमिति किम्? पूः, पुरौ, पुरः कृत्वा काण्डं गतः॥

## अस्तं च ॥ ६८ ॥

अस्तंशब्दो मकारान्तोऽव्ययमनुपलब्धौ वर्त्तते, स गतिसंज्ञो भवति। अस्तंगत्य सविता पुनरुदेति। अस्तंगतानि धनानि। यदस्तं गच्छति। अव्ययमित्येव—अस्तं काण्डम्। क्षिप्तमित्यर्थः॥

## अच्छ गत्यर्थवदेषु ॥ ६९ ॥

अच्छशब्दोऽव्ययमभिशब्दस्यार्थे वर्त्तते। स गत्यर्थेषु धातुषु वदतौ च गतिसंज्ञो भवति। अच्छगत्य। अच्छगतम्। यदच्छगच्छति। वदतौ—अच्छोद्य, अच्छोदितम्, यदच्छवदति। अव्ययमित्येव—उदकमच्छं गच्छति॥

## अदोऽनुपदेशे ॥ ७० ॥

अदः शब्दस्त्यदादिषु पठ्यते, सोऽनुपदेशे गतिसंज्ञो भवति। उपदेशः परार्थः प्रयोगः। स्वयमेव तु यदा बुद्ध्या परामृशति तदा नास्त्युपदेश इति सोऽस्य विषयः। अदःकृत्य। अदः कृतम्। यददः करोति। अनुपदेश इति किम्? अदः कृत्वा काण्डं गत इति परस्य कथयति॥

## तिरोऽन्तर्द्धौ ॥ ७१ ॥

अन्तर्द्धिर्व्यवधानम्। तत्र तिरः शब्दो गतिसंज्ञो भवति। तिरोभूय। तिरोभूतम्। यत् तिरोभवति। अन्तर्द्धाविति किम्? तिरो भूत्वा स्थितः। पार्श्वतो(१)भूत्वेत्यर्थः॥

## विभाषा कृञि ॥ ७२ ॥

अन्तर्द्धाविति वर्तते। प्राप्तविभाषेयम्। तिरःशब्दः करोतौ परतो विभाषा गतिसंज्ञो भवति। तिरः कृत्य। तिरस्कृत्य। तिरस्कृतम्। यत्तिरस्करोति। तिरस्कृत्वा। तिरः कृत्वा। अन्तर्द्धावित्येव—तिरः कृत्वा काष्ठं तिष्ठति॥

---

कणेमनसी—श्रद्धाप्रतीघातार्थ में 'कणे' तथा 'मनस्' शब्दों की 'गति' संज्ञा होती है।

पुरोऽव्ययम्—असिप्रत्ययान्त अतएव अव्यय पुरस् शब्द की 'गति' संज्ञा होती है।

अस्तं च—अव्यय 'अस्तम्' शब्द की भी 'गति' संज्ञा होती है।

अच्छ—गत्यर्थक एवम् 'वद्' धातुओं से पूर्व-युक्त 'अच्छ' शब्द की 'गति' संज्ञा होती है।

अदोऽनुपदेशे—अनुपदेशार्थक 'अदस्' शब्द की 'गति' संज्ञा होती है।

तिरोऽन्तर्धौ—व्यवधानार्थक 'तिरस्' शब्द की 'गति' संज्ञा होती है।

विभाषा—'कृञ्' धातु के परे 'तिरस्' शब्द की विकल्प से 'गति' संज्ञा होती है।

---

(१) पाठोऽयं न्यासपदमंजरीसंवादान्मूलग्रन्थस्थो न प्रतीयते।

## उपाजेऽन्वाजे ॥ ७३ ॥

विभाषा कृञीति वर्तते। उपाजेऽन्वाजेशब्दौ विभक्तिप्रतिरूपकौ निपातौ दुर्बलस्य सामर्थ्याधाने वर्त्तेते। तौ कृञि विभाषा गतिसंज्ञौ भवतः। उपाजेकृत्य। उपाजे कृत्वा। अन्वाजेकृत्य। अन्वाजे कृत्वा॥

## साक्षात्प्रभृतीनि च ॥ ७४ ॥

विभाषा कृञीति वर्त्तते। साक्षात्प्रभृतीनि शब्दरूपाणि कृञि विभाषा गतिसंज्ञानि भवन्ति। ॐसाक्षात्प्रभृतिषु च्व्यर्थवचनम्ॐ। साक्षात्कृत्य। साक्षात्कृत्वा। मिथ्याकृत्य। मिथ्या कृत्वा। साक्षात्। मिथ्या। चिन्ता। भद्रा। लोचना। विभाषा। संपत्का। आस्था। अमा। श्रद्धा। प्राजर्या। प्राजरुहा। वीजर्या। वीजरुहा। संसर्या। अर्थे। लवणम्। उष्णम्। शीतम्। उदकम्। आर्द्रम्। गतिसंज्ञासंनियोगेन लवणादीनां मकारान्तत्वं निपात्यते। अग्नौ। वशे। विकम्पने। विहसने। प्रहसने। प्रतपने। प्रादुस्। नमस्। आविस्॥

## अनत्याधान उरसिमनसी ॥ ७५ ॥

विभाषा कृञीति वर्त्तते। अत्याधानमुपश्लेषणम्, तदभावेऽनत्याधाने उरसिमनसी शब्दौ विभाषा कृञि गतिसंज्ञौ भवतः। उरसिकृत्य। उरसि कृत्वा। मनसिकृत्य। मनसि कृत्वा। अनत्याधान इति किम्? उरसि कृत्वा पाणिं शेते॥

## मध्येपदेनिवचने च ॥ ७६ ॥

विभाषा कृञीति वर्त्तते। चकारादनत्याधान इति च। मध्ये, पदे, निवचने इत्येते शब्दा अनत्याधाने विभाषा कृञि गतिसंज्ञा भवन्ति। मध्येकृत्य। मध्येकृत्वा। पदेकृत्य। पदेकृत्वा। निवचनं वचनाभावः। निवचनेकृत्य। निवचनेकृत्वा। वाचं नियम्येत्यर्थः। अनत्याधान इत्येव—हस्तिनः पदे कृत्वा शिरः शेते॥

## नित्यं हस्ते पाणावुपयमने ॥ ७७ ॥

कृञीति वर्तते। हस्ते, पाणौ इत्येतौ शब्दौ कृञि नित्यं गतिसंज्ञौ भवत उपयमने। उपयमनं दारकर्म। पाणौकृत्य। हस्तेकृत्य। दारकर्म कृत्वेत्यर्थः। उपयमन इति किम्? हस्ते कृत्वा कार्षापणं गतः॥

## प्राध्वं बन्धने ॥ ७८ ॥

---

**उपाजे**—'कृञ्' धातु के परे 'उपाजे' तथा 'अन्वाजे' शब्दों की 'गति' संज्ञा होती है।

**साक्षात्**—'कृञ्' धातु के परे 'साक्षात्' आदि शब्दों की विकल्प से 'गति' संज्ञा होती है।

**साक्षात्प्रभृतिषु**—'साक्षात्' आदि शब्दों की 'च्वि' प्रत्यय के अर्थ (अभूततद्भाव) में ही 'गति' संज्ञा समझनी चाहिए।

**अनत्याधाने**—उपश्लेषण के अभाव होने पर 'कृञ्' धातु के परे 'उरसि' तथा '**मनसि**' शब्दों की 'गति' संज्ञा होती है।

**मध्ये**—उपश्लेषणाभाव होने पर 'कृञ्' धातु के परे 'मध्ये', 'पदे' तथा 'निवचने' **शब्दों की** 'गति' संज्ञा होती है।

**नित्यं हस्ते**—विवाह अर्थ में 'हस्ते' तथा 'पाणौ' शब्दों की नित्य 'गति' संज्ञा **होती है 'कृञ्'** धातु के परे रहने पर।

**प्राध्वं बन्धने**—बन्धनहेतुक आनुकूल्य होने पर 'कृञ्' धातु के परे **'प्राध्वम्' शब्द की 'गति'** संज्ञा होती है।

कृञीति वर्त्तते। 'प्राध्वम्' इति मकारान्तमव्ययम् आनुकूल्ये वर्त्तते। तदानुकूल्यं बन्धनहेतुकं यदा भवति तदा 'प्राध्वम्'-शब्दः कृञि नित्यं गतिसंज्ञो भवति। प्राध्वंकृत्य। बन्धन इति किम्? प्राध्वं कृत्वा शकटं गतः॥

## जीविकोपनिषदावौपम्ये ॥ ७९ ॥

कृञीति वर्त्तते। जीविका, उपनिषदित्येतौ शब्दौ औपम्ये विषये कृञि गतिसंज्ञौ भवतः। जीविकाकृत्य। उपनिषत्कृत्य। औपम्य इति किम्? जीविकां कृत्वा गतः॥

## ते प्राग् धातोः ॥ ८० ॥

ते गत्युपसर्गसंज्ञका धातोः प्राक् प्रयोक्तव्याः। तथा चैवोदाहृताः। तेग्रहणमुपसर्गार्थम्। गतयो ह्यनन्तराः॥

## छन्दसि परेऽपि ॥ ८१ ॥

प्राक् प्रयोगे प्राप्ते छन्दसि परेऽप्यनुज्ञायन्ते। छन्दसि विषये गत्युपसर्गसंज्ञकाः परेऽपि पूर्वेऽपि प्रयोक्तव्याः। न च परेषां प्रयुज्यमानानां संज्ञाकार्यं किञ्चिदस्ति। केवलं परप्रयोगेऽपि क्रियायोग एषामस्तीति ज्ञाप्यते। याति नि हस्तिना। नियाति हस्तिना। हन्ति नि मुष्टिना। निहन्ति मुष्टिना॥

## व्यवहिताश्च ॥ ८२ ॥

व्यवहिताश्च गत्युपसर्गसंज्ञकाश्छन्दसि दृश्यन्ते। आ मन्द्रैरिन्द्र हरिभिर्याहि। मयूररोमभिः आयाहि॥

## कर्मप्रवचनीयाः ॥ ८३ ॥

कर्मप्रचनीया इत्यधिकारो वेदितव्यः। यानित ऊर्ध्वमनुक्रमिष्यामः कर्मप्रवचनीयसंज्ञास्ते वेदितव्याः "अधिरीश्वरे" इति यावद्वक्ष्यति। कर्मप्रवचनीयप्रदेशाः—"कर्मप्रवचनीययुक्ते द्वितीया" इत्येवमादयः॥

## अनुर्लक्षणे ॥ ८४ ॥

अनुशब्दो लक्षणे द्योत्ये कर्मप्रवचनीयसंज्ञो भवति। शाकल्यस्य संहितामनु प्रावर्षत्। अनड्वाहयज्ञमन्वसिञ्चत्। अगस्त्यमन्वसिञ्चन् प्रजाः। किमर्थमिदमुच्यते, यावता "लक्षणेत्थम्भूताख्यान" इति सिद्धैवानोः कर्मप्रवचनीयसंज्ञा? हेत्वर्थं तु वचनम्, (१)बाधित्वा द्वितीयैव यथा स्यात्॥

## तृतीयार्थे ॥ ८५ ॥

---

**जीविकोप**—औपम्य अर्थ में 'कृञ्' धातु के परे 'जीविका' तथा 'उपनिषत्' शब्दों की 'गति' संज्ञा होती है।

**ते प्राक्**—गति-संज्ञक तथा उपसर्ग-संज्ञक शब्दों का प्रयोग धातु से अव्यवहित पूर्व में करना चाहिए।

**छन्दसि**—परन्तु वेद में धातु के अव्यवहित उत्तर में भी उनका प्रयोग किया जाता है।

**व्यवहिताश्च**—वेद में गति एवं उपसर्गों का व्यवहित प्रयोग भी देखा जाता है।

**कर्मप्रवचनीयाः**—यहाँ से आगे 'कर्मप्रवचनीय' का अधिकार है।

**अनुर्लक्षणे**—लक्षण के द्योतित होने पर 'अनु' की 'कर्मप्रवचनीय' संज्ञा होती है।

**तृतीयार्थे**—तृतीया के अर्थ के द्योतित होने पर 'अनु' की 'कर्मप्रवचनीय' संज्ञा होती है।

---

(१) अत्र न्यासपर्यालोचनया हेतौ तृतीयायां प्राप्तायां ताम् इति पाठोऽनुमीयते।

अनुशब्दस्तृतीयार्थे द्योत्ये कर्मप्रवचनीयसंज्ञो भवति। नदीमन्ववसिता सेना। पर्वतमन्ववसिता सेना। पर्वतेन सम्बद्धेत्यर्थः॥

## हीने॥ ८६॥

हीन इति न्यून उच्यते, स चोत्कृष्टापेक्षः। तेनेयं हीनोत्कृष्टसम्बन्धे संज्ञा विज्ञायते। हीने द्योत्येऽयमनुः कर्मप्रवचनीयसंज्ञो भवति। अनुशाकटायनं वैयाकरणाः। अन्वर्जुनं योद्धारः॥

## उपोऽधिके च॥ ८७॥

उपशब्दः अधिके हीने च द्योत्ये कर्मप्रवचनीयसंज्ञो भवति। उपखार्यां(१) द्रोणः। उपनिष्के कार्षापणम्। हीने–उपशाकटायनं वैयाकरणाः॥

## अपपरी वर्जने॥ ८८॥

अप परी शब्दौ वर्जने द्योत्ये कर्मप्रवचनीयसंज्ञौ भवतः। प्रकृतेन सम्बन्धिना कस्यचिदनभिसम्बन्धो वर्जनम्। अप–अप त्रिगर्त्तेभ्यो वृष्टो देवः। परि–परि त्रिगर्त्तेभ्यो वृष्टो देवः। वर्जन इति किम्? ओदनं परिषिञ्चति॥

## आङ् मर्यादावचने॥ ८९॥

आङित्येष शब्दो मर्यादावचने कर्मप्रवचनीयसंज्ञो भवति। अवधिर्मर्यादा। वचनग्रहणादभिविधिरपि गृह्यते। आ पाटलिपुत्राद् वृष्टो देवः। आकुमारं यशः पाणिनेः। आ सांकाश्यात्। आ मथुरायाः। मर्यादावचन इति किम्? ईषदर्थे क्रियायोगे च मा भूत्॥

## लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः॥ ९०॥

लक्षणे इत्थंभूताख्याने भागे वीप्सायां च विषयभूतायां प्रति परि अनु इत्येते कर्मप्रवचनीसंज्ञा भवन्ति। लक्षणे तावत्–वृक्षं प्रति विद्योतते विद्युत्, वृक्षं परि, वृक्षमनु। इत्थंभूताख्याने–साधुर्देवदत्तो मातरं प्रति, मातरं परि, मातरमनु। भागे—यदत्र मां प्रति स्यात्, मां परि स्यात्, मामनु स्यात्। वीप्सायाम्–वृक्षं वृक्षं प्रति सिञ्चति। लक्षणादिष्विति किम्? ओदनं परिषिञ्चति। अथ परिशब्दयोगे पञ्चमी कस्मान्न भवति, "पञ्चम्यपाङ्परिभिः" इति? वर्जनविषये सा विधीयते, अपशब्दसाहचर्यात्॥

## अभिरभागे॥ ९१॥

---

**हीने**—हीनता के द्योतित होने पर 'अनु' की 'कर्मप्रवचनीय' संज्ञा होती है।

**उपोधिके**—हीनता तथा अधिकता के द्योतित होने पर 'उप' की 'कर्मप्रवचनीय' संज्ञा होती है।

**अपपरी**—वर्जन के द्योतित होने पर 'अप' तथा 'परि' की 'कर्मप्रवचनीय' संज्ञा होती है।

**आङ् मर्यादा**—मर्यादा तथा अभिविधि के द्योतित होने पर 'आङ्' की 'कर्मप्रवचनीय' संज्ञा होती है।

**लक्षणेत्थम्**—लक्षण, इत्थम्भूताख्यान, भाग और वीप्सा के द्योतित होने पर 'प्रति', 'परि' तथा 'अनु' की 'कर्मप्रवचनीय' संज्ञा होती है।

**अभिरभागे**—भाग अर्थ को छोड़कर अन्य ( लक्षण, इत्थम्भूताख्यान तथा वीप्सा ) अर्थों के द्योतित होने पर 'अभि' की 'कर्मप्रवचनीय' संज्ञा होती है।

---

( १ ) यस्मादधिकमित्यादिना सप्तमी। ( श्रीना० )।

लक्षणादिष्वेव भागवर्जितेष्वभिः कर्मप्रवचनीयसंज्ञो भवति। वृक्षमभि विद्योतते। साधुर्देवदत्तो मातरमभि। वृक्षमभि सिञ्चति। अभाग इति किम्? भागः स्वीक्रियमाणोऽशः, यदत्र(१) ममाभिष्यात् तद्दीयताम्। यदत्र मम भवति तद्दीयतामित्यर्थः॥

## प्रतिः प्रतिनिधिप्रतिदानयोः ॥ ९२ ॥

मुख्यसदृशः प्रतिनिधिः। दत्तस्य प्रतिनिर्यातनं प्रतिदानम्। प्रतिनिधिविषये प्रतिदानविषये च प्रतिः कर्मप्रवचनीयसंज्ञो भवति। अभिमन्युरर्जुनतः प्रति। माषानस्मै तिलेभ्यः प्रति यच्छति॥

## अधिपरी अनर्थकौ ॥ ९३ ॥

अधिपरी शब्दौ अनर्थकौ अनर्थान्तरवाचिनौ कर्म्मप्रवचनीयसंज्ञौ भवतः। कुतोऽध्यागच्छति। कुतः पर्यागच्छति। गत्युपसर्गसंज्ञाबाधनार्था कर्मप्रवचनीयसंज्ञा विधीयते॥

## सुः पूजायाम् ॥ ९४ ॥

सुशब्दः पूजायामर्थे कर्मप्रवचनीयसंज्ञो भवति। सु सिक्तं भवता। सु स्तुतं भवता। शोभनार्थः स्तूयते। उपसर्गसंज्ञाश्रयं षत्वं न भवति। पूजायामिति किम्? सुषिक्तं किं तवात्र॥

## अतिरतिक्रमणे च ॥ ९५ ॥

अतिशब्दः अतिक्रमणे चकारात् पूजायां च कर्मप्रवचनीयसंज्ञो भवति। निष्पन्नेऽपि वस्तुनि क्रियाप्रवृत्तिरतिक्रमणम्। अति सिक्तमेव भवता। अति स्तुतमेव भवता। पूजायाम्—अति सिक्तं भवता, अति स्तुतं भवता। शोभनं कृतमित्यर्थः॥

## अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु ॥ ९६ ॥

पदार्थे सम्भावनेऽन्ववसर्गे गर्हायां समुच्चये च वर्तमानः अपिः कर्मप्रवचनीयसंज्ञो भवति। पदान्तरस्याप्रयुज्यमानस्यार्थः पदार्थः। सर्पिषोऽपि स्यात्। मधुनोऽपि स्यात्। मात्रा बिन्दुः स्तोकमित्यस्यार्थे अपिशब्दो वर्त्तते। सम्भावनमधिकार्थवचनेन शक्तेरप्रतिघाताविष्करणम्—अपि सिञ्चेन्मूलकसहस्रम्। अपि स्तुयाद्राजानम्। अन्ववसर्गः कामचारानुज्ञा(२)—अपि सिञ्च, अपि स्तुहि। गर्हा निन्दा—धिग् जाल्मं देवदत्तम् अपि सिञ्चेत पलाण्डुम्, अपि स्तुयाद् वृषलम्। समुच्चये—अपि सिञ्च, अपि स्तुहि। सिञ्च च स्तुहि च। उपसर्गसंज्ञाबाधनात् षत्वं न भवति॥

---

**प्रति**—प्रतिनिधि तथा प्रतिदान अर्थों के द्योतित होने पर 'प्रति' की 'कर्मप्रवचनीय' संज्ञा होती है।

**अधिपरी**—अनर्थक 'अधि' तथा 'परि' की 'कर्मप्रवचनीय' संज्ञा होती है।

**सुः पूजायाम्**—पूजा अर्थ में 'सु' की 'कर्मप्रवचनीय' संज्ञा होती है।

**अतिरतिक्रमणे**—अतिक्रमण तथा पूजा अर्थों में 'अति' की 'कर्मप्रवचनीय' संज्ञा होती है।

**अपिः पदार्थ**—पदार्थ, सम्भावना, अन्ववसर्ग, गर्हा (निन्दा) तथा समुच्चय अर्थों में 'अपि' की 'कर्मप्रवचनीय' संज्ञा होती है।

---

(१) मामिति न्यासे पाठः।

(२) अभ्यनुज्ञानम् इति न्यासे।

## अधिरीश्वरे ॥ ९७ ॥

ईश्वरः स्वामी, स च स्वमपेक्षते। तदयं स्वस्वामिकसम्बन्धे कर्मप्रवचनीयसंज्ञो भवति कदाचित् स्वामिनः कर्मप्रवचनीयविभक्तिः सप्तमी भवति, कदाचित् स्वात्। अधि ब्रह्मदत्ते पञ्चालाः। अधि पञ्चालेषु ब्रह्मदत्तः॥

## विभाषा कृञि ॥ ९८ ॥

अधिः करोतौ विभाषा कर्मप्रवचनीयसंज्ञो भवति। यदत्र मामधिकरिष्यति। कर्मप्रवचनीयसंज्ञापक्षे गतिसंज्ञाबाधनात्"तिङि चोदात्तवति" इति निघातो न भवति॥

## लः परस्मैपदम् ॥ ९९ ॥

ल इति षष्ठी आदेशापेक्षा। लादेशाः परस्मैपदसंज्ञा भवन्ति। तिप्, तस्, झि। सिप्, थस्, थ। मिप्, वस्, मस्, शतृक्वसू च। परस्मैपदप्रदेशाः—"सिचि वृद्धिः परस्मैपदेषु" इत्येवमादयः॥

## तङानावात्मनेपदम् ॥ १०० ॥

तङिति प्रत्याहारो नवानां वचनानाम्। आन इति शानच्कानचोर्ग्रहणम्। पूर्वेण परस्मैपदसंज्ञायां प्राप्तायां तङानयोरात्मनेपदसंज्ञा विधीयते। त, आताम्, झ। थास्, आथाम्, ध्वम्। इट्, वहि, महिङ्। आनः खल्वपि—शानच्कानचौ। ल इत्येव—कतीह निघ्नानः। आत्मनेपदप्रदेशाः—"अनुदात्तङित आत्मनेपदम्" इत्येवमादयः॥

## तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः ॥ १०१ ॥

तिङोऽष्टादश प्रत्ययाः, नव परस्मैपदसंज्ञकाः नवाऽऽत्मनेपदसंज्ञकाः, तत्र परस्मैपदेषु त्रयस्त्रिकाः यथाक्रमं प्रथममध्यमोत्तमसंज्ञा भवन्ति, आत्मनेपदेष्वपि त्रयस्त्रिकाः प्रथममध्यमोत्तमसंज्ञा भवन्ति। तिप्, तस्, झि इति प्रथमः। सिप्, थस्, थ इति मध्यमः। मिप्, वस्, मस् इत्युत्तमः। आत्मनेपदेषु—त, आताम्, झ इति प्रथमः। थास्, आथाम्, ध्वम् इति मध्यमः। इट्, वहि, महिङ् इत्युत्तमः। प्रथममध्यमोत्तमप्रदेशाः—"शेषे प्रथमः" इत्येवमादयः॥

## तान्येकवचनद्विवचनबहुवचनान्येकशः ॥ १०२ ॥

तान्येकवचनद्विवचनबहुवचनसंज्ञानि भवन्ति(१) एकशः एकैकं पदम्। तिबित्येकवचनम्। तसिति द्विवचम्। झि इति बहुवचनम्। एवं सर्वत्र। एकवचनद्विवचनबहुवचनप्रदेशाः—"बहुषु बहुवचनम्" इत्येवमादयः॥

---

**अधिरीश्वरे**—स्वस्वाभिभावसम्बन्धार्थ में 'अधि' की 'कर्मप्रवचनीय' संज्ञा होती है।

**विभाषा**—'कृञ्' धातु के परे 'अधि' की विकल्प से 'कर्मप्रवचनीय' संज्ञा होती है।

**लः परस्मैपदम्**—लकारस्थानीय आदेशों की 'परस्मैपद' संज्ञा होती है।

**तङाना**—तङ्प्रत्याहार तथा शानच् एवं कानच् की 'आत्मनेपद' संज्ञा होती है।

**तिङस्त्रीणि**—परस्मैपद तिङ् तथा आत्मनेपद तिङ् के तीन-तीन 'त्रिक' क्रमशः प्रथम, मध्यम तथा उत्तम कहलाते है।

**तान्येकवचन**—प्रत्येक त्रिक क्रमशः एकवचन, द्विवचन तथा बहुवचन कहलाते हैं।

---

(१) तानि तिङस्त्रीणि त्रीणि भूयैकवचनद्विवचनबहुवचनसंज्ञानि भवन्ति इत्यपि पाठः।

## सुपः ॥ १०३ ॥

तिङां त्रिकेष्वेकवचनादिसंज्ञा विहिताः, सम्प्रति सुपां त्रिकेषु विधीयन्ते। सुपश्च त्रीणि त्रीणि पदानि एकश एकवचनद्विवचनबहुवचनसंज्ञानि भवन्ति। सु इत्येकवचनम्। औ इति द्विवचनम्। जसिति बहुवचनम्। एवं सर्वत्र ॥

## विभक्तिश्च ॥ १०४ ॥

त्रीणि त्रीणीत्यनुवर्तते(१)। त्रीणि त्रीणि विभक्तिसंज्ञानि (२)भवन्ति सुपस्तिङश्च। विभक्तिप्रदेशाः—"अष्टन आ विभक्तौ" इत्येवमादयः ॥

## युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ॥ १०५ ॥

लस्येत्यधिकृत्य सामान्येन तिबादयो विहिताः, तेषामयं पुरुषनियमः क्रियते। युष्मद्युपपदे सति व्यवहिते चाव्यवहिते सति समानाऽधिकरणे समानाभिधेये तुल्यकारके स्थानिनि प्रयुज्यमानेऽप्यप्रयुज्यमानेऽपि मध्यमपुरुषो भवति। त्वं पचसि। युवां पचथः। यूयं पचथ। अप्रयुज्यमानेऽपि—पचसि, पचथः, पचथ ॥

## प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ॥ १०६ ॥

प्रहासः परिहासः क्रीडा। प्रहासे गम्यमाने मन्योपपदे धातोर्मध्यमपुरुषो भवति, मन्यतेश्चोत्तमः, स चैकवद्भवति। एहि मन्ये ओदनं भोक्ष्यस इति, नहि भोक्ष्यसे, भुक्तः सोऽतिथिभिः। एहि मन्ये रथेन यास्यसि, न हि यास्यसि, यातस्तेन ते पिता। मध्यमोत्तमयोः प्राप्तयोः उत्तममध्यमौ विधीयेते। प्रहास इति किम्? एहि मन्यसे ओदनं भोक्ष्य इति सुष्ठ मन्यसे साधु मन्यसे ॥

## अस्मद्युत्तमः ॥ १०७ ॥

उत्तमपुरुषो नियम्यते। अस्मद्युपपदे समानाभिधेये प्रयुज्यमानेऽप्यप्रयुज्यमानेऽपि उत्तमपुरुषो भवति। अहं पचामि। आवां पचावः। वयं पचामः। अप्रयुज्यमानेऽपि—पचामि, पचावः, पचामः ॥

## शेषे प्रथमः ॥ १०८ ॥

शेष इति मध्यमोत्तमविषयादन्य उच्यते। यत्र युष्मदस्मदी समानाधिकरणे उपपदे न स्तः, तत्र शेषे प्रथमपुरुषो भवति। पचति। पचतः। पचन्ति ॥

---

**सुपः**—सुप् के त्रिक भी क्रमशः एकवचन, द्विवचन तथा बहुवचन कहलाते हैं।

**विभक्तिश्च**—सुप् तथा तिङ् के सभी तीन-तीन (सभी) त्रिकों की 'विभक्ति' संज्ञा भी होती है।

**युष्मद्युपपदे**—तिङ्समानाधिकरण युष्मद् के व्यवहित या अव्यवहित रूप में प्रयुज्यमान अथवा अप्रयुज्यमान होने पर मध्यम पुरुष होता है।

**प्रहासे च**—परिहास के गम्यमान होने पर 'मन्' धातु के उपपदत्व में धातु से मध्यम पुरुष होता है और 'मन्' धातु से उत्तमपुरुषीय एकवचन होता है।

**अस्मद्युत्तमः**—तिङ्समानाधिकरण अस्मद् के व्यवहित या अव्यवहित रूप मे प्रयुज्यमान अथवा अप्रयुज्यमान होने पर उत्तम पुरुष होता है।

**शेषे प्रथमः**—मध्यम तथा उत्तम के क्षेत्र से अतिरिक्त स्थान में प्रथम पुरुष होता है।

---

(१) अत्र त्रीणि त्रीणि इत्यस्यानुवृत्तेः प्रयोजनं चिन्त्यम्। (श्रीना०)

(२) अत्र सर्वत्र 'संज्ञाश्च' इति पाठः, परन्तु युक्तत्वात् 'संज्ञानि' इत्यस्माभिः परिवर्त्तितः। (श्रीना०)

## परः सन्निकर्षः संहिता ॥ १०९ ॥

परशब्दोऽतिशये वर्त्तते। सन्निकर्षः प्रत्यासत्तिः। परो यः सन्निकर्षो वर्णानामर्धमात्रा-कालव्यवधानं स संहितासंज्ञो भवति। दध्यत्र। मध्वत्र। संहिताप्रदेशाः—"संहितायाम्" इत्येवमादयः॥

## विरामोऽवसानम् ॥ ११० ॥

विरतिर्विरामः, विरम्यतेऽनेनेति वा विरामः, सोऽवसानसंज्ञो भवति। दधि। मधु। वृक्षः। प्लक्षः। अवसानप्रदेशाः—"खरवसानयोर्विसर्जनीयः" इत्येवमादयः॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ प्रथमाध्यायस्य चतुर्थः पादः ॥१।४॥
समाप्तश्चायं प्रथमाध्यायः॥



---

**परः सन्निकर्षः**—वर्णों के पर सन्निकर्ष, अर्थात् आधी मात्रा के उच्चारण-कालव्यवधान, की 'संहिता' संज्ञा होती है।

**विरामोऽवसानम्**—विराम की 'अवसान' संज्ञा होती है।

प्रथमाध्याय का चतुर्थ पाद समाप्त हुआ।



# अथ द्वितीयाध्यायस्य प्रथमः पादः

## समर्थः पदविधिः ॥ १ ॥

परिभाषेयम् । यः कश्चिदिह शास्त्रे पदविधिः श्रूयते स समर्थो वेदितव्यः । विधीयत इति विधिः, पदानां विधिः पदविधिः । स पुनः समासादिः । समर्थः शक्तः । विग्रहवाक्यार्थाभिधाने यः शक्तः स समर्थो वेदितव्यः । अथवा समर्थपदाश्रयत्वात् समर्थः । समर्थानां पदानां सम्बद्धार्थानां संसृष्टार्थानां विधिर्वेदितव्यः । वक्ष्यति—"द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः"—कष्टं श्रितः कष्टश्रितः । समर्थग्रहणं किम्? पश्य देवदत्त—कष्टं श्रितो विष्णुमित्रो गुरुकुलम् । "तृतीया तत्कृतार्थेन गुणवचनेन"—शङ्कुलया खण्डः शङ्कुलाखण्डः । समर्थग्रहणं किम् ? किं त्वं करिष्यसि शङ्कुलया, खण्डो देवदत्त उपलेन । "चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः"—यूपाय दारु यूपदारु । समर्थग्रहणं किम् ? गच्छ त्वं यूपाय, दारु देवदत्तस्य गेहे । "पञ्चमी भयेन"—वृकेभ्यो भयं वृकभयम् । समर्थग्रहणं किम् ? रक्ष त्वं मां वृकेभ्यः, भयं देवदत्तस्य यज्ञदत्तात् । "षष्ठी"—राज्ञः पुरुषो राजपुरुषः । समर्थग्रहणं किम् ? भार्या राज्ञः, पुरुषो देवदत्तस्य । "सप्तमी शौण्डैः"—अक्षेषु शौण्डः अक्षशौण्डः । समर्थग्रहणं किम् ? शक्तस्त्वमक्षेषु, शौण्डः पिबति पानागारे । पदग्रहणं किम् ? वर्णविधौ समर्थपरिभाषा मा भूत्—तिष्ठतु दध्यशान त्वं शाकेन । तिष्ठतु कुमारी च्छत्रं हर देवदत्तात् । यणादेशो नित्यश्च तुग् भवति ॥

## सुबामन्त्रिते पराङ्गवत् स्वरे ॥ २ ॥

सुबन्तमामन्त्रिते परतः परस्याङ्गवद्भवति स्वरे स्वरलक्षणे कर्त्तव्ये । तादात्म्यातिदेशोऽयम् । सुबन्तमामन्त्रितमनुप्रविशति । वक्ष्यति—"आमन्त्रितस्य च" । आमन्त्रितस्यादिरुदात्तो भवति । स ससुप्कस्यापि यथा स्यात् । कुण्डेनाटन् । परशुना वृश्चन् । मद्राणां राजन् । कश्मीराणां राजन् । सुबिति किम् ? पीडये पीड्यमान । आमन्त्रित इति किम् ? गेहे गार्ग्यः । परग्रहणं किम् ? पूर्वस्य मा भूत् । देवदत्त कुण्डेनाटन् । अङ्गग्रहणं किम् ? यथा मृत्पिण्डीभूतः स्वरं लभेत । उभयोराद्युदात्तत्वं मा भूत् । वत्करणं किम् ? स्वाश्रयमपि यथा स्यात् । आं कुण्डेनाटन् । "आम एकान्तरमामन्त्रितमनन्तिके" इत्येकान्तरता भवति । स्वर इति किम् ? कूपे सिञ्चन् , चर्म नमन् । षत्वणत्वे प्रति पराङ्गवन्न भवति । ॐसुबन्तस्य पराङ्गवद्भावे समानाधिकरणस्योपसंख्यानमनन्तरत्वात्ॐ । तीक्ष्णया सूच्या सीव्यन् । तीक्ष्णेन परशुना वृश्चन् । ॐअव्ययानां प्रतिषेधो वक्तव्यःॐ । उच्चैरधीयान । नीचैरधीयान ॥

---

**समर्थः**—इस शास्त्र में उपदिष्ट पद-सम्बन्धी विधि को समर्थाश्रित समझना चाहिए ।

**सुबामन्त्रिते**—स्वर कर्त्तव्य होने पर आमन्त्रित पद के परे रहते पूर्व सुबन्त पद परवर्त्ती आमन्त्रित पद के अङ्ग के समान कार्य का आश्रय होता है ।

**सुबन्तस्य**—सुबन्त को पराङ्गवद्भाव करते समय उसके समानाधिकरण शब्दों का भी समावेश अपेक्षित है, क्योंकि अव्यवधान के अभाव होने से उसके पराङ्गवद्भाव की सूत्र से प्राप्ति नहीं है ।

**अव्ययानाम**—अव्ययात्मक सुबन्त को उपर्युक्त पराङ्गवद्भाव नही होता है ।

## प्राक् कडारात् समासः ॥ ३ ॥

कडारसंशब्दनात् प्राग् (१)यानित ऊर्ध्वमनुक्रमिष्यामस्ते समाससंज्ञा वेदितव्याः। वक्ष्यति—"यथाऽसादृश्ये"। यथावृद्धं ब्राह्मणानामन्त्रयस्व। प्राग्वचनं संज्ञासमावेशार्थम्। समासप्रदेशाः—"तृतीयासमासे" इत्येवमादयः॥

## सह सुपा ॥ ४ ॥

सुबिति वर्तते। सहेति सुपेति च त्रयमप्यधिकृतं वेदितव्यम्। यदित ऊर्ध्वमनुक्रमिष्यामस्तत्रेदमुपस्थितं द्रष्टव्यम्। वक्ष्यति—"द्वितीया श्रित"इति। द्वितीयान्तं श्रितादिभिः सह समस्यते। कष्टं श्रितः कष्टश्रितः। सहग्रहणं योगविभागार्थम्, तिङापि सह यथा स्यात्—अनुव्यचलत्, अनुप्रावर्षत्॥

## अव्ययीभावः ॥ ५ ॥

अव्ययीभाव इत्यधिकारो वेदितव्यः। यानित ऊर्ध्वमनुक्रमिष्यामोऽव्ययीभावसंज्ञास्ते वेदितव्याः। वक्ष्यति—"यथाऽसादृश्ये"। यथावृद्धं ब्राह्मणानामन्त्रयस्व। अन्वर्थसंज्ञा चेयं महती पूर्वपदार्थप्राधान्यमव्ययीभावस्य दर्शयति। अव्ययीभावप्रदेशाः "अव्ययीभावश्च" इत्येवमादयः॥

## अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु ॥ ६ ॥

सुप् सुपेति च वर्त्तते। विभक्त्यादिष्वर्थेषु यदव्ययं वर्त्तते तत्समर्थेन सुबन्तेन सह समस्यते, अव्ययीभावश्च समासो भवति। वचनग्रहणं प्रत्येकं संबध्यते। विभक्तिवचने तावत्—स्त्रीस्वधिकृत्य कथा प्रवर्त्तते अधिस्त्रि। अधिकुमारि। सप्तम्यर्थे यदव्ययं तद् विभक्तिवचनम्। समीपवचने—कुम्भस्य समीपम् उपकुम्भम्। उपमणिकम्। समृद्धिः ऋद्धेराधिक्यम्, समृद्धिर्मद्राणाम् सुमद्रम्, सुमगधं वर्त्तते। व्यृद्धिः ऋद्धेरभावः। गवदिकानामृद्धेरभावः दुर्गवदिकम्, दुर्यवनं वर्त्तते। अर्थाभावो वस्तुनोऽभावः—अभावो मक्षिकाणाम् निर्मक्षिकम्। निर्मशकं वर्त्तते। अत्ययो भूतत्वमतिक्रमः—अतीतानि हिमानि निर्हिमम्, निःशीतं वर्त्तते। असंप्रति उपभोगस्य वर्त्तमानकालप्रतिषेधः। अतितैसृकम्(२)। तैसृकमाच्छादनम्, तस्यायमुपभोगकालो न भवतीत्यर्थः। शब्दप्रादुर्भावः प्रकाशता शब्दस्य—इतिपाणिनि। तत्पाणिनि। पाणिनिशब्दो लोके प्रकाशत इत्यर्थः। पश्चात्—अनुरथं पादातम्। रथानां पश्चात्। यथार्थे यदव्ययं वर्त्तते तत्समस्यते। योग्यता वीप्सा पदार्थानतिवृत्तिः सादृश्यं चेति यथार्थाः। योग्यतायाम्—अनुरूपम्। रूपयोग्यं भवतीत्यर्थः। वीप्सायाम्—अर्थमर्थं प्रति प्रत्यर्थम्। पदार्थानतिवृत्तौ—यथाशक्ति। आनुपूर्व्यमनुक्रमः—अनुज्येष्ठं प्रविशन्तु भवन्तः। ज्येष्ठानुपूर्व्या भवन्तः प्रविशन्त्वित्यर्थः। यौगपद्यमेककालता—सचक्रं

---

**प्राक् कडारात्**—यहाँ से आगे 'कडाराः कर्मधारये' तक जिनकी विधि होगी उन सब की 'समास' संज्ञा होती है।

**सह सुपा**—यहाँ से उत्तर 'सह' तथा 'सुपा' का अधिकार है।

**अव्ययीभावः**—यहाँ से 'अव्ययीभाव' का अधिकार है।

**अव्ययम्**—विभक्ति एवं समीप आदि अर्थों में वर्त्तमान अव्यय का सुबन्त के साथ अव्ययीभाव समास होता है।

---

(१) अधिकारोऽयम्, कडाराः कर्मधारये इति वक्ष्यति प्रागेतस्मात् इति पाठान्तरम्।

(२) तैष्टकम् इति पाठः।

धेहि। युगपच्चक्रं धेहीत्यर्थः। सादृश्यं तुल्यता। किमर्थमिदमुच्यते, यथार्थ इत्येव सिद्धम्? गुणभूतेऽपि सादृश्ये यथा स्यात्—सदृशः सख्या ससखि। संपत्तिरनुरूप आत्मभावः समृद्धेरन्यः। सब्रह्म बाभ्रवाणाम्। सक्षत्रं शालङ्कायनानाम्। साकल्यमशेषता। सतृणमभ्यवहरति। सबुसम्। न किञ्चिदभ्यवहार्यं परित्यजतीत्ययमर्थोऽधिकार्थवचनेन प्रतिपाद्यते। अन्तवचने। अन्त इति परिग्रहापेक्षया समाप्तिरुच्यते। साग्न्यधीते सेष्टिपशुबन्धम्। पशुबन्धान्तमधीत इत्यर्थः। इयं समाप्तिरसकलेऽप्यध्ययने भवतीति साकल्यात्पृथगुच्यते॥

## यथाऽसादृश्ये ॥ ७ ॥

यथेत्येतदव्ययमसादृश्ये वर्त्तमानं सुपा सह समस्यते, अव्ययीभावश्च समासो भवति। यथावृद्धं ब्राह्मणानामन्त्रयस्व। ये ये वृद्धाः यथावृद्धम्। यथाध्यापकम्। असादृश्य इति किम्? यथा देवदत्तस्तथा यज्ञदत्तः। यथार्थे यदव्ययमिति पूर्वेणैव सिद्धे समासे वचनमिदं सादृश्यप्रतिषेधार्थम्॥

## यावदवधारणे ॥ ८ ॥

यावदित्येतदव्ययमवधारणे वर्त्तमानं सुपा सह समस्यते, अव्ययीभावश्च समासो भवति। (१)अवधारणमियत्तापरिच्छेदः। यावदमत्रं ब्राह्मणानामन्त्रयस्व। यावन्त्यमत्राणि सम्भवन्ति पञ्च षड् वा तावत आमन्त्रयस्व। अवधारण इति किम्? यावद्दत्तं तावद् भुक्तम्। नावधारयामि कियन्मया भुक्तमिति(२)॥

## सुप्प्रतिना मात्रार्थे ॥ ९ ॥

मात्रा बिन्दुः स्तोकमल्पमिति पर्यायाः। मात्रार्थे वर्त्तमानेन प्रतिना सह सुबन्तं समस्यते, अव्ययीभावश्च समासो भवति। अस्त्यत्र किञ्चित् शाकम्(३) शाकप्रति। सूपप्रति। मात्रार्थे इति किम्? वृक्षं प्रति विद्योतते। सुबिति वर्तमाने पुनः सुब्ग्रहणमव्ययनिवृत्त्यर्थम्॥

## अक्षशलाकासंख्याः परिणा ॥ १० ॥

(४)अक्षशब्दः शलाकाशब्दः संख्याशब्दश्च परिणा सह समस्यन्ते, अव्ययीभावश्च समासो भवति। कितवव्यवहारे समासोऽयमिष्यते। पञ्चिका नाम द्यूतं पञ्चभिरक्षैः शलाकाभिर्वा भवति, तत्र यदा सर्वे उत्तानाः पतन्त्यवाञ्चो वा पातयिता जयति, तस्यैवास्य विघातोऽन्यथा (५) पाते सति जायते। अक्षेणेदं न तथा वृत्तं यथा पूर्वे जये। अक्षपरि। शलाकापरि। एकपरि। द्विपरि। त्रिपरि। परमेण(६) चतुष्परि॥

---

**यथाऽसादृश्ये**—असादृश्यार्थक 'यथा' अव्यय शब्द का सुबन्त के साथ अव्ययीभाव समास होता है।

**यावदव**—अवधारणार्थक 'यावत्' अव्यय का सुबन्त के साथ अव्ययीभाव समास होता है।

**सुप्प्रतिना**—अल्पार्थक 'प्रति' का सुबन्त के साथ अव्ययीभाव समास होता है।

**अक्षशलाका**—अक्ष शब्द, शलाका शब्द तथा संख्यावाचक शब्दों का 'परि' के साथ अव्ययीभाव समास होता है।

---

(१) अवधारणम् इति–इयतो भाव इयत्ता, परिमाणम्, तस्याः परिच्छेदो निश्चयः।

(२) कियद्दत्तं त्वया कियद्भुक्तं मया इति पाठः।

(३) अत्र सूप इति पदमंजर्याम्।

(४) अक्षशलाकासंख्याशब्दा इति पदमंजर्याम् पाठः।

(५) विघातः—पराजयः। कचित् विपात इति पाठः। तत्रापि स एवार्थः।

(६) अतिशयेनेत्यर्थः। परेणेति न्याससम्मतः पाठः।

पञ्चसु (१)त्वेकरूपासु जय एव भविष्यति।
अक्षादयस्तृतीयान्ताः पूर्वोक्तस्य यथा न तत्।
कितवव्यवहारे च एकत्वेऽक्षशलाकयोः॥

## विभाषा ॥ ११ ॥

विभाषेत्ययमधिकारो वेदितव्यः। यदित ऊर्द्ध्वमनुक्रमिष्यामस्तद्विभाषा भवति। वक्ष्यति—"अपपरिबहिरञ्चवः पञ्चम्या"। अपत्रिगर्तं वृष्टो देवः। अप त्रिगर्तेभ्यः॥

## अपपरिबहिरञ्चवः पञ्चम्या ॥ १२ ॥

अप, परि, बहिस्, अञ्चु इत्येते सुबन्ताः पञ्चम्यन्तेन सह विभाषा समस्यन्ते, अव्ययीभावश्च समासो भवति। अप त्रिगर्त्तं वृष्टो देवः, अप त्रिगर्त्तेभ्यः। परि त्रिगर्त्तम्, परि त्रिगर्त्तेभ्यः। बहिर्ग्रामम्, बहिर्ग्रामात्। प्राग्ग्रामम्, प्राग् ग्रामात्। बहिःशब्दयोगे पञ्चमीभावस्यैतदेव ज्ञापकम्॥

## आङ् मर्यादाभिविध्योः ॥ १३ ॥

आङित्येतन्मर्यादायामभिविधौ च वर्त्तमानं पञ्चम्यन्तेन सह विभाषा समस्यते, अव्ययीभावश्च समासो भवति। आपाटलिपुत्रं वृष्टो देवः, आ पाटलिपुत्रात्। अभिविधौ—आकुमारं यशः पाणिनेः, आ कुमारेभ्यः॥

## लक्षणेनाभिप्रती आभिमुख्ये ॥ १४ ॥

लक्षणं चिह्नम्, तद्वाचिना सुबन्तेन सहाभिप्रती शब्दावाभिमुख्ये वर्त्तमानौ विभाषा समस्येते, अव्ययीभावश्च समासो भवति। अभ्यग्नि शलभाः पतन्ति, अग्निमभि। प्रत्यग्नि, अग्निं प्रति। अग्निं लक्ष्यीकृत्य अभिमुखं पतन्तीत्यर्थः। लक्षणेनेति किम्? स्रुघ्नं प्रति गतः। प्रतिनिवृत्य स्रुघ्नमेवाभिमुखं गतः। अभिप्रती इति किम्? येनाग्निस्तेन गतः। आभिमुख्य इति किम्? अभ्यङ्का गावः, प्रत्यङ्का गावः। नवाङ्का इत्यर्थः॥

## अनुर्यत्समया ॥ १५ ॥

समया समीपम्। अनुर्यस्य(२)समीपवाची तेन लक्षणभूतेन सह विभाषा समस्यते, अव्ययीभावश्च समासो भवति। अनुवनमशनिर्गतः। अनुरिति किम्? वनं समया। यत्समयेति किम्? वृक्षमनु विद्योतते विद्युत्। "अव्ययं विभक्तिसमीप" इत्येव सिद्धे पुनर्वचनं विभाषार्थम्॥

---

**विभाषा**—यहाँ से 'विभाषा' ( विकल्प ) का अधिकार है।

**अपपरि**—अप, परि, बहिस् तथा अञ्चु, इन सुबन्तों का पञ्चम्यन्त शब्द के साथ विकल्प से अव्ययीभाव समास होता है।

**आङ् मर्यादा**—मर्यादा तथा अभिविधि में वर्त्तमान 'आङ्' का पञ्चम्यन्त के साथ विकल्प से अव्ययीभाव समास होता है।

**लक्षणे**—चिह्नार्थक सुबन्त के साथ आभिमुख्यार्थक 'अभि' और 'प्रति' का विकल्प से अव्ययीभाव समास होता है।

**अनुर्यत्समया**—जिसका सामीप्यवाचक 'अनु' हो उस लक्षकवाची सुबन्त के साथ 'अनु' का विकल्प से अव्ययीभाव समास होता है।

---

( १ ) एकरूपेषु इति पाठान्तरम्।

( २ ) अत्र यत्समयावाची इति पदमञ्जर्यां पाठः।

## यस्य चायामः ॥ १६ ॥

लक्षणेनेति वर्तते। आयामो दैर्घ्यम्। अनुर्यस्यायामवाची तेन लक्षणभूतेन सह विभाषा समस्यते, अव्ययीभावश्च समासो भवति। अनुगङ्गं वाराणसी। अनुयमुनं मथुरा। यमुनाऽऽयामेन मथुराऽऽयामो लक्ष्यते। आयाम इति किम्? वृक्षमनु विद्योतते विद्युत्॥

## तिष्ठद्गुप्रभृतीनि च ॥ १७ ॥

तिष्ठद्ग्वादयः समुदाया एव निपात्यन्ते। तिष्ठद्गुप्रभृतीनि शब्दरूपाणि अव्ययीभावसंज्ञानि भवन्ति। तिष्ठद्गु कालविशेषः, तिष्ठन्ति गावो यस्मिन् काले दोहनाय स तिष्ठद्गु कालः। खलेयवादीनि प्रथमान्तानि विभक्त्यन्तरेण नैव सम्बध्यन्ते, अन्यपदार्थे च काले वर्त्तन्ते। चकारोऽवधारणार्थः। अपरः समासो न भवति—परमतिष्ठद्गिवति। तिष्ठद्गु। वहद्गु। आयतीगवम्। खलेबुसम्। खलेयवम्। लूनयवम्। लूयमानयवम्। पूतयवम्। पूयमानयवम्। संहृतयवम्। संह्रियमाणयवम्। संहृतबुसम्। संह्रियमाणबुसम्। एते कालशब्दाः। (१)समभूमि। समपदाति। सुषमम्। विषमम्। निष्षमम्। दुष्षमम्। अपरसमम्। आयतीसमम्। प्राह्णम्। प्ररथम्। प्रमृगम्। प्रदक्षिणम्। अपरदक्षिणम्। सम्प्रति। असम्प्रति। पापसमम्। पुण्यसमम्॥ "इच् कर्मव्यतिहारे" (ग० सू०)—दण्डादण्डि, मुसलामुसलि॥

## पारे मध्ये षष्ठ्या वा ॥ १८ ॥

षष्ठीसमासे प्राप्ते तदपवादोऽव्ययीभाव आरभ्यते। वावचनाच्च षष्ठीसमासोऽपि पक्षेऽभ्यनुज्ञायते। पारमध्यशब्दौ षष्ठ्यन्तेन सह विभाषा समस्येते, अव्ययीभावश्च समासो भवति। तत्सन्नियोगेन चानयोरेकारान्तत्वं निपात्यते। पारं गङ्गायाः पारेगङ्गम्। मध्यं गङ्गाया मध्येगङ्गम्। षष्ठीसमासपक्षे—गङ्गापारम्, गङ्गामध्यम्। महाविभाषया वाक्यविकल्पः क्रियते॥

## संख्या वंश्येन ॥ १९ ॥

विद्यया जन्मना वा प्राणिनामेकलक्षण(२)सन्तानो वंश इत्यभिधीयते। तत्र भवो वंश्यः। तद्वाचिना सुबन्तेन सह संख्या समस्यते, अव्ययीभावश्च समासो भवति। द्वौ मुनी व्याकरणस्य वंश्यौ द्विमुनि व्याकरणस्य। त्रिमुनि व्याकरणस्य। यदा तु विद्यया तद्वतामभेदविवक्षा तदा सामानाधिकरण्यं भवति—द्विमुनि व्याकरणम्, त्रिमुनि व्याकरणमिति। जन्मना-एकविंशति भारद्वाजम्॥

---

**यस्य चायामः**—जिसके आयाम (दैर्घ्य) का वाचक 'अनु' हो उस लक्षणवाची सुबन्त के साथ 'अनु' का विकल्प से अव्ययीभाव समास होता है।

**तिष्ठद्गु**—तिष्ठद्गु' आदि शब्दों का निपातन किया जाता है और ये शब्द अव्ययीभावसंज्ञक होते हैं।

**पारे**—षष्ठ्यन्त शब्द के साथ 'पार' तथा 'मध्य' शब्दों का विकल्प से अव्ययीभाव समास होता है।

**संख्या**—विद्या-प्रयुक्त अथवा जन्म-प्रयुक्त वंश में सञ्जात पुरुषों के अर्थ में वर्तमान सुबन्त पद के साथ संख्यावाचक शब्दों का विकल्प से अव्ययीभाव समास होता है।

---

(१) समभूमि, समपदाति, संभूमि, संपदाति इति पाठः।

(२) एकलक्षण एकस्वभावः। सन्तानः प्रबन्धः। सन्तानिनामेकलक्षणत्वात् सन्तानानामेकलक्षणत्वम्।

## नदीभिश्च ॥ २० ॥

संख्येत्यनुवर्त्तते । नदीवचनैः शब्दैः सह संख्या समस्यते, अव्ययीभावश्च समासो भवति । समाहारे चायमिष्यते । सप्तगङ्गम् । द्वियमुनम् । पञ्चनदम् । सप्तगोदावरम् ॥

## अन्यपदार्थे च संज्ञायाम् ॥ २१ ॥

संख्येति निवृत्तम्, नदीग्रहणमनुवर्त्तते । नदीभिः सह सुबन्तमन्यपदार्थे वर्त्तमानं संज्ञायां विषये समस्यते, अव्ययीभावश्च समासो भवति । विभाषाधिकारेऽपि नित्यसमास एवायम् । नहि वाक्येन संज्ञा गम्यते । उन्मत्तगङ्गं नाम देशः । लोहितगङ्गम् । कृष्णगङ्गम् । शनैर्गङ्गम् । अन्यपदार्थ इति किम् ? कृष्णवेण्णा । संज्ञायामिति किम् ? शीघ्रगङ्गो देशः ॥

## तत्पुरुषः ॥ २२ ॥

तत्पुरुष इति संज्ञाऽधिक्रियते प्राग् बहुव्रीहेः, यानित ऊर्ध्वमनुक्रमिष्यामस्तत्पुरुषसंज्ञास्ते वेदितव्याः । वक्ष्यति—"द्वितीया श्रितातीतपतित" इति । कष्टश्रितः । पूर्वाचार्यसंज्ञा चेयं महती, तदङ्गीकरणमुपाधेरपि तदीयस्य परिग्रहार्थम्—उत्तरपदार्थप्रधानस्तत्पुरुष(१) इति । तत्पुरुषप्रदेशाः—"तत्पुरुषे कृति बहुलम्" इत्येवमादयः ॥

## द्विगुश्च ॥ २३ ॥

द्विगुश्च समासस्तत्पुरुषसंज्ञो भवति । द्विगोस्तत्पुरुषत्वे समासान्ताः प्रयोजनम् । पञ्चराजम्(२), दशराजम् । द्व्यहः, त्र्यहः । पञ्चगवम्, दशगवम् ॥

## द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ॥ २४ ॥

सुप् सुपेति वर्त्तते, तस्य विशेषणमेतद् द्वितीया । द्वितीयान्तं सुबन्तं श्रितादिभिः सह समस्यते, तत्पुरुषश्च समासो भवति । कष्टं श्रितः कष्टश्रितः । नरकश्रितः । अतीत—कान्तारमतीतः कान्तारातीतः । पतित—नरकं पतितः नरकपतितः । गत—ग्रामं गतः ग्रामगतः । अत्यस्त—तरङ्गानत्यस्तः तरङ्गात्यस्तः, तुहिनात्यस्तः । प्राप्त—सुखं प्राप्तः सुखप्राप्तः । आपन्न—सुखमापन्नः सुखापन्नः, दुःखापन्नः ॥ *श्रितादिषु गमिगाम्यादीनामुपसंख्यानम्* । ग्रामं गमी ग्रामगमी । ग्रामं गामी ग्रामगामी । ओदनं बुभुक्षुः ओदनबुभुक्षुः ॥

---

**नदीभिश्च**—नदीवाचक शब्दों के साथ संख्यावाचक शब्दों का अव्ययीभाव समास होता है विकल्प से ।

**अन्यपदार्थे**—अन्यपदार्थ के गम्यमान होने पर भी (समस्त पद के) संज्ञावाचक होने पर नदीवाचक शब्दों के साथ सुबन्त का विकल्प से अव्ययीभाव समास होता है ।

**तत्पुरुषः**—'बहुव्रीहि' के अधिकार से पहले यहाँ से उत्तर विहित समास की 'तत्पुरुष' संज्ञा होती है ।

**द्विगुश्च**—'द्विगु' समास की भी 'तत्पुरुष' संज्ञा होती है ।

**द्वितीया**—द्वितीयान्त सुबन्त का श्रित आदि शब्दों के साथ विकल्प से तत्पुरुष समास होता है ।

**श्रितादिषु**—श्रितादियों में गमी आदि शब्दों का भी समावेश समझना चाहिए ।

---

(१) एतच्च प्रायिकम्, उन्मत्तगङ्गमित्यादेस्तत्पुरुषाधिकारपाठेऽपि अन्यपदार्थप्रधानत्वात् । (श्रीना०)

(२) यद्यप्यत्र 'पञ्चराजी' 'दशराजी' इति मुद्रितपुस्तकेषु पाठः उपलभ्यते, व्याख्यातश्चैष पाठो न्यासे तथापि भाष्यपदमञ्जर्यनुरोधात् परिवर्तितः । पदमञ्जर्यामस्य पाठस्य अपपाठत्वं स्पष्टमेवोक्तम् ।

## स्वयं क्तेन ॥ २५ ॥

स्वयमेतदव्ययमात्मनेत्यस्यार्थे वर्त्तते। तस्य द्वितीयया(१)सम्बन्धोऽनुपपन्न इति द्वितीयाग्रहणमुत्तरार्थमनुवर्त्तते। स्वयमित्येतत्सुबन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। स्वयन्धौतौ पादौ। स्वयंविलीनमाज्यम्। ऐकपद्यमैकस्वर्यं च समासत्वाद्भवति॥

## खट्वा क्षेपे ॥ २६ ॥

खट्वाशब्दो द्वितीयान्तः क्तान्तेन सह क्षेपे गम्यमाने समस्यते, तत्पुरुषश्च समासो भवति। क्षेपो निन्दा, स च समासार्थ एव, तेन विभाषाधिकारेऽपि नित्यसमास एवायम्, नहि वाक्येन क्षेपो गम्यते। खट्वारोहणं चेह विमार्गप्रस्थानस्योपलक्षणम्। सर्व एवाविनीतः खट्वारूढ इत्युच्यते। खट्वारूढो जाल्मः। खट्वाप्लुतः। अपथप्रस्थित इत्यर्थः। क्षेप इति किम्? खट्वामारूढः॥

## सामि ॥ २७ ॥

सामीत्येतदव्ययमर्द्धशब्दपर्यायः, तस्यासत्त्ववाचित्वात् द्वितीयया नास्ति सम्बन्धः। तत् सुबन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। सामिकृतम्। सामिपीतम्। सामिभुक्तम्। ऐकपद्यमैकस्वर्यं च समासत्वाद्भवति॥

## कालाः ॥ २८ ॥

द्वितीया, क्तेनेति च वर्त्तते। कालवाचिनः शब्दा द्वितीयान्ताः क्तान्तेन सह समस्यन्ते विभाषा, तत्पुरुषश्च समासो भवति। अनत्यन्तसंयोगार्थं वचनम्। काला इति न स्वरूपविधिः। षण्मुहूर्त्ताश्चराचराः। ते कदा (२)चिदहर्गच्छन्ति कदा चिद्रात्रिम्। अहरतिसृता मुहूर्त्ताः अहस्संक्रान्ताः। राव्यतिसृता मुहूर्त्ताः रात्रिसंक्रान्ताः। मासप्रमितश्चन्द्रमाः। मासं प्रमातुमारब्धः प्रतिपच्चन्द्रमा इत्यर्थः॥

## अत्यन्तसंयोगे च ॥ २९ ॥

काला इति वर्त्तते, क्तेनेति निवृत्तम्। अत्यन्तसंयोगः कृत्स्नसंयोगः, कालस्य स्वेन सम्बन्धिना व्याप्तिः। कालवाचिनः शब्दा द्वितीयान्ता अत्यन्तसंयोगे गम्यमाने सुपा सह समस्यन्ते विभाषा, तत्पुरुषश्च समासो भवति। मुहूर्तं सुखम् मुहूर्त्तसुखम्। सर्वरात्रकल्याणी। सर्वरात्रशोभना॥

---

**स्वयम्**—'स्वयम्' शब्द का क्तप्रत्ययान्त के साथ विकल्प से तत्पुरुष समास होता है।

**खट्वा**—निन्दा के गम्यमान होने पर द्वितीयान्त खट्वा शब्द का क्तप्रत्ययान्त शब्द के साथ विकल्प से तत्पुरुष समास होता है।

**सामि**—'सामि' इस सुबन्त का क्तप्रत्ययान्त के साथ विकल्प से तत्पुरुष समास होता है।

**कालाः**—कालवाचक द्वितीयान्त शब्दों का क्तप्रत्ययान्त शब्दों के साथ तत्पुरुष समास होता है विकल्प से।

**अत्यन्त**—अत्यन्त-संयोग के गम्यमान होने पर भी कालवाचक द्वितीयान्त शब्दों का क्तप्रत्ययान्त शब्दों के साथ विकल्प से तत्पुरुष समास होता है।

---

(१) सह सम्बन्धो नोपपद्यते इति न्यासे पाठः।
(२) कदाचिदहः—उत्तरायणे। कदाचिद्रात्रिम्–दक्षिणायने।

## तृतीया तत्कृतार्थेन गुणवचनेन ॥ ३० ॥

सुप् सुपेति वर्त्तते, तस्य विशेषणमेतत्(१) तृतीया। तृतीयान्तं सुबन्तं गुणवचनेनाऽर्थशब्देन च सह समस्यते, तत्पुरुषश्च समासो भवति। कीदृशेन गुणवचनेन? तत्कृतेन, तदर्थकृतेन, तृतीयान्तार्थकृतेनेति यावत्। शङ्कुलया खण्डः शङ्कुलाखण्डः। किरिणा काणः किरिकाणः। अर्थशब्देन-धान्येनार्थः धान्यार्थः। तत्कृतेनेति किम्? अक्ष्णा काणः। गुणवचनेनेति किम्? गोभिर्वपावान्(२)॥

## पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ॥ ३१ ॥

पूर्व, सदृश, सम, ऊनार्थ, कलह, निपुण, मिश्र, श्लक्ष्ण, एतैः सह तृतीयान्तं समस्यते, तत्पुरुषश्च समासो भवति। अस्मादेव वचनात् पूर्वादिभिर्योगे तृतीया भवति, हेतौ वा द्रष्टव्या। पूर्व-मासेन पूर्वः मासपूर्वः, संवत्सरपूर्वः। सदृश-मातृसदृशः, पितृसदृशः। सम-मातृसमः, पितृसमः। ऊनार्थ-माषोनम्, कार्षापणोनम्; माषविकलम्, कार्षापणविकलम्। कलह-असिकलहः, वाक्कलहः। निपुण-वामनिपुणः, आचारनिपुणः। मिश्र-गुडमिश्रः, तिलमिश्रः। श्लक्ष्ण-आचारश्लक्ष्णः॥ ॐपूर्वादिष्ववरस्योपसंख्यानम्ॐ। मासेनावरः मासावरः। संवत्सरावरः॥

## कर्त्तृकरणे कृता बहुलम् ॥ ३२ ॥

तृतीयेति वर्त्तते। कर्त्तरि करणे च या तृतीया तदन्तं कृदन्तेन सह समस्यते बहुलम्, तत्पुरुषश्च समासो भवति। (३)सर्वोपाधिव्यभिचारार्थं बहुलग्रहणम्। कर्तरि-अहिना हतः अहिहतः। करणे—नखैर्निर्भिन्नो नखनिर्भिन्नः, परशुना छिन्नः परशुच्छिन्नः। कर्तृकरणे इति किम्? भिक्षाभिरुषितः। बहुलग्रहणं किम्? दात्रेण लूतवान्, परशुना छिन्नवान्। इह समासो न भवति। पादहारको गलेचोपक इति च भवति॥

## कृत्यैरधिकार्थवचने ॥ ३३ ॥

(४)स्तुतिनिन्दाप्रयुक्तमध्यारोपितार्थवचनमधिकार्थवचनम्। कर्तृकरणयोर्या तृतीया

---

**तृतीया**—तृतीयान्त सुबन्त का गुणवचन शब्द तथा अर्थ शब्द के साथ तत्पुरुष समास होता है विकल्प से।

**पूर्वसदृश**—पूर्व, सदृश, सम, ऊनार्थक, कलह, निपुण, मिश्र एवम् श्लक्ष्ण शब्दों के साथ तृतीयान्त पद का तत्पुरुष समास होता है विकल्प से।

**पूर्वादि**—पूर्व आदि शब्दों के बीच अवर शब्द का भी समावेश समझना चाहिए।

**कर्तृ**—कर्तृ तृतीयान्त तथा करण-तृतीयान्त शब्दों का कृदन्त शब्द के साथ बाहुल्येन तत्पुरुष समास होता है।

**कृत्यैरधि**—अधिकार्थवचन के गम्यमान होने पर कृत्यप्रत्ययान्त शब्दों के साथ कर्त्ता तथा करण में विहित तृतीया से युक्त शब्दों का विकल्प से तत्पुरुष समास होता है।

---

(१) अत्र मुद्रितपुस्तकेषु 'तृतीया' इति पाठो नोपलभ्यते तथाप्यौचित्यादुपन्यस्तम्। एवं चतुर्थी तदर्थादिष्वपि बोध्यम्।

(२) वपावान्—पीवरः।

(३) सर्वोपाधीति—अव्याप्त्यतिव्याप्तिपरिहारार्थमित्यर्थः।

(४) स्तुतिनिन्दाप्रयुक्तमिति—स्तुत्या निन्दया वा यत्प्रयुक्तं प्रवर्त्तितं तत्स्तुतिनिन्दाप्रयुक्तम्। तदर्थमुच्चारितमित्यर्थः। अध्यारोपितार्थवचनमिति—अध्यारोपितोऽर्थोऽसन्नेव बुद्धया समारोपितः, तस्य वचनम्।

तदन्तं सुबन्तं कृत्यैः सह समस्यतेऽधिकार्थवचने गम्यमाने विभाषा, तत्पुरुषश्च समासो भवति। कर्त्ता–काकपेया नदी, श्वलेह्यः कूपः। करणम्–बाष्पच्छेद्यानि तृणानि, कण्टकसंचेय ओदनः। पूर्वस्यैवायं प्रपञ्चः॥ ॐकृत्यग्रहणे यण्ण्यतोर्ग्रहणं कर्त्तव्यम्ॐ। इह मा भूत्— काकैः पातव्या इति॥

## अन्नेन व्यञ्जनम् ॥ ३४ ॥

तृतीयेति वर्त्तते। व्यञ्जनवाचि तृतीयान्तमन्नवाचिना सुबन्तेन सह समस्यते विभाषा, तत्पुरुषश्च समासो भवति। संस्कार्यमन्नम्, संस्कारकं व्यञ्जनम्। दध्ना उपसिक्त ओदनः दध्योदनः। क्षीरौदनः। वृत्तौ क्रियाया अन्तर्भावादन्नव्यञ्जनयोः सामर्थ्यम्॥

## भक्ष्येण मिश्रीकरणम् ॥ ३५ ॥

मिश्रीकरणवाचि तृतीयान्तं भक्ष्यवाचिना सुबन्तेन समस्यते, तत्पुरुषश्च समासो भवति। (१)खरविशदमभ्यवहार्यं भक्ष्यम्, तस्य संस्कारकं मिश्रीकरणम्। गुडेन मिश्रा धानाः गुडधानाः। गुडपृथुकाः। वृत्तौ क्रियाया अन्तर्भावात्पूर्वोत्तरपदयोः सामर्थ्यम्॥

## चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ॥ ३६ ॥

सुप् सुपेति वर्त्तते, तस्य विशेषणमेतच्चतुर्थी। तदिति सर्वनाम्ना चतुर्थ्यन्तस्यार्थः परामृश्यते। तस्मै इदं तदर्थम्। तदर्थ, अर्थ, बलि, हित, सुख, रक्षित, इत्येतैः सह चतुर्थ्यन्तं समस्यते, तत्पुरुषश्च समासो भवति। तदर्थेन प्रकृतिविकारभावे समासोऽयमिष्यते। यूपाय दारु यूपदारु। कुण्डलाय हिरण्यम् कुण्डलहिरण्यम्। इह न भवति— रन्धनाय स्थाली, अवहननायोलूखलमिति। चतुर्थी चास्मादेव ज्ञापकात्तादर्थ्ये भवति। ॐअर्थेन नित्यसमासवचनं सर्वलिङ्गता च वक्तव्याॐ। ब्राह्मणार्थं पयः। ब्राह्मणार्था यवागूः। बलि–कुबेराय बलिः कुबेरबलिः, महाराजबलिः। हित–गोहितम्, अश्वहितम्। सुख–गोसुखम्, अश्वसुखम्। रक्षित–गोरक्षितम्, अश्वरक्षितम्॥

## पञ्चमी भयेन ॥ ३७ ॥

सुप् सुपेति वर्त्तते, तस्य विशेषणमेतत् पञ्चमी। पञ्चम्यन्तं सुबन्तं भयशब्देन सुबन्तेन सह समस्यते विभाषा, तत्पुरुषश्च समासो भवति। वृकेभ्यो भयम् वृकभयम्। चौरभयम्। दस्युभयम्॥ ॐभयभीतभीतिभीभिरिति वक्तव्यम्ॐ। वृकेभ्यो भीतः वृक-

---

**कृत्यग्रहणे**—कृत्य-प्रत्ययों में 'यत्' तथा 'ण्यत्' के प्रसङ्ग में ही उपर्युक्त समास-विधान समझना चाहिए।

**अन्नेन**—व्यञ्जनवाचक तृतीयान्त शब्द का अन्नवाचक सुबन्त के साथ विकल्प से तत्पुरुष समास होता है।

**भक्ष्येण**—मिश्रीकरणार्थक तृतीयान्त पद का भक्ष्यार्थक सुबन्त के साथ विकल्प से तत्पुरुष समास होता है।

**चतुर्थी**—तदर्थ एवम् अर्थ, बलि, हित, सुख तथा रक्षित शब्दों के साथ चतुर्थ्यन्त पद का विकल्प से तत्पुरुषसमास होता है।

**अर्थेन**—अर्थ शब्द के साथ नित्यसमास तथा विशेष्यलिङ्गत्व का विधान समझना चाहिए।

**पञ्चमी**—भय शब्द के साथ पञ्चम्यन्त पद का विकल्प से तत्पुरुषसमास होता है।

**भयभीत**—भय, भीत, भीति तथा भी शब्दों के साथ पञ्चम्यन्त का उक्त समास समझना चाहिए।

---

(१) खरविशदमिति—खरं कठिनम्, विशदम् विभक्तावयवम्, खरं च तद्विशदं च खरविशदम् = हनुचलनेनादनीयमित्यर्थः।

भीतः। वृकभीतिः। वृकभीः। पूर्वस्यैवायं बहुलग्रहणस्य प्रपञ्चः। तथा ग्रामनिर्गतः, अधर्मजुगुप्सुरित्येवमादि सिद्धं भवति॥

## अपेतापोढमुक्तपतितापत्रस्तैरल्पशः॥ ३८॥

अपेत, अपोढ, मुक्त, पतित, अपत्रस्त, इत्येतैः सह पञ्चम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति। अपेत—सुखापेतः। अपोढ-कल्पनापोढः। मुक्त-चक्रमुक्तः। पतित-स्वर्गपतितः। अपत्रस्त-तरङ्गापत्रस्तः। अल्पश इति समासस्याल्पविषयतामाचष्टे। अल्पा(१) पञ्चमी समस्यते न सर्वा। प्रसादात्पतितः, भोजनादपत्रस्त इत्येवमादौ न भवति। "कर्तृकरणे कृता बहुलम्" इत्यस्यैवायं प्रपञ्चः॥

## स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन॥ ३९॥

स्तोक, अन्तिक, दूर, इत्येवमर्थाः शब्दाः कृच्छ्रशब्दश्च पञ्चम्यन्ताः क्तान्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति। स्तोक-स्तोकान्मुक्तः। अन्तिक-अन्तिकादागतः, अभ्याशादागतः। दूरादागतः, विप्रकृष्टादागतः। कृच्छ्रान्मुक्तः, कृच्छ्राल्लब्धः। "पञ्चम्याः स्तोकादिभ्यः" इत्यलुक्।❀शतसहस्रौ परेणेति वक्तव्यम्❀। शतात्परे परश्शताः। सहस्रात्परे परस्सहस्राः। राजदन्तादित्वात्परनिपातः। निपातनात्सुडागमः॥

## सप्तमी शौण्डैः॥ ४०॥

सप्तम्यन्तं शौण्डादिभिः सह समस्यते, तत्पुरुषश्च समासो भवति। अक्षेषु शौण्डोऽक्षशौण्डः। अक्षधूर्त्तः। अक्षकितवः। शौण्ड। धूर्त्त। कितव। व्याड। प्रवीण। संवीत। अन्तर। अन्तरशब्दस्त्वत्राधिकरणप्रधान एव पठ्यते। अधिपटु। पण्डित। कुशल। चपल। निपुण(२)। वृत्तौ प्रसक्तिक्रियाया अन्तर्भावादक्षादिषु अधिकरणे सप्तमी॥

## सिद्धशुष्कपक्वबन्धैश्च॥ ४१॥

सप्तमीति वर्तते। सिद्ध, शुष्क, पक्व, बन्ध, इत्येतैः सह सप्तम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति। (३) सांकाश्यसिद्धः। काम्पिल्यसिद्धः। शुष्क-आतपशुष्कः, छायाशुष्कः। पक्व—स्थालीपक्वः, कुम्भीपक्वः। बन्ध-चक्रबन्धः। बहुलग्रहणस्यैवायमुदाहरणप्रपञ्चः॥

---

**अपेतापोढ**—अपेत, अपोढ़, मुक्त, पतित तथा अपत्रस्त शब्दों के साथ पञ्चम्यन्त पद का विकल्प से तत्पुरुषसमास होता है।

**स्तोकान्तिक**—स्तोकार्थक, अन्तिकार्थक, दूरार्थक एवम् कृच्छ्र, इन पञ्चम्यन्त शब्दों का क्तप्रत्ययान्त शब्द के साथ तत्पुरुषसमास विकल्प से होता है।

**शतसहस्रौ**—पञ्चम्यन्त शत तथा सहस्र शब्दों का भी 'पर' शब्द के साथ तत्पुरुषसमास समझना चाहिए।

**सप्तमी**—शौण्ड आदि शब्दों के साथ सप्तम्यन्त पद का तत्पुरुषसमास होता है।

**सिद्धशुष्क**—सिद्ध, शुष्क, पक्व तथा बन्ध शब्दों के साथ सप्तम्यन्त पद का तत्पुरुषसमास होता है।

(१) अल्पा पंचमीति। अल्पाभ्यः प्रकृतिभ्य उत्पन्नेत्यर्थः।

(२) संव्याड, मन्थ, समीर, एते शब्दा अपि क्वचिद् दृश्यन्ते।

(३) सांकाश्य इति। संकाशेन निर्वृत्तं वनं साङ्काश्यम्। कम्पिलेन निर्वृत्तं वनं काम्पिल्यम्। तत्र तपसा सिद्ध इत्यर्थः।

## ध्वाङ्क्षेण क्षेपे ॥ ४२ ॥

ध्वाङ्क्षेणेत्यर्थग्रहणम् । ध्वाङ्क्षवाचिना सह सप्तम्यन्तं सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति, क्षेपे गम्यमाने । तीर्थे ध्वाङ्क्ष इव तीर्थध्वाङ्क्षः । अनवस्थित इत्यर्थः । तीर्थकाकः । तीर्थवायसः । क्षेप इति किम् ? तीर्थे ध्वाङ्क्षस्तिष्ठति ॥

## कृत्यैर्ऋणे ॥ ४३ ॥

सप्तमीति वर्तते । कृत्यप्रत्ययान्तैः सह सप्तम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति, ऋणे गम्यमाने । यत्प्रत्ययेनैवेष्यते(१) । मासे देयमृणं मासदेयम् । संवत्सरदेयम् । त्र्यहदेयम् । ऋणग्रहणं(२) नियोगोपलक्षणार्थम्, तेनेहापि समासो भवति—पूर्वाह्णे गेयं साम, प्रातरध्येयोऽनुवाकः । ऋण इति किम् ? मासे देया भिक्षा ॥

## संज्ञायाम् ॥ ४४ ॥

संज्ञायां विषये सप्तम्यन्तं सुपा सह समस्यते, तत्पुरुषश्च समासो भवति । संज्ञा समुदायोपाधिः । तेन नित्यसमास एवायम् , न हि वाक्येन संज्ञा गम्यते । अरण्येतिलकाः । अरण्येमाषाः । वनेकिंशुकाः । वनेबिल्वकाः । कूपेपिशाचकाः । "हलदन्तात् सप्तम्याः संज्ञायाम्" इत्यलुक् ॥

## क्तेनाहोरात्रावयवाः ॥ ४५ ॥

अहरवयवा रात्र्यवयवाश्च सप्तम्यन्ताः क्तान्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति । पूर्वाह्णकृतम् । अपराह्णकृतम् । पूर्वरात्रकृतम् । अपररात्रकृतम् । अवयवग्रहणं किम् ?(३) अहनि भुक्तम् , रात्रौ वृत्तम् । बहुलग्रहणाद् रात्रिवृत्तम् , सन्ध्यागर्जितमित्यादयः ॥

## तत्र ॥ ४६ ॥

तत्रेत्येतत् सप्तम्यन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति । तत्रभुक्तम् । तत्रकृतम् । तत्रपीतम् । ऐकपद्यमैकस्वर्यं च समासत्वाद्भवति ॥

---

**ध्वांक्षेण**—निन्दा के गम्यमान होने पर ध्वांक्षार्थक शब्द के साथ सप्तम्यन्त पद का तत्पुरुषसमास होता है ।

**कृत्यैर्ऋणे**—ऋण के गम्यमान होने पर कृत्यप्रत्ययान्त शब्दों के साथ सप्तम्यन्त पद का तत्पुरुषसमास होता है ।

**संज्ञायाम्**—समस्त पद के द्वारा संज्ञा के प्रतीयमान होने पर सप्तम्यन्त पद का सुबन्त पद के साथ तत्पुरुषसमास नित्य होता है ।

**क्तेनाहो**—दिन के अवयवों के वाचक तथा रात्रि के अवयवों के वाचक शब्दों का क्तप्रत्यान्त शब्द के साथ तत्पुरुष समास होता है ।

**तत्र**—'तत्र' पद का क्तप्रत्यान्त शब्द के साथ तत्पुरुषसमास होता है ।

---

(१) यत्प्रत्ययान्तेनैवेति पदमंजर्याम् । यत्प्रत्ययान्तेनैव समास इष्यते इति न्यासे पाठः ।

(२) नियोगोऽवश्यम्भावः ।

(३) अवयवग्रहणं किम् ? उलूककैरामरणे: विशाची यदभाषत । एवतु ते दिवावृत्तं रात्रौ वृत्तं च द्रक्ष्यसि इति पाठान्तरम् । अयमेव पाठः न्यासपदमंजर्योर्दृश्यते ।

## क्षेपे ॥ ४७ ॥

क्षेपो निन्दा। क्षेपे गम्यमाने सप्तम्यन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। अवतप्तेनकुलस्थितं तवैतत्। चापलमेतत्, अनवस्थितत्वं तवैतदित्यर्थः। उदकेविशीर्णम्। प्रवाहेमूत्रितम्। भस्मनिहुतम्। निष्फलं यत्क्रियते तदेवमुच्यते। "तत्पुरुषे कृति बहुलम्" इत्यलुक्॥

## पात्रेसमितादयश्च ॥ ४८ ॥

समुदाया एव निपात्यन्ते। पात्रेसमितादयः शब्दास्तत्पुरुषसंज्ञा भवन्ति क्षेपे गम्यमाने। ये चात्र क्तान्तेन सह समस्तास्तेषां पूर्वेणैव सिद्धे पुनः पाठो युक्तारोह्यादिपरिग्रहार्थः—पूर्वपदाद्युदात्तत्वं यथा स्यादिति। युक्तारोह्यादिषु हि पात्रेसमितादयश्चेति पठ्यन्ते। पात्रेसमिताः। पात्रेबहुलाः। अवधारणेन क्षेपो गम्यते। पात्र एव समिताः, न पुनः कचित्कार्य इति। उदुम्बरमशकादिषु उपमया क्षेपः। मातरिपुरुष इति प्रतिषिद्धसेवनेन। पिण्डीशूरादिषु निरीहतया। अव्यक्तत्वाचाकृतिगणोऽयम्(१)। पात्रेसमिताः। पात्रेबहुलाः(२)। उदरकृमिः। कूपकच्छपः। कूपचूर्णकः। अवटकच्छपः। कूपमण्डूकः। कुम्भमण्डूकः। उदपानमण्डूकः। नगरकाकः। नगरवायसः। मातरिपुरुषः। पिण्डीशूरः। गेहेशूरः। गेहेनर्दी। गेहेक्ष्वेडी। गेहेविजिती। गेहेव्याडः। गेहेदृप्तः। गेहेधृष्टः। गर्भेतृप्तः। आखनिकबकः। गोष्ठेशूरः। गोष्ठविजिती। गोष्ठेक्ष्वेडी। गेहेमेही। गोष्ठेपटुः। गोष्ठेपण्डितः। गोष्ठेप्रगल्भः। कर्णेटिट्टिभः। कर्णचुरचुरा। चकारोऽवधारणार्थः। तेन समासान्तरं न भवति—परमपात्रेसमिता इति॥

## पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ॥ ४९ ॥

सुप् सुपेति वर्त्तते, तस्य विशेषणमेतत्। पूर्वकाल, एक, सर्व, जरत्, पुराण, नव, केवल इत्येते सुबन्ताः समानाधिकरणेन सुपा सह समस्यन्ते, तत्पुरुषश्च समासो भवति। भिन्नप्रवृत्तिनिमित्तस्य(३) शब्दस्यैकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्। पूर्वकाल इत्यर्थनिर्देशः, परिशिष्टानां स्वरूपग्रहणम्। (४)पूर्वकालोऽपरकालेन समस्यते। स्नातानुलिप्तः। कृष्टसमीकृतम्। दग्धप्ररूढम्। (५)एकशाटी। एकभिक्षा। सर्वदेवाः। सर्वमनुष्याः। जरद्धस्ती। जरद्गृष्टिः। जरद्वृत्तिः। पुराणान्नम्। पुराणावसथम्। नवान्नम्। नवावसथम्। केवलान्नम्। समानाधिकरणेनेति किम्? एकस्याः शाटी॥

क्षेपे—निन्दा के गम्यमान होने पर सप्तम्यन्त पद का क्तप्रत्ययान्त पद के साथ तत्पुरुष समास होता है।

**पात्रेसमि**—'पात्रेसमित' आदि समस्तपद का निपातन होता है।

**पूर्वकालैक**—पूर्वकालार्थक, एक, सर्व, जरत्, पुराण, नव तथा केवल शब्दों का समानाधिकरण सुबन्त के साथ तत्पुरुष समास होता है।

---

(१) अव्युत्पन्नत्वादाकृतिगणोऽयम् इति पाठान्तरम्।

(२) उदुम्बरमशकाः इत्यधिकं क्वचित्।

(३) भिन्नप्रवृत्तिनिमित्तप्रयुक्तस्येति पाठः।

(४) पूर्वकाल इति—पूर्वं कालोऽस्येति, पूर्वमनुष्ठित इत्यर्थः। अपरकालेन पश्चाद् अनुष्ठितेन।

(५) एकशाटी। एकतद्धिते चेति ह्रस्वः।

## दिक्संख्ये संज्ञायाम् ॥ ५० ॥

समानाधिकरणेनेत्यापादसमाप्तेरनुवर्त्तते। दिग्वाचिनः शब्दाः संख्या च समानाधिकरणेन सुबन्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति सञ्ज्ञायां विषये। पूर्वेषुकामशमी। अपरेषुकामशमी। संख्या-पञ्चाम्राः, सप्तर्षयः। सञ्ज्ञायामिति किम्? उत्तरा वृक्षाः, पञ्च ब्राह्मणाः॥

## तद्धितार्थोत्तरपदसमाहारे च ॥ ५१ ॥

दिक्संख्ये इत्यनुवर्त्तते। तद्धितार्थे विषये(१) उत्तरपदे च परतः समाहारे चाभिधेये दिक्संख्ये समानाधिकरणेन सुपा सह समस्येते, तत्पुरुषश्च समासो भवति। तद्धितार्थे तावत्—पूर्वस्यां शालायां भवः, "दिक्पूर्वपदात् सञ्ज्ञायां ञः"—पौर्वशालः, आपरशालः। उत्तरपदे-पूर्वशालाप्रियः, अपरशालाप्रियः। समाहारे दिक्शब्दो न सम्भवति। संख्या, तद्धितार्थे-पाञ्चनापितिः, पञ्चकपालः। उत्तरपदे-पञ्चगवधनः, दशगवधनः। समाहारे-पञ्चफली, दशपूली। पञ्चकुमारि, दशकुमारि। "स नपुंसकम्" इति नपुंसकत्वम्, "ह्रस्वो नपुंसके प्रातिपदिकस्य" इति ह्रस्वत्वम्॥

## संख्यापूर्वो द्विगुः ॥ ५२ ॥

"तद्धितार्थोत्तरपदसमाहारे च" इत्यत्र यः संख्यापूर्वः समासः स द्विगुसञ्ज्ञो भवति। तद्धितार्थे तावत्-पञ्चसु कपालेषु संस्कृतः पञ्चकपालः, दशकपालः। "संस्कृतं भक्षाः" इतीहाण्, तस्य "द्विगोर्लुगनपत्ये" इति लुक्। उत्तरपदे-पञ्चनावप्रियः। "नावो द्विगोः" इति समासान्तो भवति। समाहारे-पञ्चमूली। "द्विगोः" इति ङीप् भवति। द्विगुप्रदेशाः—"द्विगोः" इत्येवमादयः॥

## कुत्सितानि कुत्सनैः ॥ ५३ ॥

कुत्सितवाचीनि सुबन्तानि कुत्सनवचनैः सुबन्तैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति। (२)शब्दप्रवृत्तिनिमित्तकुत्सायामयं समास इष्यते। "विशेषणं विशेष्येण" इति परनिपाते प्राप्ते विशेष्यस्य पूर्वनिपातार्थ आरम्भः। वैयाकरणखसूचिः। निष्प्रतिभ इत्यर्थः। याज्ञिककितवः, अयाज्ययाजनतृष्णापरः(३)। मीमांसकदुर्दुरूढः, नास्तिकः। कुत्सितानीति किम्? वैयाकरणश्चौरः। न ह्यत्र वैयाकरणत्वं कुत्स्यते। कुत्सनैरिति किम्? कुत्सितो ब्राह्मणः॥

---

**दिक्संख्ये**—दिग्वाचक तथा संख्यावाचक का समानाधिकरण के साथ तत्पुरुष समास होता है यदि समस्त शब्द से संज्ञा की प्रतीति होती हो।

**तद्धितार्थोत्तर**—तद्धितार्थविषय में, उत्तरपद के परे और समाहार की प्रतीति कराने के लिए दिग्वाचक तथा संख्यावाचक शब्दों का समानाधिकरण सुबन्त के साथ तत्पुरुष समास होता है।

**संख्यापूर्वो**—पूर्व सूत्र के द्वारा विहित संख्यापूर्वक समास की 'द्विगु' संज्ञा होती है।

**कुत्सितानि**—कुत्सितवाचक सुबन्त का कुत्सावाचक सुबन्त के साथ तत्पुरुष समास होता है।

---

(१) तद्धितार्थे विषयभूत इति पदमंजर्याम्।

(२) शब्देत्यारभ्य इष्यत इत्यन्तः पाठो न्यासपदमंजर्यसम्मतः, न्यासेऽस्यार्थस्य स्वयमुक्तत्वात्, पदमंजर्यामव्याख्यातत्वाच्च।

(३) उच्यते इति न्यासेऽधिकम्

## पापाणके कुत्सितैः ॥ ५४ ॥

पापाणकशब्दौ कुत्सनाभिधायिनौ, तयोः पूर्वेण समासे परनिपातः प्राप्तः, पूर्वनिपातार्थमिदमारभ्यते। पाप, अणक एते सुबन्ते कुत्सितवचनैस्सह समस्येते, तत्पुरुषश्च समासो भवति। पापनापितः। पापकुलालः। अणकनापितः। अणककुलालः॥

## उपमानानि सामान्यवचनैः ॥ ५५ ॥

उपमीयतेऽनेनेत्युपमानम्। उपमानवाचीनि सुबन्तानि सामान्यवचनैः सुबन्तैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति। उपमानोपमेययोः साधारणो धर्मः सामान्यम्, तद्विशिष्टोपमेयवचनैरयं समासः। शस्त्रीव श्यामा शस्त्रीश्यामा देवदत्ता। कुमुदश्येनी। हंसगद्गदा। न्यग्रोधपरिमण्डला। उपमानानीति किम्? देवदत्ता श्यामा। सामान्यवचनैरिति किम्? फाला इव तन्दुलाः, पर्वता इव बलाहकाः॥

## उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ॥ ५६ ॥

उपमेयमुपमितम्, तद्वाचि सुबन्तं व्याघ्रादिभिः सामर्थ्यादुपमानवचनैः सह समस्यते, तत्पुरुषश्च समासो भवति, न चेत्सामान्यवाची शब्दः प्रयुज्यते। "विशेषणं विशेष्येण" इति परनिपाते प्राप्ते विशेष्यस्य पूर्वनिपातार्थ आरम्भः। पुरुषोऽयं व्याघ्र इव पुरुषव्याघ्रः। पुरुषसिंहः। सामान्याप्रयोग इति किम्? पुरुषो व्याघ्र इव शूरः। व्याघ्र। सिंह। ऋक्ष। ऋषभ। चन्दन। वृक्ष। वृष। वराह। हस्तिन्। कुञ्जर। रुरु। पृषत। पुण्डरीक। बलाहक। आकृतिगणश्चायम्। तेनेदमपि भवति—मुखपद्मम्, मुखकमलम्, करकिसलयम्, पार्थिवचन्द्रः इत्येवमादि॥

## विशेषणं विशेष्येण बहुलम् ॥ ५७ ॥

भेदकं विशेषणम्, भेद्यं विशेष्यम्। विशेषणवाचि सुबन्तं विशेष्यवाचिना समानाधिकरणेन सुबन्तेन सह बहुलं समस्यते, तत्पुरुषश्च समासो भवति। नीलोत्पलम्। रक्तोत्पलम्। बहुलवचनं व्यवस्थार्थम्। क्वचिन्नित्यसमास एव—कृष्णसर्पः, लोहितशालिः। क्वचिन्न भवत्येव—रामो जामदग्न्यः, अर्जुनः कार्त्तवीर्यः। क्वचिद्विकल्पः—नीलमुत्पलम्, नीलोत्पलम्। विशेषणमिति किम्? तक्षकः सर्पः। विशेष्येणेति किम्? लोहितस्तक्षकः॥

## पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च ॥ ५८ ॥

पूर्व, अपर, प्रथम, चरम, जघन्य, समान, मध्य, मध्यम, वीर इत्येते सुबन्ताः समानाधिकरणेन सुपा सह समस्यन्ते, तत्पुरुषश्च समासो भवति। पूर्वपुरुषः। अपरपुरुषः। प्रथमपुरुषः। चरमपुरुषः। जघन्यपुरुषः। समानपुरुषः। मध्यपुरुषः। मध्यमपुरुषः। वीरपुरुषः। पूर्वस्यैवायं प्रपञ्चः॥

---

**पापाणके**—पाप तथा अणक शब्दों का कुत्सावाचक सुबन्त के साथ तत्पुरुष समास होता है।

**उपमानानि**—उपमानवाचक सुबन्त शब्दों का सामान्यवचन सुबन्त पद के साथ तत्पुरुष समास होता है।

**उपमितम्**—उपमेयवाचक सुबन्त पद का व्याघ्रादि उपमानवाचक सुबन्त के साथ तत्पुरुष समास होता है यदि सामान्यवाचक पद का प्रयोग न हुआ हो।

**विशेषणम्**—विशेषणवाचक सुबन्त का विशेष्यवाचक समानाधिकरण सुबन्त के साथ बाहुल्येन तत्पुरुष समास होता है।

**पूर्वापर**—पूर्व, अपर, प्रथम, चरम, जघन्य, समान, मध्य, मध्यम तथा वीर शब्दों का समानाधिकरण सुबन्त के साथ तत्पुरुष समास होता है।

## श्रेण्यादयः कृतादिभिः ॥ ५९ ॥

श्रेण्यादयः सुबन्ताः कृतादिभिः समानाधिकरणैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति । ॐश्रेण्यादिषु च्व्यर्थवचनम्ॐ । अश्रेणयः श्रेणयः कृताः श्रेणिकृताः । एककृताः । श्रेण्यादयः पठ्यन्ते । कृतादिराकृतिगणः । च्व्यन्तानां तु "कुगतिप्रादयः" इत्यनेन नित्य-समासः । श्रेणीकृताः । श्रेणि । एक । पूग । कुण्ड । राशि । विशिख । निचय । निधान । इन्द्र । देव । मुण्ड । भूत । श्रवण । वदान्य । अध्यापक । ब्राह्मण । क्षत्रिय । पटु । पण्डित । कुशल । चपल । निपुण । कृपण । इति श्रेण्यादिः ॥ कृत । मित । मत । भूत । उक्त । समाज्ञात । समाम्नात । समाख्यात । संभावित । अवधारित । निराकृत । अवकल्पित । उपकृत । उपाकृत(१) । इति कृतादिः ॥

## क्तेन नञ्विशिष्टेनानञ् ॥ ६० ॥

नञैव विशेषो यस्य सर्वमन्यत् प्रकृत्यादिकं तुल्यं तन्नञ्विशिष्टम्, तेन नञ्विशिष्टेन(२) क्तान्तेन समानाधिकरणेन सह अनञ् क्तान्तं समस्यते, तत्पुरुषश्च समासो भवति । कृतं च तदकृतं च कृताकृतम् । भुक्ताभुक्तम् । पीतापीतम् । उदितानुदितम् । नुडिटौ तद्भक्त-त्वान्नैव भेदकौ । अशितानशितेन जीवति, क्लिष्टाक्लिशितेन वर्त्तते । ॐकृतापकृतादीना-मुपसंख्यानम्ॐ । कृतापकृतम् । भुक्तविभुक्तम् । पीतविपीतम् । गतप्रत्यागतम् । यातानु-यातम् । क्रयाक्रयिका । पुटापुटिका । फलाफलिका । मानोन्मानिका । ॐसमानाधिकरणा-धिकारे शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्चॐ । शाकप्रधानः पार्थिवः(३) शाक-पार्थिवः । कुतपसौश्रुतः । अजातौल्वलिः ॥

## सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः ॥ ६१ ॥

सत्, महत्, परम, उत्तम, उत्कृष्ट इत्येते पूज्यमानैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति । पूज्यमानैरिति वचनात् पूजावचनाः सदादयो विज्ञायन्ते । सत्पुरुषः । महा-पुरुषः । परमपुरुषः । उत्तमपुरुषः । उत्कृष्टपुरुषः । पूज्यमानैरिति किम् ? उत्कृष्टो(४)गौः कर्दमात् ।

---

**श्रेण्यादयः**—श्रेणी आदि सुबन्त पदों का समानाधिकरण कृत आदि सुबन्तों के साथ तत्पुरुष समास होता है ।

**श्रेण्यादिषु**—श्रेणी आदि के समास के विषय में 'च्वि' प्रत्यय के अर्थ का अभिव्यञ्जन होना चाहिए ।

**क्तेन**—नञ् मात्र से अपने उत्तरपद से भिन्न नञ्विशिष्ट क्तप्रत्यान्त के साथ समानाधि-करण नञ् रहित क्तप्रत्यान्त शब्द का तत्पुरुष समास होता है ।

**कृतापकृतादीनाम्**—इस समास के प्रसङ्ग में 'कृताऽपकृत' आदि ( समस्त ) शब्दों का भी समावेश समझना चाहिए ।

**समानाधिकरण**—समानाधिकरण समास के अधिकार में 'शाकपार्थिव' आदि शब्दों में अपेक्षित समास का भी समावेश तथा उत्तरपद ( मध्यमपद ) का लोप भी समझना चाहिए ।

**सन्महत्**—सत्, महत्, परम, उत्तम तथा उत्कृष्ट शब्दों का पूज्यमानवाचक पदों के साथ तत्पुरुष समास होता है ।

( १ ) आकृतिगणत्वेपि दिग्दर्शनार्थः पाठः । ( श्रीना० )

( २ ) विशिष्टेन-अधिकेन । भुक्तविभुक्तम्-अत्र विशब्दोऽशोभनार्थो विरूपवत् । क्रयाक्रयिका-महान् क्रयः क्रय उच्यते । अल्पक्रयः क्रयिका । समासे अन्येषामपि दृश्यत इति दीर्घः ।

( ३ ) अत्र पार्थव इत्यपि पाठः पदमञ्जरीसम्मतः ।

( ४ ) उत्कृष्टेति स्त्रीलिङ्गपाठो न्यासे ।

## वृन्दारकनागकुञ्जरैः पूज्यमानम् ॥ ६२ ॥

वृन्दारक, नाग, कुञ्जर इत्येतैः सह पूज्यमानवाचि सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति । पूज्यमानमिति वचनाद् वृन्दारकादयः पूजावचना गृह्यन्ते । गोवृन्दारकः । अश्ववृन्दारकः । गोनागः । अश्वनागः । गोकुञ्जरः । अश्वकुञ्जरः । पूज्यमानमिति किम् ? सुसीमो(१) नागः ॥

## कतरकतमौ जातिपरिप्रश्ने ॥ ६३ ॥

कतरकतमौ जातिपरिप्रश्ने वर्त्तमानौ समर्थेन सुपा सह समस्येते, तत्पुरुषश्च समासो भवति । कतरकठः । कतरकालापः । कतमकठः । कतमकालापः । ननु कतमशब्दस्तावज्जातिपरिप्रश्न एव व्युत्पादितः, कतरशब्दोऽपि साहचर्यात्तदर्थवृत्तिरेव ग्रहीष्यते, किं जातिपरिप्रश्नग्रहणेन ? एवं तर्ह्येतज्ज्ञापयति—कतमशब्दोऽन्यत्रापि वर्त्तत इति । तथा च प्रत्युदाहरणम्-कतरो भवतोर्देवदत्तः, कतमो भवतां देवदत्तः ॥

## किं क्षेपे ॥ ६४ ॥

किमित्येतत् क्षेपे गम्यमाने सुपा सह समस्यते, तत्पुरुषश्च समासो भवति । किंराजा, यो न रक्षति । किंसखा, योऽभिद्रुह्यति । किंगौः, यो न वहति । "किमः क्षेपे" इति समासान्तो न भवति । क्षेप इति किम् ? को राजा पाटलिपुत्रे ॥

## पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः ॥ ६५ ॥

अभयव्यञ्जना पोटेत्यभिधीयते । (२)गृष्टिरेकवारप्रसूता । धेनुः प्रत्यग्रप्रसूता । वशा वन्ध्या । वेहद् गर्भपातिनी । बष्कयणी तरुणवत्सा । पोटादिभिः सह जातिवाचि सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति । इभपोटा । इभयुवतिः । अग्निस्तोकः । उदश्वित्कतिपयम् । गोगृष्टिः । गोधेनुः । गोवशा । गोवेहत् । गोबष्कयणी । कठप्रवक्ता । कठश्रोत्रियः । कठाध्यापकः । कठधूर्त्तः । जातिरिति किम् ? देवदत्तः प्रवक्ता । धूर्त्तग्रहणमकुत्सार्थम् ॥

## प्रशंसावचनैश्च ॥ ६६ ॥

जातिरिति वर्त्तते । जातिवाचि सुबन्तं प्रशंसावचनैः सह समस्यते, तत्पुरुषश्च समासो भवति । रूढिशब्दाः प्रशंसावचना गृह्यन्ते मतल्लिकादयः, ते च आविष्टलिङ्गत्वादन्यलिङ्गेऽपि

---

**वृन्दारक**—पूज्यमानवाचक सुबन्त का वृन्दारक, नाग तथा कुञ्जर शब्दों के साथ समास होता है।

**कतरकतमौ**—जातिविषयक परिप्रश्न अर्थ में प्रयुज्यमान कतर तथा कतम शब्दों का सुबन्त के साथ तत्पुरुष समास होता है।

**किं क्षेपे**—निन्दा के गम्यमान होने पर 'किम्' का सुबन्तपद के साथ तत्पुरुष समास होता है।

**पोटायुवति**—पोटा आदि शब्दों के साथ जातिवाचक सुबन्त का तत्पुरुष समास होता है।

**प्रशंसा**—प्रशंसावाचक सुबन्त के साथ जातिवाचक सुबन्त का तत्पुरुष समास होता है।

---

(१) सुषीम इति पदमञ्जरी ।

(२) युवतिर्नवयौवना स्त्री । स्तोकमल्पपर्यायः । कतिपयञ्च इति पाठः ।

जातिशब्दे स्वलिङ्गोपादाना एव समानाधिकरणा भवन्ति । गोप्रकाण्डम् । अश्वप्रकाण्डम् । गोमतल्लिका । अश्वमतल्लिका । गोमचर्च्चिका । अश्वमचर्च्चिका । जातिरिति किम् ? कुमारी मतल्लिका ॥

## युवा खलतिपलितवलिनजरतीभिः ॥ ६७ ॥

खलत्यादिभिः समानाधिकरणैः सह युवशब्दः समस्यते, तत्पुरुषश्च समासो भवति । जरतीभिरिति(१) स्त्रीलिङ्गनिर्देशः ॐप्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्ॐ इति ज्ञापनार्थः । युवा खलतिः युवखलतिः । युवतिः खलती युवखलती । युवा पलितः युवपलितः । युवतिः पलिता युवपलिता । युवा वलिनः युववलिनः । युवतिर्वलिना युववलिना । युवा जरन् युवजरन् । युवतिर्जरती युवजरती ॥

## कृत्यतुल्याख्या अजात्या ॥ ६८ ॥

कृत्यप्रत्ययान्तास्तुल्यपर्यायाश्च सुबन्ता अजातिवचनेन समस्यन्ते, तत्पुरुषश्च समासो भवति । भोज्योष्णम् । भोज्यलवणम् । पानीयशीतम् । तुल्याख्याः–तुल्यश्वेतः, तुल्यमहान्, सदृशश्वेतः, सदृशमहान् । अजात्येति किम् ? भोज्य ओदनः ॥

## वर्णो वर्णेन ॥ ६९ ॥

वर्णविशेषवाचि सुबन्तं वर्णविशेषवाचिना सुबन्तेन समानाधिकरणेन सह समस्यते, तत्पुरुषश्च समासो भवति । कृष्णसारङ्गः(२) । लोहितसारङ्गः । कृष्णशबलः । लोहितशबलः । अवयवद्वारेण कृष्णशब्दः समुदाये वर्त्तमानः समानाधिकरणो भवति ॥

## कुमारः श्रमणादिभिः ॥ ७० ॥

कुमारशब्दः श्रमणादिभिः सह समस्यते, तत्पुरुषश्च समासो भवति । येऽत्र स्त्रीलिङ्गाः पठ्यन्ते श्रमणा, प्रव्रजिता, कुलटेत्येवमादयस्तैः सह स्त्रीलिङ्ग एव कुमारशब्दः समस्यते, ये तु पुंल्लिङ्गा अध्यापकोऽभिरूपकः पण्डित इति तैरुभयथा । प्रातिपादिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति—कुमारी श्रमणा कुमारश्रमणा । श्रमणा । प्रव्रजिता । कुलटा । गर्भिणी । तापसी । दासी । बन्धकी । अध्यापक । अभिरूपक । पण्डित । पटु । मृदु । कुशल । चपल । निपुण ॥

## चतुष्पादो गर्भिण्या ॥ ७१ ॥

चतुष्पाद्वाचिनः सुबन्ता गर्भिणीशब्देन समस्यन्ते, तत्पुरुषश्च समासो भवति । गो-

---

**युवा**—सामानाधिकरण खलति, पलित, वलिन तथा जरत् शब्दों के साथ युवन् शब्द का तत्पुरुष समास होता है ।

**प्रातिपदिक**—प्रातिपदिक-ग्रहण में पुल्लिङ्गादिविशिष्ट शब्द का भी ग्रहण समझना चाहिए ।

**कृत्य**—कृत्यप्रत्यान्त तथा तुल्यार्थक सुबन्तों का जातिवाचकभिन्न समानाधिकरण सुबन्त के साथ तत्पुरुष समास होता है ।

**वर्णो वर्णेन**—वर्ण-विशेषवाचक सुबन्त का वर्णान्तरवाची सुबन्त के साथ तत्पुरुष समास होता है ।

**कुमारः**—श्रमणा आदि शब्दों के साथ कुमार शब्द का तत्पुरुष समास होता है ।

**चतुष्पादो**—चतुष्पाद्वाचक सुबन्त का गर्भिणी शब्द के साथ तत्पुरुष समास होता है ।

---

(१) स्त्रीलिंगेन इति न्यासे ।

(२) नानावर्णसमाहारः सारङ्गः ।

गर्भिणी। अजागर्भिणी। ॐचतुष्पाज्जातिरिति वक्तव्यम्ॐ। इह मा भूत्—कालाक्षी गर्भिणी, स्वस्तिमती गर्भिणी। चतुष्पाद इति किम्? ब्राह्मणी गर्भिणी॥

## मयूरव्यंसकादयश्च ॥ ७२ ॥

समुदाया एव निपात्यन्ते। मयूरव्यंसकादयः शब्दास्तत्पुरुषसंज्ञा भवन्ति। चकारोऽवधारणार्थः, परममयूरव्यंसक इति समासान्तरं न भवति। मयूरव्यंसकः। छात्रव्यंसकः। काम्बोजमुण्डः। यवनमुण्डः। छन्दसि—हस्तेगृह्य, पादेगृह्य, लाङ्गलेगृह्य, पुनर्दाय। एहीडादयोऽन्यपदार्थे॥ एहीडम्, एहियवं वर्त्तते। एहिवाणिजा क्रिया, अपेहिवाणिजा। प्रेहिवाणिजा। एहिस्वागता। अपेहिस्वागता। प्रेहिस्वागता। एहिद्वितीया। अपेहिद्वितीया। इहविनका। प्रोहकटा। अपोहकटा। प्रोहकर्दमा। अपोहकर्दमा। उद्धरचूडा। आहरचेला। आहरवसना। आहरवनिता। कृन्तविचक्षणा। उद्धरोत्सृजा। उद्धमविधमा। उत्पचविपचा। उत्पतनिपता। उच्चावचम्। उच्चनीचम्। अचितोपचितम्। अवचितपराचितम्। निश्चप्रचम्। अकिंचनम्। स्नात्वाकालकः। पीत्वास्थिरकः। भुक्त्वासुहितः। प्रोष्यपापीयान्। उत्पत्यपाकुला। निपत्यरोहिणी। निषण्णश्यामा। अपेहिप्रघसा। इहपञ्चमी। इहद्वितीया॥ जहिकर्मणा बहुलमाभीक्ष्ण्ये कर्त्तारं चाभिदधाति॥ जहिजोडः। उज्जहिजोडः। जहिस्तम्बः। उज्जहिस्तम्बः॥ आख्यातमाख्यातेन क्रियासातत्ये॥॥ अश्नीतपिबता। पचतभृज्जता। खादतमोदता। खादताचमता। आहरनिवपा। आवपनिष्किरा। उत्पचविपचा। भिन्धिलवणा। छिन्धिविचक्षणा। पचलवणा। पचप्रकूटा। अविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्यः॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ
द्वितीयाध्यायस्य प्रथमः पादः ॥२।१॥



---

चतुष्पाज्जाति—जातिवाचक चतुष्पात् का ही ग्रहण इस सूत्र में समझना चाहिए।

मयूर—'मयूर-व्यंसक' आदि पदों का समासनिपातन होता है, ये 'तत्पुरुष' कहलाते हैं।

द्वितीयाध्याय का प्रथम पाद समाप्त हुआ।



# अथ द्वितीयाध्यायस्य द्वितीयः पादः ॥

## पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ॥ १ ॥

एकदेशोऽस्यास्तीत्येकदेशी अवयवी, तद्वाचिना सुबन्तेन सह पूर्वापराधरोत्तरशब्दाः सामर्थ्यादेकदेशवचनाः समस्यन्ते, तत्पुरुषश्च समासो भवति । एकाधिकरणग्रहणमेकदेशिनो विशेषणम्, एकं (१)चेदधिकरणमेकद्रव्यमेकदेशि भवति । षष्ठीसमासापवादोऽयं योगः ! पूर्वं कायस्य पूर्वकायः । अपरकायः । अधरकायः । उत्तरकायः । एकदेशिनेति किम् ? पूर्वं नाभेः कायस्य(२) । एकाधिकरण इति किम् ? पूर्वं छात्राणामामन्त्रय(३) । कथं मध्याह्नः, सायाह्न इति ? "संख्याविसायपूर्वस्याह्नस्य" इति ज्ञापकात्सर्वैकदेशशब्देनाह्नः समासो भवति ॥

## अर्द्धं नपुंसकम् ॥ २ ॥

एकदेशिनैकाधिकरणे इति वर्त्तते । समप्रविभागेऽर्धशब्दो नपुंसकमाविष्टलिङ्गः, तस्येदं ग्रहणम् । अर्द्धमित्येतत् नपुंसकमेकदेशिनैकाधिकरणेन समस्यते, तत्पुरुषश्च समासो भवति । षष्ठीसमासाऽपवादोयं योगः । अर्द्धं पिप्पल्या अर्द्धपिप्पली । अर्द्धकोशातकी । नपुंसकमिति किम् ? ग्रामार्द्धः(४), नगरार्द्धः । एकदेशिनेत्येव—अर्द्धं(५) पशोर्देवदत्तस्य । देवदत्तेन सह समासो न भवति । एकाधिकरण इत्येव—अर्द्धं पिप्पलीनाम् ॥

## द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ॥ ३ ॥

एकदेशिनैकाधिकरण इति वर्तते । षष्ठीसमासापवादोऽयं योगः । अन्यतरस्यांग्रहणात् सोऽपि(६) भवति । "पूरण" इति प्रतिषेधश्चात एवान्यतरस्यांग्रहणसामर्थ्यान्न प्रवर्त्तते । द्वितीयादीनि शब्दरूपाणि एकदेशिनैकाधिकरणेन सहान्यतरस्याम् समस्यन्ते, तत्पुरुषश्च समासो भवति । द्वितीयं भिक्षाया द्वितीयभिक्षा । षष्ठीसमासपक्षे—भिक्षाद्वितीयं वा । तृतीयं भिक्षायाः तृतीयभिक्षा । भिक्षातृतीयं वा । चतुर्थं भिक्षायाः चतुर्थभिक्षा । भिक्षाचतुर्थं वा । तुर्यं भिक्षायाः तुर्यभिक्षा । भिक्षातुर्यं वा । तुरीयशब्दस्यापीष्यते—तुरीयं

---

**पूर्वापरा**—अवयविवाचक सुबन्त के साथ अवयवार्थक पूर्व, अपर, अधर एवम् उत्तर शब्दों का तत्पुरुष समास होता है यदि अवयवी एकत्वसंख्याविशिष्ट हो ।

**अर्द्धम्**—समांसवाचक अर्ध शब्द का एकत्वसंख्याविशिष्ट अवयवी के वाचक शब्द के साथ तत्पुरुष समास होता है ।

**द्वितीयतृतीय**—द्वितीय, तृतीय, चतुर्थ तथा तुर्य शब्दों का एकत्वसंख्याविशिष्ट अवयवी के साथ विकल्प से तत्पुरुष समास होता है ।

---

( १ ) एकञ्चेत् एकत्वसंख्याविशिष्टमित्यर्थः ।

( २ ) पूर्वं नाभेरिति–कायसम्बन्धी नाभ्यपेक्षया पूर्वो भाग इत्यर्थः । नाभिशब्देन सह समासो न भवतीति कुत्रचिदधिकम् ।

( ३ ) पूर्वं छात्राणाम् आमन्त्रयस्व इति न्यासे ।

( ४ ) ग्रामार्द्धः ग्रामस्यैकदेश इत्यर्थः ।

( ५ ) अर्द्धं पशोरित्यादि–देवदत्तोऽत्र स्वामी न त्वेकदेशी ।

( ६ ) षष्ठी समास इत्यधिकं न्यासे ।

भिक्षायाः तुरीयभिक्षा। भिक्षातुरीयं वा(१)। एकदेशिनेत्येव—द्वितीयं भिक्षाया भिक्षुकस्य। एकाधिकरण इत्येव—द्वितीयं भिक्षाणाम् ॥

## प्राप्तापन्ने च द्वितीयया ॥ ४ ॥

एकदेशिनैकाधिकरण इति निवृत्तम्। द्वितीयासमासे प्राप्ते वचनमिदम्। विधानसामर्थ्याल्लोपि भवति। प्राप्त, आपन्न इत्येतौ द्वितीयान्तेन सह समस्येते, तत्पुरुषश्च समासो भवति। प्राप्तो जीविकां प्राप्तजीविकः। जीविकाप्राप्त इति वा। आपन्नो जीविकाम् आपन्नजीविकः। जीविकापन्न इति वा ॥

## कालाः परिमाणिना ॥ ५ ॥

परिमाणमस्यास्तीति परिमाणी, तद्वाचिना सुबन्तेन सह सामर्थ्यात्परिमाणवचनाः कालशब्दाः समस्यन्ते, तत्पुरुषश्च समासो भवति। षष्ठीसमासविषये योगारम्भः(२)। मासो जातस्य मासजातः। संवत्सरजातः। द्व्यहजातः। त्र्यहजातः ॥

## नञ् ॥ ६ ॥

नञ् समर्थेन सुबन्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। न ब्राह्मणः अब्राह्मणः। अवृषलः। *नञो नलोपस्तिङि क्षेपे*। अपचसि त्वं जाल्म(३) ॥

## ईषदकृता ॥ ७ ॥

ईषदित्ययं शब्दोऽकृदन्तेन सुपा सह समस्यते, तत्पुरुषश्च समासो भवति। *ईषद् गुणवचनेनेति वक्तव्यम्*। ईषत्कडारः। ईषत्पिङ्गलः। ईषद्विकटः। ईषदुन्नतः। ईषत्पीतम्। ईषद्रक्तम्। (४)गुणवचनेनेति किम्? इह न भवति—ईषद्गार्ग्यः(५) ॥

## षष्ठी ॥ ८ ॥

षष्ठ्यन्तं सुबन्तं समर्थेन सुबन्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। राज्ञः

---

**प्राप्तापन्ने**—द्वितीयान्त सुबन्त के साथ प्राप्त तथा आपन्न शब्दों का तत्पुरुष समास होता है।

**कालाः**—परिमाणविशिष्टद्रव्यवाचक सुबन्त के साथ परिमाणवाचक काल शब्द का तत्पुरुष समास होता है।

**नञ्**—समर्थ सुबन्त के साथ 'नञ्' का तत्पुरुष समास होता है।

**नञो नलोपः**—निन्दा के गम्यमान होने पर 'तिङ्' के परे नञ् के 'न्' का लोप हो जाता है।

**ईषदकृता**—कृदन्तभिन्न सुबन्त के साथ ईषत् शब्द का तत्पुरुष समास होता है।

**ईषद्**—गुणवाचक शब्द के साथ ईषत् का समास होता है—ऐसा कहना चाहिए।

**षष्ठी**—षष्ठ्यन्त सुबन्त का समर्थ सुबन्त के साथ तत्पुरुष समास होता है।

**कृद्योगा**—'कर्तृकर्मणोः कृति' सूत्र से विहित षष्ठी से युक्त सुबन्त का समर्थ सुबन्त के साथ तत्पुरुष समास समझना चाहिए।

---

(१) प्रायः सर्वत्र तुरीयशब्दादिः भिक्षातुरीयं वेत्यन्तः पाठो नास्ति।

(२) षष्ठीसमासापवादोऽयं योगः इति पाठः क्वचित्।

(३) प्रायः सर्वत्र नञो नलोपेत्यतः जाल्मपर्यन्तः पाठो नास्ति, न्यासपदमञ्जर्योरपि व्याख्याऽस्य न दृश्यते।

(४) अकृतेति किम्? ईषद्भुक्तम् इत्यधिकं क्वचित्।

(५) ईषद्गार्ग्यः-गार्ग्यशब्दोऽयं जातिवचनो न गुणवचनः।

पुरुषो राजपुरुषः। ब्राह्मणकम्बलः। ॐकृद्योगा(१) च षष्ठी समस्यत इति वक्तव्यम्ॐ। इध्म-प्रव्रश्चनः। पलाशशातनः। किमर्थमिदमुच्यते? 'प्रतिपदविधाना षष्ठी न समस्यते' इति वक्ष्यति, तस्यायं पुरस्तादपकर्षः(२)॥

## याजकादिभिश्च ॥ ९ ॥

पूर्वेण समासः सिद्ध एव, तस्य "कर्तरि च" इति प्रतिषेधे प्राप्ते वचनमिदमारभ्यते (३)प्रतिप्रसवार्थम्। याजकादिभिः सह षष्ठी समस्यते, तत्पुरुषश्च समासो भवति। ब्राह्मण-याजकः। क्षत्रिययाजकः। याजक। पूजक। परिचारक। परिषेचक(४)। स्नातक। अध्या-पक। उत्सादक। उद्वर्तक। (५)होतृ। पोतृ। भर्तृ। रथगणक। पत्तिगणक। ॐतत्स्थैश्च(६) गुणैः षष्ठी समस्यत इति वक्तव्यम्ॐ। चन्दनगन्धः। कपित्थरसः। ॐगुणात्तरेण तरलोपश्चेति वक्तव्यम्ॐ। सर्वेषां श्वेततरः सर्वश्वेतः। सर्वेषां महत्तरः सर्वमहान्। "न निर्धारणे" इति प्रतिषेधे प्राप्ते वचनमिदम्। सर्वशुक्ला गौः(७)॥

## न निर्द्धारणे ॥ १० ॥

पूर्वेण समासे प्राप्ते प्रतिषेध आरभ्यते। निर्द्धारणे या षष्ठी सा न समस्यते। जाति-गुणक्रियाभिः(८) समुदायादेकदेशस्य पृथक्करणं निर्द्धारणम्। क्षत्रियो मनुष्याणां शूर-तमः। कृष्णा (९)गवां सम्पन्नक्षीरतमा। धावन्नध्वगानां शीघ्रतमः। ॐप्रतिपद(१०) वि-

---

याजकादि—याजक आदि शब्दों के साथ षष्ठ्यन्त का तत्पुरुष समास होता है।

तत्स्थैश्च—षष्ठ्यन्त गुणिवाचक शब्द का तन्निष्ठ गुणवाचक शब्द के साथ तत्पुरुष समास सम-झना चाहिए।

गुणात्तरेण—तरप्प्रत्ययान्त गुणवाचक शब्द के साथ षष्ठ्यन्तपद का तत्पुरुष समास तथा तरप् का लोप समझना चाहिए।

न निर्धारणे—निर्धारण में विहित षष्ठी से युक्त पद का सुबन्त के साथ समास नहीं होता है।

प्रतिपद—'षष्ठी शेषे' से भिन्न सूत्रों द्वारा विहित षष्ठी (प्रतिपदविधाना षष्ठी) से युक्त सुबन्त पद का समास नहीं होता है—यह समझना चाहिए।

---

(१) कर्तृकर्मणोः कृतीति कृच्छब्दोपादानेन या विहिता सा कृद्योगा।

(२) अपकर्षः अपवादः।

(३) प्रतिप्रसव इति-अन्येन निवर्त्तितस्य पुनः प्रवृत्त्यभ्यनुज्ञानं प्रतिप्रसवः।

(४) क्वचित् परिवेषक इति पाठान्तरम्।

(५) हर्तृ, वर्तक इत्यधिकं क्वचित्।

(६) तत्स्थैरिति-तच्छब्देन सन्निधानाद् गुणा एव परामृश्यन्ते। तस्मिन्नात्मनि ये गुणाः स्थितास्तैः।

(७) प्रायः सर्वत्र गुणात्तरेणेत्यादिः सर्वशुक्ला गौरित्यन्तः पाठो नास्ति, न्यासपदमंजर्योरपि न व्याख्यातमेतत्।

(८) अत्र संज्ञाया अपि समावेश इति किंयत्तदो निर्धारणे इति सूत्रवृत्तौ स्वयमेव वक्ष्यति।

(श्रीना०)

(९) कृष्णा गवामिति—नात्रायमर्थः—गवां मध्ये कृष्णा सा सम्पन्नक्षीरतमेति, एवं हि कृष्णा-शब्दस्य गवामित्यनेन सम्बन्धः, न च तस्य समासप्रसङ्गः, गुणेन नेति प्रतिषेधात्, तस्माद्गवां मध्ये या सम्पन्नक्षीरतमा सा कृष्णेत्ययमत्रार्थः इति पदमञ्जरी॥

(१०) प्रतिपदेति—षष्ठी शेषे इति सामान्यविहितां षष्ठीं मुक्त्वा विशेषलक्षणविहिता षष्ठी प्रतिपदविधाना।

धाना च षष्ठी न समस्यत इति वक्तव्यम्॥ । सर्पिषो ज्ञानम् । मधुनो ज्ञानम्(१) ॥

## पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ॥ ११ ॥

पूरण, गुण, सुहितार्थ, सद्, अव्यय, तव्य, समानाधिकरण, इत्येतैः सह षष्ठी न समस्यते । अर्थशब्दः प्रत्येकमभिसम्बध्यते, तेन स्वरूपविधिर्न भवति । पूरणार्थे-छात्राणां पञ्चमः, छात्राणां दशमः । गुण-बलाकायाः शौक्ल्यम् , काकस्य कार्ष्ण्यम् । सुहितार्था-स्तृप्त्यर्थाः-फलानां तृप्तः । सत्—ब्राह्मणस्य (२)कुर्वन् , ब्राह्मणस्य कुर्वाणः । अव्यय-ब्राह्मणस्य कृत्वा, ब्राह्मणस्य हृत्वा । तव्य-ब्राह्मणस्य कर्त्तव्यम् । तव्यता सानुबन्धकेन समासो भवत्येव—ब्राह्मणकर्त्तव्यम् । समानाधिकरण—शुकस्य माराविदस्य(३), राज्ञः पाटलिपुत्रस्य, पाणिनेः सूत्रकारस्य । किं च स्यात् ? पूर्वनिपातस्यानियमः स्यात् । अनन्तरायां तु प्राप्तौ प्रतिषिद्धायां "विशेषणं विशेष्येण" इति भवत्येव समासः । पूर्वनिपातश्च तदा नियोगतो विशेषणस्यैव(४) ॥

## क्तेन च पूजायाम् ॥ १२ ॥

"मतिबुद्धिपूजार्थेभ्यश्च" इति वक्ष्यति, तस्येदं ग्रहणम् । पूजाग्रहणमुपलक्षणार्थम् । क्तो यः पूजायां विहितस्तेन षष्ठी न समस्यते । राज्ञां मतः । राज्ञां बुद्धः । राज्ञां पूजितः । पूजायामिति किम्(५) ? छात्रस्य हसितं छात्रहसितम् ॥

## अधिकरणवाचिना च ॥ १३ ॥

"क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः" इति वक्ष्यति, तस्येदं ग्रहणम् । अधिकरणवाचिना क्तेन षष्ठी न समस्यते । इदमेषां यातम्(६) । इदमेषां भुक्तम् ॥

## कर्म्मणि च ॥ १४ ॥

क्तेनेति निवृत्तम् । कर्म्मग्रहणं षष्ठीविशेषणम् । कर्म्मणि च या षष्ठी सा न समस्यते । "उभयप्राप्तौ कर्म्मणि" इति षष्ठ्या इदं ग्रहणम् । आश्चर्यो गवां दोहोऽगोपालकेन(७) । रोचते ओदनस्य भोजनं देवदत्तेन । साधु खलु पयसः पानं देवदत्तेन । विचित्रा सूत्रस्य कृतिः पाणिनिना ॥

**पूरणगुण**—पूरणार्थविहितप्रत्ययुक्त, गुणार्थक, तृप्त्यर्थक, सत् ( शतृ तथा शानच् से युक्त ), अव्यय, तव्य-प्रत्ययान्त एवम् समानाधिकरण शब्दों के साथ षष्ठ्यन्त का समास नहीं होता है ।

**क्तेन**—मति-बुद्धि आदि सूत्र से विहित क्त प्रत्यय से युक्त शब्द के साथ षष्ठ्यन्त का तत्पुरुष समास नहीं होता है ।

**अधिकरण**—अधिकरणार्थक क्तप्रत्यान्त के साथ भी षष्ठ्यन्त का तत्पुरुष समास नहीं होता है ।

**कर्मणि च**—'उभयप्राप्तौ कर्मणि' सूत्रविहितषष्ठ्यन्त का समर्थ सुबन्त के साथ तत्पुरुष समास नहीं होता है ।

---

( १ ) कुत्र चिदधिकः पाठः ज्ञोऽविदर्थस्य करण इति षष्ठीति ।

( २ ) ब्राह्मणस्य कुर्वन्— अत्र कुर्वन् शब्दः किंकरपर्यायः ।

( ३ ) माराविदस्य—मारावीति शब्दं ददातीति माराविदः । संज्ञैषा शुकविशेषस्य ।

( ४ ) प्रायः सर्वत्र अनन्तरायामित्यादितः विशेषणस्यैवेति पर्यन्तः पाठो नास्ति ।

( ५ ) पूजायामित्यारभ्य हसितमित्यन्तः पाठो न्यासे स्वयमुक्तत्त्वात्पदमंजर्य्यामव्याख्यातत्वाच्च मूले प्रक्षिप्तः प्रतिभाति ॥

( ६ ) न्यासे तु इदमेषामासितम् इत्युदाहरणं व्याख्यातम् दृश्यते ।

( ७ )अशिक्षितेन गोपालकेन इति पाठान्तरम् ।

## तृजकाभ्यां कर्तरि ॥ १५ ॥

कर्तृग्रहणं षष्ठीविशेषणम् । कर्त्तरि या षष्ठी सा तृचाऽकेन च सह न समस्यते । भवतः शायिका । भवत आसिका । भवतोऽग्रगामिका । तृच् कर्त्तर्येव विधीयते, तत्प्रयोगे कर्तरि षष्ठी नास्ति । तस्मात्तृज्ग्रहणमुत्तरार्थम् । कर्तरीति किम् ? इक्षुभक्षिकां मे (१)धारयसि ॥

## कर्त्तरि च ॥ १६ ॥

कर्त्तरि च यौ तृजकौ ताभ्यां सह षष्ठी न समस्यते । सामर्थ्यादकस्य विशेषणार्थं कर्तृ-ग्रहणम्, इतरत्र व्यभिचाराभावात् । अपां स्रष्टा । पुरां भेत्ता । वज्रस्य भर्त्ता । ननु च भर्तृशब्दो ह्ययं याजकादिषु पठ्यते(२) ? सम्बन्धिशब्दस्य पतिपर्यायस्य तत्र ग्रहणम्(३) । अकः खल्वपि—ओदनस्य भोजकः, सक्तूनां पायकः ॥

## नित्यं क्रीडाजीविकयोः ॥ १७ ॥

नेति निवृत्तम्, न तृजकौ । नित्यं समासो विधीयते । क्रीडायां जीविकायां च नित्यं षष्ठी समस्यते, तत्पुरुषश्च समासो भवति । तृच् क्रीडाजीविकयोर्नास्तीत्यक एवोदाह्रियते । उद्दालकपुष्पभञ्जिका । वारणपुष्पप्रचायिका । जीविकायाम्-दन्तलेखकः, नखलेखकः । क्रीडाजीविकयोरिति किम् ? ओदनस्य भोजकः ॥

## कुगतिप्रादयः ॥ १८ ॥

नित्यमिति वर्त्तते । कुशब्दोऽव्ययं गृह्यते, गत्यादिसाहचर्यात्, न द्रव्यवचनः । कु-गतिप्रादयः समर्थेन शब्दान्तरेण सह नित्यं समस्यन्ते, तत्पुरुषश्च समासो भवति । कुः पापार्थे-कुपुरुषः । गति-उररीकृतम्, यदूरीकरोति । प्रादयः-दुर्निन्दायाम्-दुष्पुरुषः । स्वती पूजायाम्-सुपुरुषः, अतिपुरुषः । आङीषदर्थे—आपिङ्गलः । प्रायिकं चैतदुपाधिवच-नम्, अन्यत्रापि हि समासो दृश्यते—कोष्णम्, कदुष्णम्, कवोष्णम्, दुष्कृतम्, सुष्टुतम्, अतिस्तुतम्, आबद्धम्(४) इति । ॐप्रादयो गताद्यर्थे प्रथमयाॐ प्रगत आचार्यः प्राचार्यः । प्रान्तेवासी । ॐअत्यादयः क्रान्ताद्यर्थे द्वितीययाॐ । अतिक्रान्तः खट्वाम् अति-

---

**तृजकाभ्याम्**—कर्त्तृविहितषष्ठ्यन्त शब्द का तृच्प्रत्ययान्त तथा अकप्रत्ययान्त (= ण्वुल्प्रत्य-यान्त) शब्दों के साथ तत्पुरुष समास नहीं होता है ।

**कर्त्तरि च**—कर्त्तृविहिततृजन्त तथा कर्त्तृविहितण्वुलप्रत्ययान्त के साथ षष्ठ्यन्त का समास नहीं होता है ।

**नित्यम्**—क्रीड़ा तथा जीविका अर्थ में ण्वुल्-प्रत्यान्त सुबन्त के साथ षष्ठ्यन्त का नित्य तत्पुरुष समास होता है ।

**कुगतिप्रादयः**—कु, गतिसंज्ञक तथा प्रादि का समर्थ सुबन्त के साथ नित्य तत्पुरुष समास होता है ।

**प्रादयो**—गत आदि अर्थों में वर्त्तमान प्रादि का प्रथमान्त के साथ तत्पुरुष समास होता है ।

**अत्यादयः**—क्रान्त आदि अर्थों में वर्तमान अति आदि का द्वितीयान्त के साथ तत्पुरुष समास होता है ।

---

(१) इक्षुभक्षिकां मे इति—कर्मणि षष्ठ्या समासः, मे इति धारेरुत्तमर्ण इति सम्प्रदाने चतुर्थी, न्यासकारस्त्वत्र कर्त्तरि षष्ठीमाह ।

(२) तत्र पाठसामर्थ्यात्समासेन भवितव्यम् । नैतदस्ति इत्यधिकं क्वचित् ।

(३) इह तु क्रियाशब्दस्य इति क्वचित्पाठः

(४) अविद्धम् इति न्यासे ।

खट्वः। अतिमालः। ❀अवादयः क्रुष्टाद्यर्थे तृतीयया❀। अवक्रुष्टः कोकिलया अवकोकिलः। ❀पर्यादयो ग्लानाद्यर्थे चतुर्थ्या❀। परिग्लानोऽध्ययनाय पर्यध्ययनः। अलं कुमार्यै अलंकुमारिः। ❀निरादयः क्रान्ताद्यर्थे पञ्चम्या❀। निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः। निर्वाराणसिः। ❀इवेन सह समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्❀। वाससी इव। ❀प्रादिप्रसङ्गे कर्मप्रवचनीयानां प्रतिषेधो वक्तव्यः❀। वृक्षं प्रति विद्योतते विद्युत्। साधुर्देवदत्तो मातरं प्रति॥

## उपपदमतिङ् ॥ १९ ॥

नित्यमिति वर्त्तते। उपपदमतिङन्तं समर्थेन शब्दान्तरेण सह समस्यते नित्यम्, तत्पुरुषश्च समासो भवति। कुम्भकारः। नगरकारः। अतिङिति किम्? एधानाहारको व्रजति। ननु च "सुप् सुपा" इति वर्त्तते, तत्र कुतस्तिङन्तेन सह समासप्रसङ्गः? एवं तर्हि ज्ञापयति—एतयोर्योगयोः सुप् सुपेति न सम्बध्यत इति। तेन 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इत्येतदुपपन्नं भवति—अश्वक्रीती, धनक्रीती॥

## अमैवाव्ययेन ॥ २० ॥

पूर्वेणैव समासे सिद्धे नियमार्थं वचनम्। अव्ययेनोपपदस्य यः समासः सोऽमैव भवति, नान्येन। स्वादुङ्कारं भुङ्क्ते। सम्पन्नङ्कारं भुङ्क्ते। लवणङ्कारं भुङ्क्ते। अमैवेति किम्? "कालसमयवेलासु तुमुन्"—कालो भोक्तुम्(१)। एवकारकरणमुपपदविशेषणार्थम्। अमैव(२)। यत्तुल्यविधानमुपपदं तस्य समासो यथा स्यात्, अमा चान्येन च यत्तुल्यविधानं तस्य मा भूत्—अग्रे भुक्त्वा, अग्रे भोजम्॥

## तृतीयाप्रभृतीन्यन्यतरस्याम् ॥ २१ ॥

अमैवेत्यनुवर्त्तते। "उपदंशस्तृतीयायाम्" इत्यतः प्रभृति यान्युपपदानि तान्यमैवाव्ययेन सहान्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति। उभयत्र विभाषेयम्। यद-

---

अवादयः—क्रुष्ट आदि अर्थों में वर्त्तमान अव आदि का तृतीयान्त के साथ तत्पुरुष समास होता है।

पर्यादयो—ग्लान आदि अर्थों में वर्त्तमान परि आदि का चतुर्थ्यन्त के साथ तत्पुरुष समास होता है।

निरादयः—क्रान्त आदि अर्थों में वर्त्तमान निर् आदि का पञ्चम्यन्त के साथ तत्पुरुष समास होता है।

इवेन सह—इव शब्द के साथ तत्पुरुष समास, पूर्वपद की विभक्ति का अलोप एवं पूर्वपद-प्रकृतिस्वर समझना चाहिए।

प्रादिप्रसङ्गे—प्रादि के समासविधान के प्रसङ्ग में कर्मप्रवचनीयों का समास-प्रतिषेध समझना चाहिए।

उपपद—तिङन्तभिन्न उपपद का समर्थ शब्द के साथ नित्य तत्पुरुष समास होता है।

अमैवाव्ययेन—अव्यय के साथ यदि अतिङन्त उपपद का समास हो तो केवल अमन्त अव्यय के साथ ही।

तृतीया—'उपदंशस्तृतीयायाम्' सूत्र से लेकर जितने भी उपपद हैं उनका समास केवल अमन्त अव्यय के साथ ही विकल्प से होता है।

---

(१) क्वचिदयमधिकः पाठः-समयो भोक्तुम्। वेला भोक्तुम् इति।

(२) तुल्यविधानमिति-येन वाक्येनामेव प्रत्ययो विधीयते न तु प्रत्ययान्तरं तेन यदुपपदं निर्दिश्यते तदमेव तुल्यविधानम्।

मेव तुल्यविधानमुपपदं तस्य प्राप्ते यथा—"उपदंशस्तृतीयायाम्" इति। यत्पुनरमा चान्येन च तुल्यविधानं तस्याप्राप्ते यथा—"अव्यये यथाभिप्रेताख्याने कृञः क्त्वाणमुलौ" इति। मूलकोपदंशं भुङ्क्ते, मूलकेनोपदंशं भुङ्क्ते। उच्चैःकारमाचष्टे, उच्चैः(१) कारम्। अमैवेत्येव—"पर्याप्तिवचनेष्वलमर्थेषु"—पर्याप्तो भोक्तुम्, प्रभुर्भोक्तुम्॥

## क्त्वा च ॥ २२ ॥

अमैवेति पूर्वयोगेऽनुवृत्तम्, तेनान्यत्र न प्राप्नोतीति वचनमारभ्यते। क्त्वाप्रत्ययेन सह तृतीयाप्रभृतीन्युपपदानि अन्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति। उच्चैः कृत्य। उच्चैः कृत्वा। "अव्यये यथाभिप्रेताख्याने" इति क्त्वाप्रत्ययः। समासपक्षे ल्यबेव। तृतीयाप्रभृतीनीत्येव—अलं कृत्वा, खलु कृत्वा॥

## शेषो बहुव्रीहिः ॥ २३ ॥

(२)उपयुक्तादन्यः शेषः। शेषः समासो बहुव्रीहिसंज्ञो भवति। कश्च शेषः? यत्रान्यः समासो नोक्तः। वक्ष्यति—"अनेकमन्यपदार्थे"—चित्रगुः, शबलगुः, कृष्णोत्तरासङ्गः। शेष इति किम्? उन्मत्तगङ्गम्, लोहितगङ्गम्। बहुव्रीहिप्रदेशाः—"न बहुव्रीहौ" इत्येवमादयः॥

## अनेकमन्यपदार्थे ॥ २४ ॥

अनेकं सुबन्तमन्यपदार्थे वर्तमानं(३)समस्यते, बहुव्रीहिश्च समासो भवति। प्रथमार्थमेकं वर्जयित्वा सर्वेषु विभक्त्यर्थेषु बहुव्रीहिर्भवति। प्राप्तमुदकं यं ग्रामं प्राप्तोदको ग्रामः। ऊढरथोऽनड्वान्। उपहृतपशू रुद्रः। उद्धृतौदना स्थाली। चित्रगुर्देवदत्तः। वीरपुरुषको ग्रामः। प्रथमार्थे तु न भवति—वृष्टे देवे गतः। अनेकग्रहणं किम्? बहूनामपि यथा स्यात्—

सुसूक्ष्मजटकेशेन (४)सुलभाजिनवाससा।
पुत्री पर्वतराजस्य कुतो हेतोर्विवाहिता(५)॥

※बहुव्रीहिः समानाधिकरणानामिति वक्तव्यम्※। व्यधिकरणानां मा भूत्—पञ्चभि-

---

क्त्वा च—क्त्वाप्रत्ययन्त के साथ तृतीया प्रभृति उपपदों का विकल्प से तत्पुरुष समास होता है।

शेषो बहुव्रीहिः—उपर्युक्त समास से अतिरिक्त समासों की 'बहुव्रीहि' संज्ञा होती है।

अनेकमन्य—अन्यपदार्थ में वर्त्तमान अनेक सुबन्तों में बहुव्रीहि समास होता है।

बहुव्रीहिः—बहुव्रीहि समास केवल समानाधिकरण अनेक सुबन्तों के बीच ही समझना चाहिए।

---

(१) उच्चैःकारमिति-यदा समासस्तदा कृदुत्तरपदप्रकृतिस्वरः, आदिर्णमुल्यन्यतरस्यामित्याद्युदात्तत्वम्। यदा तु न समासस्तदोच्चैरित्यन्तोदात्तम्, स्वरादिषु तथा पाठात्। कारकमित्याद्युदात्तम् इति पदमंजर्यां स्पष्टम्।

(२) तत्पुरुष इति निवृत्तमिति क्वचिदधिकः पाठः। उपयुक्तात् योऽन्यः स शेषः इति न्यासीयः पाठः।

(३) सह इति अधिकं पदमञ्जर्याम्।

(४) सुलभेत्यत्र सुगजेति पदमंजर्याम्।

(५) क्वचिदीदृशः पाठो दृश्यते, स चायम्—सुसूक्ष्मजटकेशेन सुनताजिनवाससा। समन्तशितिरन्ध्रेण द्वयोर्वृत्तौ न सिध्यति॥ इति।

र्भुक्तमस्य। ❀अव्ययानां च (१)बहुव्रीहिर्वक्तव्यः❀। उच्चैर्मुखः। नीचैर्मुखः। ❀सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च वक्तव्यः❀। कण्ठे स्थितः(२) कालोऽस्य कण्ठेकालः। उरसिलोमा। उष्ट्रस्य मुखमिव मुखं यस्य स उष्ट्रमुखः। खरमुखः। ❀समुदायविकारषष्ठ्याश्च बहुव्रीहिरुत्तरपदलोपश्चेति वक्तव्यम्❀। केशानां सङ्घातः केशसङ्घातः, केशसङ्घातश्चूडाऽस्य केशचूडः। सुवर्णस्य विकारोऽलङ्कारोऽस्य सुवर्णालङ्कारः। ❀प्रादिभ्यो धातुजस्योत्तरपदस्य लोपश्च वा बहुव्रीहिर्वक्तव्यः❀। प्रपतितं पर्णमस्य प्रपर्णः, प्रपतितपर्णः। प्रपतितं पलाशमस्य प्रपलाशः, प्रपतितपलाशः। ❀नञोऽस्त्यर्थानां बहुव्रीहिर्वा चोत्तरपदलोपश्च वक्तव्यः❀। अविद्यमानः पुत्रो यस्य अपुत्रः, अविद्यमानपुत्रः। अभार्यः, अविद्यमानभार्यः। ❀सुबधिकारेऽस्तिक्षीरादीनां बहुव्रीहिर्वक्तव्यः❀। अस्तिक्षीरा ब्राह्मणी। अस्त्यादयो निपाताः॥

## संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये ॥ २५ ॥

संख्येये या संख्या वर्त्तते तया सहाव्ययासन्नादूराधिकसंख्याः समस्यन्ते, बहुव्रीहिश्च समासो भवति। अव्यय–उपदशाः। उपविंशाः। आसन्नदशाः। आसन्नविंशाः। अदूरदशाः। अदूरविंशाः। अधिकदशाः। अधिकविंशाः। संख्या–द्वित्राः। त्रिचतुराः। द्विदशाः। संख्येति किम्? पञ्च ब्राह्मणाः। अव्ययासन्नादूराधिकसंख्या इति किम्? ब्राह्मणाः पञ्च। संख्येये इति किम्? अधिका विंशतिर्गवाम्॥

## दिङ्नामान्यन्तराले ॥ २६ ॥

दिशां नामानि दिङ्नामानि। दिङ्नामानि सुबन्तानि अन्तराले वाच्ये समस्यन्ते, बहुव्रीहिश्च समासो भवति। दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं दक्षिणपूर्वा दिक्। पूर्वोत्तरा। उत्तरपश्चिमा। पश्चिमदक्षिणा। ❀सर्वनाम्नो वृत्तिमात्रे(३) पुंवद्भावः❀। नामग्रहणं रूढ्यर्थम्। इह मा भूत्—ऐन्द्र्याश्च कौबेर्याश्च दिशोर्यदन्तरालमिति॥

---

**अव्ययानाम्**—अव्ययों के साथ बहुव्रीहि समास अवगन्तव्य है।

**सप्तम्युपमान**—सप्तम्यन्त पूर्वपद तथा उपमानवाचक पूर्वपद का समर्थ सुबन्त के साथ बहुव्रीहि समास तथा उत्तरपद ( मध्यम पद ) का लोप भी समझना चाहिए।

**समुदाय**—समुदायार्थक तथा विकारार्थक षष्ठी विभक्ति से युक्त पदों का भी समर्थ सुबन्त के साथ बहुव्रीहि समास और उत्तरपद का लोप समझना चाहिए।

**प्रादिभ्यो**—प्रादिविशिष्टधातुजन्य पद का समर्थ सुबन्त के साथ बहुव्रीहि समास तथा विकल्प से प्राद्युत्तरवर्त्ती धातुज शब्द का लोप समझना चाहिए।

**नञोऽस्त्यर्थानाम्**—अस्त्यर्थक-धातु-निष्पन्न एवं नञ् विशिष्ट सुबन्त का समर्थ सुबन्त के साथ विकल्प से बहुव्रीहि समास तथा अस्त्यर्थक धातुज शब्द का लोप समझना चाहिए।

**सुबधिकारे**—सुबन्ताधिकार में 'अस्तिक्षीरा' आदि में बहुव्रीहि समास का विधान करना चाहिए।

**संख्यया**—संख्येयार्थक संख्या-वाचक पदों के साथ अव्यय, आसन्न, अदूर, अधिक तथा संख्यावाचक शब्दों का बहुव्रीहि समास होता है।

**दिङ्नामान्यन्त**—अन्तराल ( दिङ्मध्य ) के वाच्य होने पर दिग्वाचक सुबन्तों का परस्पर बहुव्रीहि समास होता है।

**सर्वनाम्नो**—सभी वृत्तियों (कृत, तद्धित ,समास, एकशेष तथा सनाद्यन्त धातुरूप) में सर्वनाम पद को पुंवद्भाव हो जाता है।

---

( १ ) बहुव्रीहिर्वक्तव्य इति पाठो न्यासे नास्ति।

( २ ) अत्र स्थ इति पदमंजर्य्याम्।

( ३ ) वृत्तिमात्रे इत्यस्याग्रे पूर्वपदस्येत्यपि क्वचित्पाठः।

## तत्र तेनेदमिति सरूपे ॥ २७ ॥

तत्रेति सप्तम्यन्तं गृह्यते, तेनेति तृतीयान्तम् । सरूपग्रहणं प्रत्येकमभिसम्बद्ध्यते । तत्रेति सप्तम्यन्ते सरूपे पदे तेनेति च तृतीयान्ते इदमित्येतस्मिन्नर्थे समस्येते, बहुव्रीहिश्च समासो भवति । इतिकरणश्चेह विवक्षार्थो लौकिकमर्थमनुसारयति । ततो ग्रहणं प्रहरणं कर्मव्यतिहारो युद्धं च समासार्थ इति सर्वमितिकरणाल्लभ्यते । यत्तत्रेति निर्दिष्टं ग्रहणं चेत्तद्भवति, यत्तेनेति निर्दिष्टं प्रहरणं चेत्तद्भवति, यदिदमिति निर्दिष्टं युद्धं चेत्तद्भवति । केशेषु केशेषु च गृहीत्वा इदं युद्धं वृत्तं केशाकेशि । कचाकचि । दण्डैश्च दण्डैश्च प्रहृत्य इदं युद्धं वृत्तं दण्डादण्डि । मुशलामुशलि । "इच् कर्मव्यतिहारे" इति इच् समासान्तः, स चाव्ययम् । "अन्येषामपि दृश्यते" इति पूर्वपदस्य दीर्घत्वम् । सरूपग्रहणं किम् ? हलैश्च मुसलैश्च प्रहृत्य इदं युद्धं प्रवृत्तम् ॥

## तेन सहेति तुल्ययोगे ॥ २८ ॥

सहेत्येतच्छब्दरूपं तुल्ययोगे वर्तमानं तेनेति तृतीयान्तेन सह समस्यते, बहुव्रीहिश्च समासो भवति । सह(१) पुत्रेणागतः सपुत्रः । सच्छात्रः । सकर्मकरः । तुल्ययोग इति किम् ? सहैव दशभिः पुत्रैर्भारं वहति गर्दभी । विद्यमानैरेव दशभिः पुत्रैर्भारं वहतीत्यर्थः । कथं सकर्मकः, सलोमकः, सपक्षक इति, न ह्यत्र तुल्ययोगो गम्यते ? किं तर्हि, विद्यमानता ? प्रायिकं तुल्ययोग इति विशेषणम्, अन्यत्रापि समासो दृश्यते ॥

## चार्थे द्वन्द्वः ॥ २९ ॥

अनेकमिति वर्तते । अनेकं सुबन्तं चार्थे वर्त्तमानं समस्यते, द्वन्द्वसंज्ञश्च समासो भवति । (२)समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । तत्र समुच्चयान्वाचययोरसामर्थ्यान्नास्ति समासः । इतरेतरयोगे समाहारे च समासो विधीयते । प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ । धवश्च खदिरश्च पलाशश्च धवखदिरपलाशाः । वाक्च त्वक्च वाक्त्वचम् । वाग्दृषदम् । द्वन्द्वप्रदेशाः—"द्वन्द्वं च" इत्येवमादयः ॥

## उपसर्जनं पूर्वम् ॥ ३० ॥

समास इति वर्त्तते । उपसर्जनसंज्ञकं समासे पूर्वं प्रयोक्तव्यम् । पूर्ववचनं परप्रयोगनिवृत्त्यर्थम् । अनियमो हि स्यात् । द्वितीया-कष्टश्रितः । तृतीया-शङ्कुलाखण्डः(३) । चतुर्थी-यूपदारु । पञ्चमी-वृकभयम् । षष्ठी-राजपुरुषः । सप्तमी-अक्षशौण्डः ॥

---

**तत्र तेनेदमिति**—समान स्वरूपवाले सप्तम्यन्त पदों में और समान स्वरूपवाले तृतीयान्त पदों में परस्पर बहुव्रीहि समास होता है 'इदम्' के अर्थ में ।

**तेन सहेति**—तुल्ययोग में वर्त्तमान 'सह' शब्द का तृतीयान्त सुबन्त के साथ बहुव्रीहि समास होता है ।

**चार्थे द्वन्द्वः**—'च' के अर्थ में वर्त्तमान अनेक समर्थ सुबन्तों में द्वन्द्व समास होता है ।

**उपसर्जनम्**—समासप्रकरण में उपसर्जनसंज्ञक शब्दों का पूर्वप्रयोग होता है ।

(१) सह पुत्रेणागतः इति विग्रहो न्यासस्वसात् मूले नासीदित्यनुमीयते ।

(२) यदा परस्परनिरपेक्षाः पदार्था एकस्मिन् प्रतिसम्बन्धिनि समुच्चीयन्ते तदा समुच्चयः । यदैकस्य प्राधान्यात्तदनुरोधेन त्वितरदन्वाचीयते तदान्वाचयः । परस्परापेक्षाणामवयवभेदानुगत इतरेतरयोगः । परस्परामेव तिरोहितावयवभेदः संहतिप्रधानः समाहारः ।

(३) क्वचिदधिकमत्र दृश्यते—किरिकाण इति ।

## राजदन्तादिषु परम् ॥ ३१ ॥

पूर्वनिपाते प्राप्ते परप्रयोगार्थं वचनम्। राजदन्तादिषु परमुपसर्जनं प्रयोक्तव्यम्। न केवलमुपसर्जनस्य, अन्यस्यापि यथालक्षणं विहितस्य पूर्वनिपातस्यापवादः। परनिपातो विधीयते। दन्तानां राजा राजदन्तः। वनस्याग्रे अग्रेवणम्, निपातनादलुक्। राजदन्तः। अग्रेवणम्। लिप्तवासितम्। नग्नमुषितम्। सिक्तसंमृष्टम्। मृष्टलुञ्चितम्। अवक्लिन्नपक्वम्। अर्पितोप्तम्। उप्तगाढम्। पूवकालस्य परनिपातः। उलूखलमुसलम्। तण्डुलकिण्वम्। दृषदुपलम्। आरग्वायनबन्धकी। चित्ररथबाह्लीकम्। आवन्त्यश्मकम्। शूद्रार्यम्। स्नातकराजानौ। विष्वक्सेनार्जुनौ। अक्षिभ्रुवम्। दारगवम्। शब्दार्थौ। धर्मार्थौ। कामार्थौ। अनियमश्चात्रेष्यते। अर्थशब्दौ। अर्थधर्मौ। अर्थकामौ। तत्कथम्? वक्तव्यमिदम्—धर्मादिषूभयमिति। वैकारिकतम्। गजवाजम्। गोपालधानीपूलासम्। पूलासककरण्डम्। स्थूलपूलासम्। उशीरबीजम्। सिञ्जास्थम्। चित्रास्वाती। भार्यापती। जायापती। जम्पती। दम्पती। जायाशब्दस्य जम्भावो दम्भावश्च निपात्यते। पुत्रपती। पुत्रपशू। केशश्मश्रू। श्मश्रुकेशौ। शिरोबीजम्। सर्पिर्मधुनी। मधुसर्पिषी। आद्यन्तौ। अन्तादी। गुणवृद्धी। वृद्धिगुणौ॥

## द्वन्द्वे घि ॥ ३२ ॥

पूर्वमिति वर्त्तते। द्वन्द्वे समासे घ्यन्तं पूर्वं प्रयोक्तव्यम्। पटुगुप्तौ। मृदुगुप्तौ। अनेकप्राप्तावेकस्य नियमः, शेषे त्वनियमः। पटुशुक्लाः। पटुशुक्लमृदवः। द्वन्द्व इति किम्? विस्पष्टपटुः॥

## अजाद्यदन्तम् ॥ ३३ ॥

द्वन्द्व इति वर्त्तते(१)। अजाद्यदन्तं शब्दरूपं द्वन्द्वे समासे पूर्वं प्रयोक्तव्यम्। उष्ट्रखरम्। उष्ट्रशशकम्। ॐबहुष्वनियमःॐ। (२)अश्वरथेन्द्राः। इन्द्ररथाश्वाः। ॐद्वन्द्वे घ्यजाद्यदन्तं विप्रतिषेधेनॐ। इन्द्राग्नी। इन्द्रवायू। तपरकरणं किम्? अश्वावृषौ, वृषाश्वे इति वा॥

## अल्पाच्तरम् ॥ ३४ ॥

द्वन्द्व इति वर्त्तते। अल्पाच्तरं शब्दरूपं द्वन्द्वे समासे पूर्वं प्रयोक्तव्यम्। प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ। धवखदिरपलाशाः। बहुष्वनियमः। शङ्खदुन्दुभिवीणाः। वीणाशङ्खदुन्दुभयः। ॐऋतुनक्षत्राणामानुपूर्व्येण समानाक्षराणां पूर्वनिपातो वक्तव्यःॐ।

---

**राजदन्तादिषु**—परन्तु 'राजदन्त' आदि शब्दों में उपसर्जन का पर-प्रयोग होता है।

**द्वन्द्वे घि**—द्वन्द्व समास में 'घि' संज्ञक शब्द का पूर्व-प्रयोग होता है।

**अजाद्यदन्तम्**—अजादि एवं अदन्त शब्द का द्वन्द्वसमास में पूर्व-प्रयोग होता है।

**बहुष्वनियमः**—परन्तु अनेक अजादि एवम् अदन्त शब्दों के होने पर किसका पूर्व-प्रयोग हो—इसका नियम नहीं है।

**द्वन्द्वे**—द्वन्द्वसमास में घिसंज्ञक अजाद्यदन्त का पूर्व-प्रयोग विप्रतिषेध के आधार पर समझना चाहिए।

**अल्पाच्तरम्**—द्वन्द्व-समास में अल्प अच् से सम्पन्न शब्द का पूर्व-प्रयोग होता है।

**ऋतुनक्षत्राणाम्**—समान अक्षरोंवाले ऋतुवाचक शब्दों तथा नक्षत्रवाचक शब्दों में उपस्थिति-क्रम से पूर्व-प्रयोग होता है।

---

(१) पूर्वमिति च इति क्वचित्पाठेऽधिकम्।

(२) अश्वेन्द्ररथाः, रथाश्वेन्द्राः इति पदमंजर्यां पाठः।

हेमन्तशिशिरवसन्ताः। चित्रास्वाती। कृत्तिकारोहिण्यौ। समानाक्षराणामिति किम्? ग्रीष्मवसन्तौ। ॐलघ्वक्षरं पूर्वं निपततीति वक्तव्यम्ॐ। कुशकाशम्। शरशादम्। ॐअभ्यर्हितं च पूर्वं निपततीति वक्तव्यम्ॐ। मातापितरौ। श्रद्धामेधे। दीक्षातपसी। ॐवर्णानामानुपूर्व्येण पूर्वनिपातःॐ। ब्राह्मणक्षत्रियविट्शूद्राः। समानाक्षराणामित्यत्र नास्ति। ॐभ्रातुश्च ज्यायसः पूर्वनिपातो वक्तव्यःॐ। युधिष्ठिरार्जुनौ। ॐसंख्याया अल्पीयस्याः(१) पूर्वनिपातो वक्तव्यःॐ। द्वित्राः। त्रिचतुराः। नवतिशतम्॥

## सप्तमीविशेषणे बहुव्रीहौ॥ ३५॥

सर्वोपसर्जनत्वाद्बहुव्रीहेरनियमे प्राप्ते नियमार्थं वचनम्। सप्तम्यन्तं विशेषणं च बहुव्रीहिसमासे पूर्वं प्रयोक्तव्यम्। कण्ठेकालः। उरसिलोमा। विशेषणम्—चित्रगुः, शबलगुः। ॐसर्वनामसंख्ययोरुपसंख्यानम्ॐ। सर्वश्वेतः। सर्वकृष्णः। द्विशुक्लः। द्विकृष्णः। अनयोरेव मिथः (२)संप्रधारणायां परत्वात्संख्यायाः पूर्वनिपातः। द्व्यन्यः। त्र्यन्यः। ॐवा प्रियस्य पूर्वनिपातःॐ। गुडप्रियः। प्रियगुडः। ॐसप्तम्याः पूर्वनिपाते प्राप्ते गड्वादिभ्यः सप्तम्यन्तं परम्ॐ। गडुकण्ठः। गडुशिराः। कथं वहेगडुः? प्राप्तस्य चाबाधा व्याख्येया॥

## निष्ठा॥ ३६॥

(३)निष्ठान्तं च बहुव्रीहिसमासे पूर्वं प्रयोक्तव्यम्। कृतकटः। भिक्षितभिक्षः। अवमुक्तोपानत्कः। आहूतसुब्रह्मण्यः। ननु च विशेषणमेवात्र निष्ठा? नैष नियमः, विशेषणविशेष्यभावस्य विवक्षानिबन्धनत्वात। (४)कटे कृतमनेनेति वा विग्रहीतव्यम्। ॐनिष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परवचनम्ॐ। शार्ङ्गजग्धी। पलाण्डुभक्षिती। मासजातः। संवत्सरजातः। सुखजातः। दुःखजातः। कथं कृतकटः, भुक्तौदनः? प्राप्तस्य

---

**लघ्वक्षरम्**—लघ्वक्षर शब्द का पूर्व-प्रयोग समझना चाहिए।

**अभ्यर्हितम्**—अभ्यर्हित का भी पूर्व-प्रयोग समझना चाहिए।

**वर्णानाम्**—जातिवाचक पदों में उत्कर्ष-क्रम से पूर्व-प्रयोग की व्यवस्था है।

**भ्रातुश्च**—भ्राताओं में ज्येष्ठ का पूर्व-प्रयोग समझना चाहिए।

**संख्यायाः**—संख्यावाचक पदों में अल्पसंख्यावाचक शब्द का पूर्व प्रयोग होता है।

**सप्तमी**—बहुव्रीहि समास में सप्तम्यन्त तथा विशेषण पद का पूर्व-प्रयोग होता है।

**सर्वनाम**—बहुव्रीहि समास में सर्वनाम तथा संख्यावाचक शब्द का पूर्व-प्रयोग समझना चाहिए।

**वा प्रियस्य**—प्रिय शब्द का पूर्व-प्रयोग विकल्प से होता है।

**सप्तम्याः**—गडु आदि शब्दों के साथ समस्यमान सप्तम्यन्त का पर-प्रयोग ही समझना चाहिए।

**निष्ठा**—बहुव्रीहि समास में निष्ठा-प्रत्ययान्त का पूर्व-प्रयोग होता है।

**निष्ठायाः**—निष्ठा-प्रत्यान्त के पूर्व-प्रयोग के प्रसङ्ग में यह समझना चाहिए कि जातिवाचक, कालवाचक तथा सुख आदि शब्दों के साथ समस्यमान निष्ठान्त शब्दों का पर-प्रयोग ही होता है।

---

(१) अल्पीयसः इत्यपि क्वचित्पाठः।

(२) इदम् वस्तु इदमेवेति निरूपणा सम्प्रधारणा।

(३) क्वचिदधिकः पाठः—बहुव्रीहाविति वर्तते इति।

(४) कटे कटेन कृतमिति वा विग्रहीतव्यमिति इति पदमंजरीसम्मतः पाठः।

चाबाधा व्याख्येया। ※प्रहरणार्थेभ्यश्च परे निष्ठासप्तम्यौ भवत इति वक्तव्यम्※। अस्युद्यतः। दण्डपाणिः। कथमुद्यतगदः, उद्यतासिः? प्राप्तस्य चाबाधा व्याख्येया॥

## वाऽऽहिताग्न्यादिषु ॥ ३७ ॥

निष्ठेति पूर्वनिपाते प्राप्ते विकल्प उच्यते। आहिताग्न्यादिषु निष्ठान्तं पूर्वं वा प्रयोज्यम्। अग्न्याहितः। आहिताग्निः। जातपुत्रः। पुत्रजातः। जातदन्तः। जातश्मश्रुः। तैलपीतः। घृतपीतः। ऊढभार्यः। गतार्थः। आकृतिगणश्चायम्। तेन गड्डुकण्ठप्रभृतय इहैव द्रष्टव्याः॥

## कडाराः कर्मधारये ॥ ३८ ॥

गुणशब्दानां विशेषणत्वात्पूर्वनिपाते प्राप्ते विकल्प उच्यते। कडारादयः शब्दाः कर्मधारये समासे वा पूर्वं प्रयोक्तव्याः। कडारजैमिनिः। जैमिनिकडारः। कडार। गडुल। काण। खञ्ज। कुण्ठ। खञ्जर। खलति। गौर। वृद्ध। भिक्षुक। पिङ्गल। तनु। वटर। कर्मधारय इति किम्? कडारपुरुषो ग्रामः॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ
द्वितीयाध्यायस्य द्वितीयः पादः॥ २॥



---

**प्रहरणार्थेभ्यश्च**—प्रहरणार्थक शब्दों के साथ समस्यमान निष्ठान्त तथा सप्तम्यन्त शब्दों का भी पर-प्रयोग समझना चाहिए।

**वाऽऽहिता**—'आहिताग्नि' आदि शब्दों के प्रसङ्ग में निष्ठान्त शब्दों का विकल्प से पूर्व-प्रयोग होता है।

**कडाराः**—'कडार' आदि शब्दों का कर्मधारय समास में विकल्प से पूर्व-प्रयोग होता है।

द्वितीयाध्याय का द्वितीय पाद समाप्त हुआ।



# अथ द्वितीयाध्यायस्य तृतीयः पादः ॥

## अनभिहिते ॥ १ ॥

अनभिहित इत्यधिकारोऽयं वेदितव्यः। यदित ऊर्ध्वमनुक्रमिष्यामोऽनभिहित इत्येवं तद्वेदितव्यम्। अनभिहिते अनुक्ते अनिर्दिष्टे कर्मादौ विभक्तिर्भवति। केनानभिहिते? तिङ्कृत्तद्धितसमासैः (१)परिसंख्यानम्। वक्ष्यति—"कर्म्मणि द्वितीया"—कटं करोति, ग्रामं गच्छति। अनभिहित इति किम्? तिङ्-क्रियते कटः। कृत्-कृतः कटः। तद्धितः-शत्यः, शतिकः। समासः-प्राप्तमुदकं यं ग्रामं प्राप्तोदको ग्रामः। परिसंख्यानं किम्? कटं करोति, भीष्ममुदारं दर्शनीयम्। "बहुषु बहुवचनम्" इत्येवमादिना संख्या वाच्यत्वेन विभक्तीनामुपदिष्टाः, यत्र विशेषणार्थमिदमारभ्यते—अनभिहितकर्माद्याश्रयेष्वेकत्वादिषु द्वितीयादयो वेदितव्या इति॥

## कर्मणि द्वितीया ॥ २ ॥

द्वितीयादयः शब्दाः पूर्वाचार्यैः सुपां त्रिकेषु स्मर्यन्ते, तैरेवात्र व्यवहारः। कर्मणि कारके या संख्या तत्र द्वितीया विभक्तिर्भवति। कटं करोति। ग्रामं गच्छति।

॥उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु।
द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते॥ ॥

उभयतो ग्रामम्। सर्वतो ग्रामम्। धिग्देवदत्तम्। उपर्युपरि ग्रामम्। अध्यधि ग्रामम्। अधोऽधो ग्रामम्। ॥अभितःपरितःसमयानिकषाहाप्रतियोगेषु च दृश्यते॥। अभितो ग्रामम्। परितो ग्रामम्। समया ग्रामम्। निकषा ग्रामम्। हा देवदत्तम्। बुभुक्षितं न प्रति भाति किंचित्॥

## तृतीया च होश्छन्दसि ॥ ३ ॥

कर्मणीति वर्त्तते। द्वितीयायां प्राप्तायां तृतीया विधीयते, चशब्दात्सा च भवति। छन्दसि विषये जुहोतेः कर्मणि कारके तृतीया विभक्तिर्भवति, द्वितीया च। यवाग्वाऽग्निहोत्रं जुहोति। यवागूमग्निहोत्रं जुहोति। छन्दसीति किम्? यवागूमग्निहोत्रं जुहोति॥

## अन्तरान्तरेण युक्ते ॥ ४ ॥

द्वितीया स्वर्यते, न तृतीया। अन्तराऽन्तरेणशब्दौ निपातौ साहचर्याद् गृह्येते।

---

**अनभिहिते**—यहाँ से उत्तर निर्दिश्यमान सूत्रों में 'अनिभिहिते' (अनुक्त होने पर) का अधिकार जाता है।

**कर्मणि**—अनभिहित कर्म से द्वितीया विभक्ति होती है।

**उभसर्व**—तसि-प्रत्यान्त उभ शब्द तथा सर्व शब्द, धिक्, आम्रेडितान्त उपरि, अधि एवम् अधस् शब्दों के योग में भी द्वितीया विभक्ति देखी जाती है।

**अभितः**—अभितः, परितः, समया, निकषा, हा, तथा प्रति शब्दों के योग में भी द्वितीया विभक्ति देखी जाती है।

**तृतीया च**—वेद मे 'हु'धातु के कर्म से तृतीया भी होती है और द्वितीया भी।

**अन्तरा**—अन्तरा तथा अन्तरेण के योग में द्वितीया विभक्ति होती है।

---

(१) बहुषु प्रयुक्तेषु केषांचिद्वर्जनेन केषांचित्कार्यान्वय प्रतिपादनं परिसंख्यानम्।

अभ्यां योगे द्वितीया विभक्तिर्भवति। षष्ठ्यपवादो योगः। तत्रान्तराशब्दो मध्यमाधेयप्रधानमाचष्टे। अन्तरेणशब्दस्तु तत्त्व विनार्थे च। अन्तरा त्वां च मां च कमण्डलुः। अन्तरेण त्वां च मां च कमण्डलुः। अन्तरेण पुरुषकारं न किंचिल्लभ्यते। युक्तग्रहणं किम्? अन्तरा तत्तशिलां पाटलिपुत्रं च स्रुघ्नस्य प्राकारः॥

## कालाध्वनोरत्यन्तसंयोगे ॥ ५ ॥

कालशब्देभ्योऽध्वशब्देभ्यश्च द्वितीया विभक्तिर्भवति अत्यन्तसंयोगे गम्यमाने। क्रियागुणद्रव्यैः साकल्येन कालाध्वनोः संबन्धोऽत्यन्तसंयोगः। मासमधीते। संवत्सरमधीते। मासं कल्याणी। संवत्सरं कल्याणी। मासं गुडधानाः। संवत्सरं गुडधानाः। अध्वनः खल्वपि-क्रोशमधीते, योजनमधीते, क्रोशं कुटिला नदी, योजनं कुटिला नदी, क्रोशं पर्वतः, योजनं पर्वतः। अत्यन्तसंयोग इति किम्? मासस्य द्विरधीते, क्रोशस्यैकदेशे पर्वतः(१)॥

## अपवर्गे तृतीया ॥ ६ ॥

"कालाध्वनोरत्यन्तसंयोगे" इति वर्त्तते। अपवर्गः फलप्राप्तौ सत्यां क्रियापरिसमाप्तिः। अपवर्गे गम्यमाने कालाध्वनोरत्यन्तसंयोगे तृतीया विभक्तिर्भवति। मासेनानुवाकोऽधीतः। संवत्सरेणानुवाकोऽधीतः। अध्वनः-क्रोशेनानुवाकोऽधीतः, योजनेनानुवाकोऽधीतः। अपवर्ग इति किम्? क्रोशमधीतोऽनुवाकः, मासमधीतः। (२)कर्तृव्यावृत्तौ फलसिद्धेरभावात् तृतीया न भवति। मासमधीतोऽनुवाको न चानेन गृहीतः॥

## सप्तमीपञ्चम्यौ कारकमध्ये ॥ ७ ॥

कालाध्वनोरिति वर्त्तते। कारकयोर्मध्ये यौ कालाध्वानौ ताभ्यां सप्तमीपञ्चम्यौ विभक्ती भवतः। अद्य भुक्त्वा देवदत्तो द्व्यहे द्व्यहाद्वा भोक्ता। त्र्यहे त्र्यहाद्वा भोक्ता। कर्तृशक्त्योर्मध्ये कालः। इहस्थोऽयमिष्वासः क्रोशे लक्ष्यं विद्ध्यति, क्रोशाल्लक्ष्यं विद्ध्यति। कर्तृकर्मणोः कारकयोः कर्मापादानयोः कर्माधिकरणयोर्वा मध्ये क्रोशः। संख्यातानुदेशो न भवति, अस्वरितत्वात्॥

## कर्मप्रवचनीययुक्ते द्वितीया ॥ ८ ॥

कर्मप्रवचनीयैर्युक्ते द्वितीया विभक्तिर्भवति। अनुर्लक्षणे। शाकल्यस्य संहितामनुप्रावर्षत्। आगस्त्यमन्वसिञ्चन् प्रजाः॥

---

कालाध्वनोः—कालवाचक तथा मार्गवाचक शब्दों से द्वितीया विभक्ति होती है यदि अत्यन्तसंयोग की प्रतीति होती हो।

अपवर्गे—फलप्राप्ति के बाद क्रिया की समाप्ति के गम्यमान होने पर कालवाचक तथा अध्ववाचक शब्दों से अत्यन्तसंयोग की प्रतीति होने पर तृतीया विभक्ति होती है।

सप्तमी—दो कारकों के मध्य में वर्तमान कालवाचक तथा अध्ववाचक शब्दों से सप्तमी तथा पञ्चमी होती है।

कर्मप्रवचनीय—कर्मप्रवचनीय से युक्त शब्दों से द्वितीया विभक्ति होती है।

---

(१) योजनस्यैकदेशे पर्वतः इति न्यासेऽधिकम्।

(२) कर्तृव्यावृत्ताविति अशक्त्यादिना कर्तुरुपरमादित्यर्थः, तत्र मध्ये क्रिया विच्छिन्नेति प्रवृत्त्यपायो न त्वपवृक्ततेति।

## यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ॥ ९ ॥

कर्मप्रवचनीययुक्त इति वर्त्तते। यस्मादधिकं यस्य चेश्वरवचनं कर्मप्रवचनीयैर्युक्ते तत्र सप्तमी विभक्तिर्भवति। उपखार्यां द्रोणः। उपनिष्के कार्षापणम्। यस्य चेश्वरवचनमिति स्वस्वामिनोर्द्वयोरपि पर्यायेण सप्तमी विभक्तिर्भवति। अधिब्रह्मदत्ते पञ्चालाः, अधिपञ्चालेषु ब्रह्मदत्त इति। द्वितीयापवादो योगः॥

## पञ्चम्यपाङ्परिभिः ॥ १० ॥

अप, आङ्, परि इत्येतैः कर्मप्रवचनीयैर्योगे पञ्चमी विभक्तिर्भवति। अप त्रिगर्तेभ्यो वृष्टो देवः। आ पाटलिपुत्राद् वृष्टो देवः। परि त्रिगर्तेभ्यो वृष्टो देवः। अपेन साहचर्यात्परेर्वर्जनार्थस्य ग्रहणम्। तेनेह भवति—वृक्षं परि विद्योतते विद्युत्॥

## प्रतिनिधिप्रतिदाने च यस्मात् ॥ ११ ॥

मुख्यसदृशः प्रतिनिधिः। दत्तस्य प्रतिनिर्यातनं प्रतिदानम्। यस्मात्प्रतिनिधिर्यतश्च प्रतिदानं तत्र कर्मप्रवचनीययुक्ते पञ्चमी विभक्तिर्भवति। अभिमन्युरर्जुनतः प्रति। प्रद्युम्नो वासुदेवतः प्रति। माषानस्मै तिलेभ्यः प्रतियच्छति। ननु च प्रतिनिधिप्रतिदाने कर्मप्रवचनीययुक्ते, न तु यतः प्रतिनिधिप्रतिदाने? नैष दोषः, (१)सम्बन्धसम्बन्धात्तस्यापि योगोऽस्त्येव॥

## गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ॥ १२ ॥

गत्यर्थानां धातूनां चेष्टाक्रियाणां परिस्पन्दक्रियाणां कर्मणि कारकेऽध्ववर्जिते द्वितीयाचतुर्थ्यौ भवतः। ग्रामं गच्छति। ग्रामाय गच्छति। ग्रामं व्रजति। ग्रामाय व्रजति। गत्यर्थग्रहणं किम्? ओदनं पचति। कर्मणीति किम्? अश्वेन व्रजति। चेष्टायामिति किम्? मनसा पाटलिपुत्रं गच्छति। अनध्वनीति किम्? अध्वानं गच्छति। अध्वन्यर्थग्रहणम्—पन्थानं गच्छति, मार्गं गच्छति। आस्थितप्रतिषेधश्चायं विज्ञेयः। आस्थितः सम्प्राप्तः, आक्रान्त उच्यते। यत्र उत्पथेन पन्थानं गच्छति तत्र भवितव्यमेव चतुर्थ्या—पथे गच्छतीति। द्वितीयाग्रहणं किम्? न चतुर्थ्येव विकल्प्येत, अपवादविषयेऽपि यथा स्यात्—ग्रामं गन्ता, ग्रामाय गन्ता। कृद्योगलक्षणा षष्ठी न भवति॥

---

**यस्मादधिकम्**—कर्मप्रवचनीय से युक्त होने पर जिससे अधिक और जिसका सामर्थ्य बतलाया जाय उससे सप्तमी विभक्ति होती है।

**पञ्चम्यपाङ्**—अप, आङ् तथा परि, इन तीन कर्मप्रवचनीयों के योग में पञ्चमी विभक्ति होती है।

**प्रतिनिधि**—कर्मप्रवचनीय से युक्त होने पर जिससे प्रतिनिधित्व हो तथा जिससे प्रतिदान हो उससे पञ्चमी विभक्ति होती है।

**गत्यर्थकर्मणि**—चेष्टा जिनकी क्रिया हो ऐसे गत्यर्थक धातुओं के मार्ग-भिन्न कर्मकारक से द्वितीया तथा चतुर्थी विभक्तियाँ होती हैं।

---

(१) सम्बन्धसम्बन्धादिति—सम्बध्यत इति सम्बन्धः प्रतिनिधिः, प्रतिदानञ्च। तदुभयमपि कर्मप्रवचनीयेन प्रतिना युज्यते। तेन सम्बन्धेन यः सम्बन्धः स सम्बन्धसम्बन्धः। प्रतिनिधिर्मुख्यमपेक्ष्य भवति, प्रतिदानमपि पूर्वदत्तम्। ततश्च यस्य कर्मप्रवचनीयस्य प्रतिनिधिप्रतिदानाभ्यां योगस्तस्य ताभ्यामपि मुख्यपूर्वदत्ताभ्यां तद्द्वारको योगोऽस्तीत्यर्थः।

## चतुर्थी सम्प्रदाने ॥ १३ ॥

सम्प्रदाने कारके चतुर्थी विभक्तिर्भवति। उपाध्यायाय गां ददाति। माणवकाय भिक्षां ददाति। देवदत्ताय रोचते। पुष्पेभ्यः स्पृहयति। इत्यादि॥ ॐचतुर्थीविधाने तादर्थ्य उपसंख्यानम्ॐ। यूपाय दारु। कुण्डलाय हिरण्यम्। रन्धनाय स्थाली। अवहननायोलूखलम्। ॐक्लृपिसम्पद्यमाने चतुर्थी वक्तव्याॐ। मूत्राय कल्पते यवागूः। उच्चाराय कल्पते यवागूः। क्लृपीत्यर्थनिर्देशः—मूत्राय सम्पद्यते यवागूः, मूत्राय जायते यवागूः॥ ॐउत्पातेन ज्ञाप्यमाने चतुर्थी वक्तव्याॐ॥

वाताय कपिला विद्युदातपायातिलोहिनी।
पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत्॥

ॐहितयोगे चतुर्थी वक्तव्याॐ। गोभ्यो हितम्। अरोचकिने हितम्॥

## क्रियार्थोपपदस्य च कर्मणि स्थानिनः॥ १४॥

क्रिया क्रियार्था उपपदं यस्य सोऽयं क्रियार्थोपपदः। "तुमन्ण्वुलौ क्रियायां क्रियार्थायाम्" इत्येष विषयो लक्ष्यते। क्रियार्थोपपदस्य च (१)स्थानिनोऽप्रयुज्यमानस्य धातोः कर्मणि कारके चतुर्थी विभक्तिर्भवति। द्वितीयापवादोऽयं योगः। एधेभ्यो व्रजति। पुष्पेभ्यो व्रजति। क्रियार्थोपपदस्येति किम्? प्रविश पिण्डीम्, प्रविश तर्पणम्। भक्षिरत्र स्थानी, न तु क्रियार्थोपपदः। कर्मणीति किम्? एधेभ्यो व्रजति शकटेन। स्थानिन इति किम्? एधानाहर्तुं व्रजति॥

## तुमर्थाच्च भाववचनात्॥ १५॥

तुमुना समानार्थस्तुमर्थः। तुमर्थभाववचनप्रत्ययान्तात् प्रातिपदिकाच्चतुर्थी विभक्तिर्भवति। "भाववचनाश्च" इति वक्ष्यति, तस्येदं ग्रहणम्। पाकाय व्रजति। त्यागाय व्रजति। भूतये व्रजति। संपत्तये व्रजति। तुमर्थादिति किम्? पाकः, त्यागः, रागः। भाववचनादिति किम्? कारको व्रजति॥

## नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च॥ १६॥

नमः, स्वस्ति, स्वाहा, स्वधा, अलम्, वषट् इत्येतैर्योगे चतुर्थी विभक्तिर्भवति। नमो देवेभ्यः। स्वस्ति प्रजाभ्यः। स्वाहाऽग्नये। स्वधा पितृभ्यः। अलं मल्लो मल्लाय। अलमिति

---

**चतुर्थी**—सम्प्रदान कारक में चतुर्थी विभक्ति होती है।

**चतुर्थीविधाने**—चतुर्थीविधि में तादर्थ्य में भी चतुर्थी का विधान समझना चाहिए।

**क्लृपि सम्पद्यमाने**—क्लृप्त्यर्थक धातुओं के प्रयोग में सम्पद्यमान कर्त्ता से भी चतुर्थी विभक्ति होती है।

**उत्पातेन**—उत्पात के द्वारा ज्ञाप्यमान से भी चतुर्थी विभक्ति होती है।

**हितयोगे**—हितशब्द के योग में भी चतुर्थी विभक्ति होती है।

**क्रियार्थोप**—एक क्रियार्थक अन्य क्रिया हो उपपद में जिसके ऐसे अप्रयुज्यमान धातु के अनभिहित कर्म से चतुर्थी विभक्ति होती है।

**तुमर्थाच्च**—तुमुन्-प्रत्ययसमानार्थक प्रत्ययसे युक्त भाववचन प्रातिपदिक से चतुर्थी विभक्ति होती है।

**नमः स्वस्ति**—नमः, स्वस्ति, स्वाहा, स्वधा, अलम् तथा वषट् के योग में भी चतुर्थी विभक्ति होती है।

---

(१) यत्र गम्यते चार्थो न च प्रयुज्यते शब्दः स स्थानी।

शब्दो गृह्यते। स्त्रीसभम्। दासीसभम्। दासीसंघात इत्यर्थः। अशालेति किम्? अनाथसभा। अनाथकुटीत्यर्थः॥

## विभाषा सेनासुराच्छायाशालानिशानाम्॥ २५॥

सेना, सुरा, छाया, शाला, निशा इत्येवमन्तस्तत्पुरुषो नपुंसकलिङ्गो भवति विभाषा। ब्राह्मणसेनम्, ब्राह्मणसेना। यवसुरम्, यवसुरा। कुड्यच्छायम्, कुड्यच्छाया। गोशालम्, गोशाला। (१)श्वनिशम्, श्वनिशा॥

## परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः॥ २६॥

समाहारद्वन्द्वे नपुंसकलिङ्गस्य विहितत्वाद् इतरेतरयोगद्वन्द्वस्येदं ग्रहणम्। परस्य यल्लिङ्गं तद्भवति द्वन्द्वस्य तत्पुरुषस्य च। उत्तरपदलिङ्गं द्वन्द्वतत्पुरुषयोर्विधीयते। कुक्कुटमयूर्याविमे, मयूरीकुक्कुटाविमौ। तत्पुरुषस्य-अर्द्धं पिप्पल्याः अर्द्धपिप्पली, अर्द्धकोशातकी, अर्द्धनखरञ्जनी॥ ॐद्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वक्तव्यःॐ। द्विगुः—पञ्चसु कपालेषु संस्कृतः पुरोडाशः पञ्चकपालः। प्राप्तो जीविकाम् प्राप्तजीविकः। आपन्नो जीविकाम् आपन्नजीविकः। अलं जीविकायै अलंजीविकः। गतिसमासः—निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः॥

## पूर्ववदश्ववडवौ॥ २७॥

अश्ववडवयोर्विभाषैकवद्भाव उक्तः, तत्रैकवद्भावादन्यत्र परवल्लिङ्गतायां प्राप्तायामिदमारभ्यते। अश्ववडवयोः पूर्ववल्लिङ्गं भवति। अश्वश्च वडवा चाश्ववडवौ। अर्थातिदेशश्चायम् न निपातनम्। तत्र द्विवचनमतन्त्रम्, वचनान्तरेपि पूर्ववल्लिङ्गता भवति—अश्ववडवान्, अश्ववडवैरिति॥

## हेमन्तशिशिरावहोरात्रे च च्छन्दसि॥ २८॥

पूर्ववदिति वर्तते। हेमन्तशिशिरौ, अहोरात्रे इत्येतयोश्छन्दसि विषये पूर्ववल्लिङ्गं भवति। हेमन्तशिशिरावृतूनां प्रीणामि। अहोरात्रे इदं ब्रूमः। परवल्लिङ्गतापवादो योगः। अर्थातिदेशश्चायं न निपातनम्, तेन द्विवचनमतन्त्रम्, वचनान्तरेपि पूर्ववल्लिङ्गता भवति—पूर्वपक्षाश्चितयः, अपरपक्षाः पुरीषम्, अहोरात्राणीष्टकाः। छन्दसीति किम्? दुःखे हेमन्तशिशिरे, अहोरात्राविमौ पुण्यौ। छन्दसि लिङ्गव्यत्यय उक्तः, तस्यैवायं प्रपञ्चः॥

## रात्राह्नाहाः पुंसि॥ २९॥

कृतसमासान्तानां निर्देशः। रात्र, अह्न, अह इत्येते पुंसि भाष्यन्ते। परवल्लिङ्गतायां

---

**विभाषा**—सेनाशब्दान्त, सुराशब्दान्त, छायाशब्दान्त, शालाशब्दान्त, तथा निशाशब्दान्त तत्पुरुष विकल्प से नपुंसक लिङ्ग होते हैं।

**परवल्लिङ्गम्**—इतरेतर-द्वन्द्व तथा तत्पुरुष समास में परशब्द के अनुसार लिङ्ग होता है।

**द्विगु**—द्विगुसमास, प्राप्त-पूर्वक, आपन्न-पूर्वक तथा अलम्पूर्वक तत्पुरुष समासों में परशब्दानुसारी लिङ्ग नहीं होता है।

**पूर्व**—एकवद्भाव से भिन्न स्थल में 'अश्ववडव' के द्वन्द्व का पूर्वशब्दानुसारी लिंग होता है।

**हेमन्त**—हेमन्त तथा शिशिर शब्दों के द्वन्द्व तथा अहन् और रात्रि शब्दों के द्वन्द्व का लिंग वेद में पूर्वशब्द के लिंग के अनुसार होता है।

**रात्राह्नाहाः**—रात्र, अह्न एवम् अह—इन कृतसमासान्त शब्दों की पुंल्लिङ्गता होती है।

---

(१) श्वनिशमिति। यस्यां निशायां श्वानो मत्ता विरहन्ति सा श्वनिशं, श्वनिशेति चोच्यते इति न्यासे। यस्यां निशायां श्वान उपवसन्ति सा श्वनिशमित्युच्यते। सा पुनः कृष्णचतुर्दशी इति पदमंजर्याम्।

स्त्रीनपुंसकयोः प्राप्तयोरिदं वचनम्। द्विरात्रः। त्रिरात्रः। चतूरात्रः। पूर्वाह्णः। अपराह्णः। मध्याह्नः। द्व्यहः। त्र्यहः। ॐअनुवाकादयः पुंसीति वक्तव्यम्ॐ। अनुवाकः। शंयुवाकः। सूक्तवाकः॥

## अपथं नपुंसकम्॥ ३०॥

अपथशब्दो नपुंसकलिङ्गो भवति। अपथमिदम्। अपथानि गाहते मूढः। इह कस्मान्न भवति—अपथो देशः, अपथा नगरी? तत्पुरुष इति वर्त्तते।

## अर्धर्चाः पुंसि च॥ ३१॥

अर्द्धर्चादयः शब्दाः पुंसि नपुंसके च भाष्यन्ते। अर्धर्चः, अर्धर्चम्। गोमयः, गोमयम्। शब्दरूपाश्रया चेयं द्विलिङ्गता क्वचिदर्थभेदेनापि व्यवतिष्ठते। यथा पद्मशङ्खशब्दौ निधिवचनौ पुंल्लिङ्गौ, जलजे उभयलिङ्गौ। भूतशब्दः पिशाचे उभयलिङ्गः, क्रियाशब्दस्याभिधेयवल्लिङ्गम्। (१)सैन्धवशब्दो लवणे उभयलिङ्गः, यौगिकस्याभिधेयवल्लिङ्गम्। सारशब्द उत्कर्षे पुंल्लिङ्गः, न्यायादनपेते नपुंसकम्—नैतत्सारमिति। धर्म इत्यपूर्वे पुंल्लिङ्गः, तत्साधने नपुंसकम्—तानि धर्माणि प्रथमान्यासन्(२)। अर्द्धर्च। गोमय। कषाय। कार्षापण। कुतप। कपाट। शङ्ख। गूथ। यूथ। ध्वज। कबन्ध। पद्म। गृह। सरक। कंस। दिवस। यूष। अन्धकार। दण्ड। कमण्डलु। मण्ड। भूत। द्वीप। द्यूत। चक्र। धर्म। कर्मन्। मोदक। शतमान। यान। नख। नखर। चरण। पुच्छ। दाडिम। हिम। रजत। सक्तु। पिधान। सार। पात्र। घृत। सैन्धव। औषध। आढक। चषक। द्रोण। खलीन। पात्रीव। षष्टिक। वार। बाण। प्रोथ। कपित्थ। शुष्क। शील। शुल्व। सीधु। कवच। रेणु। कपट। सीकर। मुसल। सुवर्ण। यूप। चमस। वर्ण। क्षीर। कर्ष। आकाश। अष्टापद। मङ्गल। निधन। निर्यास। जृम्भ। वृत्त। पुस्त। क्ष्वेडित। शृङ्ग। शृङ्खल। मधु। मूल। मूलक। शराव। शाल। वप्र। विमान। मुख। प्रग्रीव। शूल। वज्र। कर्पट। शिखर। कल्क। नाट। मस्तक। वलय। कुसुम। तृण। पङ्क। कुण्डल। किरीट। अर्बुद। अङ्कुश। तिमिर। आश्रम। भूषण। इल्कस। मुकुल। वसन्त। तडाग। पिटक। विटङ्क। माष। कोश। फलक। दिन। दैवत। पिनाक। समर। स्थाणु। अनीक। उपवास। शाक। कर्पास। चषाल। खण्ड। दर। विटप। रण। बल। मल। मृणाल। हस्त। सूत्र। ताण्डव। गाण्डीव। मण्डप। पटह। सौध। पार्श्व। शरीर। फल। छल। पुर। राष्ट्र। विश्व। अम्बर। कुट्टिम। मण्डल। ककुद। तोमर। तोरण। मञ्चक। पुङ्ख। मध्य। बाल। वल्मीक। वर्ष। वस्त्र। देह। उद्यान। उद्योग। स्नेह। स्वर। सङ्गम। निष्क। क्षेम। शूक। छत्र। पवित्र। यौवन। पानक। मूषिक। वल्कल। कुञ्ज। विहार। लोहित। विषाण। भवन। अरण्य। पुलिन। दृढ। आसन। ऐरावत। शूर्प। तीर्थ। लोमश। तमाल। लोह। दण्डक। शपथ। प्रतिसर। दारु। धनुष्। मान। तङ्क। वितङ्क। मव। सहस्र। ओदन। प्रवाल। शकट। अपराह्ण। नीड। सकल। अर्द्धर्चादिः(१)॥

---

अनुवाकादयः—'अनुवाक' आदि शब्दों का भी पुंस्त्व समझना चाहिए।
अपथम्—'अपथ' शब्द नपुंसकलिंग होता है।
अर्धर्चाः—'अर्धर्च' आदि शब्द पुल्लिंग तथा नपुंसक भी होते हैं।

---

(१) अत्र न्यासपर्यालोचनया सैन्धवशब्दस्थाने लवणशब्दस्य पाठोऽनुमीयते।

(२) कर्मशब्दो नकारान्त एवोभयलिङ्ग इति पाठोऽत्र विच्छिन्न इति न्यासेक्षणादनुमीयते।

(३) कुणप। मुण्ड। पूत। मरु। कंस। लोमन्। लिङ्ग। सीर। क्षत। ऋण। कडार। वर्ण। पूर्ण। पणव। विशाल। बुस्त। पुस्तक। पल्लव। निगड। खल। स्थूल। शार। नाल। प्रवर। कटक। कण्टक। छाल। कुमुद। पुराण। जाल। स्कन्ध। ललाट। कुङ्कुम। कुशल। विडङ्ग।

## इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ ॥ ३२ ॥

आदेशः कथनम् । (१)अन्वादेशोऽनुकथनम् । इदमोऽन्वादेशविषयस्याशादेशो भवत्यनुदात्तस्तृतीयादौ विभक्तौ परतः । आभ्यां छात्राभ्यां रात्रिरधीता, अथो आभ्यामहरप्यधीतम् । अस्मै छात्राय कम्बलं देहि, अथो अस्मै शाटकमपि देहि । अस्य छात्रस्य शोभनं शीलम्, अथो अस्य प्रभूतं स्वम्(२) । अशादेशवचनं साकच्कार्थम्—इमकाभ्यां छात्राभ्यां रात्रिरधीता, अथो आभ्यामहरप्यधीतम् । नेह पश्चादुच्चारणमात्रमन्वादेशः, किं तर्हि ? एकस्यैवाभिधेयस्य पूर्वं शब्देन प्रतिपादितस्य द्वितीयं प्रतिपादनमन्वादेशः । तेनेह न भवति—देवदत्तं भोजय, इमं च यज्ञदत्तमिति ॥

## एतदस्त्रतसोस्त्रतसौ चानुदात्तौ ॥ ३३ ॥

अन्वादेशे अनुदात्त इति वर्तते । एतदोऽन्वादेशविषयस्य अशादेशो भवति अनुदात्तस्त्रतसोः परतः, तौ चापि त्रतसावनुदात्तौ भवतः । एतस्मिन् ग्रामे सुखं वसामः, अथो अत्र युक्ता अधीमहे । एतस्माच्छात्राच्छन्दोऽधीष्व, अथो अतो व्याकरणमप्यधीष्व । सर्वाऽनुदात्तं पदं भवति । "एतदोऽश्" इत्यशादेशे लब्धे पुनर्वचनमनुदात्तार्थम् ॥

## द्वितीयाटौस्स्वेनः ॥ ३४ ॥

अन्वादेशे अनुदात्त इति वर्त्तते । द्वितीया, टा, ओस् इत्येतेषु परत इदमेतदोरन्वादेशविषययोरेनशब्द आदेशो भवति अनुदात्तः । इदमो मण्डूकप्लुतिन्यायेनानुवृत्तिः । इमं छात्रं छन्दोऽध्यापय, अथो एनं व्याकरणमध्यापय । अनेन छात्रेण रात्रिरधीता, अथो एनेनाहरप्यधीतम् । अनयोश्छात्रयोः शोभनं शीलम्, अथो एनयोः प्रभूतं स्वम् । एतदः खल्वपि-एतं छात्रं छन्दोऽध्यापय, अथो एनं व्याकरणमध्यापय । एतेन छात्रेण रात्रिरधीता, अथो एनेनाहरप्यधीतम् । एतयोश्छात्रयोः शोभनं शीलम्, अथो एनयोः प्रभूतं स्वम् । *एनदिति नपुंसकैकवचने वक्तव्यम्* । प्रक्षालयैनत् । परिवर्त्तयैनत् । इह कस्मान्न भवति—अयं दण्डो हरानेन, एतमातं ङितं विद्यादिति ? यत्र किञ्चिद् विधाय वाक्यान्तरेण पुनरन्यदुपदिश्यते सोऽन्वादेशः । इह तु वस्तुनिर्देशमात्रं कृत्वा (३)एकमेव विधानम् ॥

---

**इदमो**—तृतीयादि विभक्तियों के परे रहते अन्वादेश में वर्त्तमान इदम् शब्द के स्थान में अनुदात्त 'अश्' आदेश हो जाता है ।

**एतदस्त्र**—त्र एवम् तस् प्रत्ययों के परे रहते अन्वादेश में वर्त्तमान एतत् शब्द के स्थान में अनुदात्त 'अश्' आदेश होता है और त्र तथा तस् प्रत्यय भी अनुदात्त होते हैं ।

**द्वितीया**—द्वितीया, टा तथा ओश् विभक्तियों के परे रहने पर अन्वादेश में वर्त्तमान इदम् तथा एतत् शब्दों के स्थान में 'एन' आदेश हो जाता है ।

**एनदिति**—नपुंसक-एकवचन में 'एनत्' आदेश समझना चाहिए ।

---

पिण्याक । आर्द्र । हल । कटक । योध । बिम्ब । कुक्कुट । कुडप । खण्डल । पञ्चक । वसु । उद्यम । स्तन । स्तेन । क्षत्र । कलह । पालक । वर्चरक । कूर्च । तण्डक । तण्डुल । एते शब्दा अधिकाः क्वचित् ।

(१) शब्देनेति न्यासे अधिकः पाठः ।

(२) अस्माच्छात्राच्छन्दोऽधीष्व, अथोऽस्माद् व्याकरणमप्यधीष्व इति पाठः कुत्रचिदधिकः ।

(३) एकमेव विधानम् इति-अयं दण्ड इत्यनेन दण्डस्य सत्तोपलक्षणमात्रं कृत्वा हरानेनेत्यनेनैव हरणक्रियां प्रति दण्डस्य करणभावो निर्दिश्यते इत्येकं विधानम् । एतमातं ङितं विद्यादित्यत्रापीषदर्थे क्रियायोगे मर्यादाभिविधौ च य इतीषदाद्यर्थस्याऽऽकारस्य निर्देशमात्रं कृत्वा एतमातं ङितं विद्यादित्यनेन वेदनक्रियां प्रत्याऽऽकारमात्रस्य कर्मभाव एव विधीयते इत्येकमेव विधानम् ।

## आर्द्धधातुके ॥ ३५ ॥

आर्द्धधातुके इत्यधिकारोऽयं "ण्यक्षत्त्रियार्षञितः" इति यावत् । यदित ऊर्ध्वमनुक्रमिष्यामस्तदार्द्धधातुके वेदितव्यम् । वक्ष्यति—"हनो वध लिङि"—वध्यात् । आर्द्धधातुक इति किम् ? हन्यात् । विषयसप्तमी चेयं न परसप्तमी । तेनार्द्धधातुकविवक्षायामादेशेषु कृतेषु पश्चाद्यथाप्राप्तं प्रत्यया भवन्ति—भव्यम् , प्रवेयम् , आख्येयम् ॥

## अदो जग्धिर्ल्यप्ति किति ॥ ३६ ॥

अदो जग्धिदेशो भवति ल्यपि परतः, तकारादौ च किति प्रत्यये । प्रजग्ध्य । विजग्ध्य । जग्धः । जग्धवान् । इकार उच्चारणाऽर्थः । तेन नुम्न भवति । एवं वक्ष्यादीनामपि । इह कस्मान्न भवति—अन्नम् ? "अन्नाण्ण" इति निपातनात् ॥

जग्धौ सिद्धेऽन्तरङ्गत्वात्ति कितीति ल्यबुच्यते ।
ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम् ॥

तीति किम् ? अद्यते । कितीति किम् ? अत्तव्यम् ॥

## लुङ्सनोर्घस्लृ ॥ ३७ ॥

लुङि सनि च परतोऽदो घस्लृ आदेशो भवति । लृदित्करणमङर्थम् । लुङि- अघसत् , अघसताम् , अघसन् । सनि-जिघत्सति, जिघत्सतः, जिघत्सन्ति ॥ ॐघस्लृभावेऽच्युपसंख्यानम्ॐ । प्रात्तीति प्रघसः ॥

## घञपोश्च ॥ ३८ ॥

घञि अपि च परतोऽदो घस्लृ आदेशो भवति । घासः । प्रघसः । "उपसर्गेऽदः" इत्यप् ॥

## बहुलं छन्दसि ॥ ३९ ॥

छन्दसि विषये बहुलमदो घस्लृ आदेशो भवति । (१)घस्तान्नूनम् । सग्धिश्च मे । न च भवति—आत्तामद्य मध्यतो मेद उद्भृतम् । अन्यतरस्यांग्रहणमेव कस्मान्न क्रियते, तदेवोत्तरार्थमपि भविष्यति ? कार्यान्तरार्थं बहुलग्रहणम् । घस्तामित्यत्रोपधालोपो न भवति ॥

---

**आर्धधातुके**—यहाँ से 'आर्धधातुके' का अधिकार समझना चाहिए ।

**अदो**—ल्यप् प्रत्यय तथा तकारादि-कित् प्रत्यय के परे रहते 'अद्' धातु को 'जग्धि' आदेश हो जाता है ।

**लुङ्**—लुङ् तथा सन् के परे रहते 'अद्' धातु के स्थान में घस्लृ' आदेश होता है ।

**घस्लृभावे**—अच्प्रत्यय के परे रहते भी 'घस्लृ' आदेश का विधान समझना चाहिए ।

**घञपोश्च**—घञ् तथा अप् प्रत्ययों के परे रहते भी 'अद्' धातु के स्थान में 'घस्लृ' आदेश होता है ।

**बहुलम्**—वेद में 'अद्' के स्थान में 'घस्लृ' आदेश बहुल करके होता है ।

---

(१) घस्तामिति—लङ्, तसस्ताम्, आदादिकत्वाच्छपो लुक् । बहुलं छन्दस्यमाङ्योगेऽपीत्यडागमाभावः । अथवा लुङ्युदाहरणमेतत् । मन्त्रे घसह्वरेत्यादिना लेर्लुक् । सग्धिरिति स्त्रियां क्तिन् । घसिभसोर्हलि चेत्युपधालोपः । झलो झलीति सकारलोपः । अथ यदि सिचोऽनेन लोपो विधीयते तदा छान्दसो वर्णलोपो द्रष्टव्यो यथेष्कर्तारमध्वर इति । पूर्ववत् तकारस्य धकारः । घकारस्य जश्त्वम् । समाना ग्धिरिति पूर्वापरप्रथमेत्यादिना समासः । समानस्य च्छन्दस्यमूर्द्धप्रभृत्युदर्केष्विति समानस्य सभावः । सग्धिः स्त्री सहभोजनमित्यरः ।

## लिट्यन्यतरस्याम् ॥ ४० ॥

लिटि परतोऽदोऽन्यतरस्यां घस्लादेशो भवति। जघास। जक्षतुः। जक्षुः। आद। आदतुः। आदुः॥

## वेञो वयिः॥ ४१ ॥

लिट्यन्यतरस्यामिति वर्त्तते। वेञो वयिरादेशो भवति अन्यतरस्यां लिटि परतः। इकार उच्चारणार्थः। उवाय, ऊयतुः, ऊयुः। पक्षे-ऊवतुः, ऊवुः। "लिटि वयो यः" इति यकारस्य संप्रसारणं प्रतिषिद्ध्यते। "वश्चास्यान्यतरस्यां किति" इति वकारो विधीयते—ववौ, ववतुः, ववुः। "वेञः" इति संप्रसारणं न भवति॥

## हनो वध लिङि॥ ४२ ॥

हन्तेर्धातोर्वध इत्ययमादेशो भवति लिङिः परत आर्धधातुके। वध्यात्। वध्यास्ताम्। वध्यासुः। अकारान्तश्चायमादेशः, तत्राकारस्य लोपो भवति। तस्य स्थानिवद्भावादवधी-दिति हलन्तलक्षणा वृद्धिः "अतो हलादेर्लघोः" इति न भवति॥

## लुङि च॥ ४३ ॥

लुङि च परतो हनो वध इत्ययमादेशो भवति। अवधीत्। अवधिष्टाम्। अवधिषुः। योगविभाग उत्तरार्थः, आत्मनेपदेषु लिङि विकल्पो मा भूत्॥

## आत्मनेपदेष्वन्यतरस्याम् ॥ ४४ ॥

पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। आत्मनेपदेषु परतो हनो लुङ्यन्यतरस्यां वध इत्ययमादेशो भवति। आवधिष्ट। आवधिषाताम्। आवधिषत। न च भवति-आहत, आहसाताम्, आहसत(१)॥

## इणो गा लुङि॥ ४५ ॥

इणो गा इत्ययमादेशो भवति लुङि परतः। अगात्। अगाताम्। अगुः। लुङीति वर्त्तमाने पुनर्लुङ्ग्रहणम् "आत्मनेपदेष्वन्यतरस्याम्" इत्येतन्मा भूत्। इह त्वविशेषेण नित्यं च भवति—अगात्, अगायि भवता। ॐइण्वदिक इति वक्तव्यम्ॐ। अध्यगात्। अध्यगाताम्। अध्यगुः॥

## णौ गमिरबोधने॥ ४६ ॥

णौ परत इणोऽबोधनार्थस्य गमिरादेशो भवति। इकार उच्चारणार्थः। गमयति।

---

**लिट्यन्य**—लिट् के परे रहते विकल्प से 'अद्' धातु के स्थान में 'घस्ल' आदेश होता है।

**वेञो**—लिट् के परे रहने से 'वेञ्' धातु के स्थान विकल्प से 'वयि' आदेश होता है।

**हनो**—आर्धधातुक लिङ् के परे रहने से 'हन्' धातु के स्थान में 'वध' आदेश होता है।

**लुङि**—लुङ् के परे रहते भी 'हन्' धातु को 'वध' आदेश होता है।

**आत्मने**—आत्मनेपद में लुङ् के परे रहते 'हन्' धातु को विकल्प से 'वध' आदेश होता है।

**इणो गा**—लुङ् के परे रहते इण् धातु को 'गा' आदेश होता है।

**इण्वत्**—'इण्' धातु की तरह 'इक्' धातु के स्थान में भी 'गा' आदेश होता है।

**णौ गमिः**—अवबोधनार्थक 'इण्' धातु के स्थान में 'गमि' आदेश होता है णिच्प्रत्यय के परे रहते।

---

(१) आङो यमहन इत्यात्मनेपदम्। हनः सिज् इति कित्वम्। अनुदात्तोपदेशेति नलोपः। ह्रस्वादङ्गादिति सिचो लोपः इति अन्यत्र पुस्तकेऽधिकं लभ्यते।

गमयतः। गमयन्ति। अबोधन इति किम्? प्रत्याययति, इण्वदिकः इत्येव—अधिगमयति ॥

## सनि च ॥ ४७ ॥

सनि परत इणोऽबोधनार्थस्य गमिरादेशो भवति। जिगमिषति। जिगमिषतः। जिगमिषन्ति। अबोधन इत्येव—आर्यान् प्रतीषिषति। इण्वदिक इत्येव—अधिजिगमिषति। योगविभाग उत्तरार्थः, "इङश्च" इति सन्येव यथा स्यात्(१) ॥

## इङश्च ॥ ४८ ॥

इङश्च सनि परतो गमिरादेशो भवति। अधिजिगांसते। अधिजिगांसेते। अधिजिगांसन्ते ॥

## गाङ् लिटि ॥ ४९ ॥

गाङादेशो भवतीङो लिटि परतः। अधिजगे। अधिजगाते। अधिजगिरे। गाङोऽनुबन्धग्रहणं विशेषणार्थम्, "गाङ्कुटादिभ्य" इत्यत्रास्य ग्रहणं यथा स्यात्। न हि स्थानिवद्भावेन गाङिति रूपं लभ्यते ॥

## विभाषा लुङ्लृङोः ॥ ५० ॥

लुङि लृङि च परत इङो विभाषा गाङादेशो भवति। आदेशपक्षे "गाङ्कुटादिभ्य" इति ङित्वं "घुमास्थागापाजहातिसां हलि" इतीत्वम्। अध्यगीष्ट। अध्यगीषाताम्। अध्यगीषत। न च भवति-अध्यैष्ट, अध्यैषाताम्, अध्यैषत। लृङि खल्वपि-अध्यगीष्यत, अध्यगीष्येताम्, अध्यगीष्यन्त। न च भवति-अध्यैष्यत, अध्यैष्येताम्, अध्यैष्यन्त ॥

## णौ च संश्चङोः ॥ ५१ ॥

इङो गाङ् विभाषेति वर्त्तते। णावितीङपेक्षा परसप्तमी, संश्चङोरिति च ण्यपेक्षा। णौ सन्परे चङ्परे च परत इङो विभाषा गाङादेशो भवति। अधिजिगापयिषति। न च भवति-अध्यापिपयिषति। चङि खल्वपि—अध्यजीगपत्, अध्यापिपत् ॥

## अस्तेर्भूः ॥ ५२ ॥

अस्तेर्धातोर्भू इत्ययमादेशो भवति आर्द्धधातुके। भविता। भवितुम्। भवितव्यम्(२)। इह कस्मान्न भवति—ईहामास, ईहामासतुः, ईहामासुः? "कृञ्चानुप्रयुज्यते लिटि" इति प्रत्याहारग्रहणेनास्तेर्ग्रहणसामर्थ्यात्। तथा चोच्यते—

---

**सनि च**—अवबोधनार्थक 'इण्' धातु के स्थान में सन्प्रत्यय के परे रहते भी 'गमि' आदेश होता है।

**इङश्च**—सन्प्रत्यय के परे रहते 'इङ्' धातु के स्थान में भी 'गमि' आदेश होता है।

**गाङ्**—लिट् के परे रहते 'इङ्' धातु के स्थान में 'गाङ्' आदेश होता है।

**विभाषा**—लुङ् तथा लृङ् के परे रहते 'इङ्' धातु के स्थान में विकल्प से 'गाङ्' आदेश होता है।

**णौ च**—सन्परक तथा चङ्परक णि के परे रहते 'इङ्' धातु के स्थान में विकल्प से 'गाङ्' आदेश होता है।

**अस्तेर्भूः**—आर्धधातुक प्रत्ययों के परे रहते 'अस्' धातु के स्थान में 'भू' आदेश होता है।

---

(१) णौ मा भूत् इति अधिकमुपलभ्यते क्वचित्।

(२) आर्धधातुक इति किम्? अस्ति, स्तः, सन्ति इति कुत्रचिदधिकम्।

(१) अनुप्रयोगे तु भुवाऽस्त्यबाधनं स्मरन्ति कर्तुर्वचनान् मनीषिणः—इति ॥

## ब्रुवो वचिः ॥ ५३ ॥

ब्रुवो वचिरादेशो भवति आर्धधातुकविषये। इकार उच्चारणार्थः । वक्ता। वक्तुम्। वक्तव्यम् । स्थानिवद्भावेन कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदं भवति—ऊचे, वक्ष्यते ॥

## चक्षिङः ख्याञ् ॥ ५४ ॥

चक्षिङः ख्याञादेशो भवत्यार्धधातुके । आख्याता । आख्यातुम् । आख्यातव्यम्। स्थानिवद्भावेन नित्यमात्मनेपदं न भवति, ञकारानुबन्धकरणसामर्थ्यात्(२) । ❀क्शादिरप्ययमादेश इष्यते❀ । आक्शाता। आक्शातुम्। आक्शातव्यम्। ❀वर्जने प्रतिषेधो वक्तव्यः❀। दुर्जनाः सञ्चक्षयाः । वर्जनीया इत्यर्थः। ❀असनयोश्च प्रतिषेधो वक्तव्यः❀। नृचक्षा राक्षसाः। हिंसार्थोऽत्र धातुः । अने खल्वपि-विचक्षणः पण्डितः(३) । ❀बहुलं संज्ञाच्छन्दसोरिति वक्तव्यम्❀। अन्नवधकगात्रविचक्षणाजिराद्यर्थम् ॥

## वा लिटि ॥ ५५ ॥

पूर्वेण नित्ये प्राप्ते विकल्प उच्यते । लिटि परतश्चक्षिङः ख्याञादेशो वा भवति। आचख्यौ । आचख्यतुः । आचख्युः । न च भवति-आचचक्षे, आचचक्षाते, आचचक्षिरे ॥

## अजेर्व्यघञपोः ॥ ५६ ॥

अजेर्धातोर्वीत्ययमादेशो भवत्यार्धधातुके परतो घञपौ वर्जयित्वा। प्रवायकः। प्रवयणीयः। अघञपोरिति किम्? समाजः, उदाजः। अपि तु—समजः, उदजः। "समुदोरजः पशुषु" इत्यप्। दीर्घोच्चारणं किम्? प्रवीताः। ❀घञपोः प्रतिषेधे क्यप उपसंख्यानम्❀। समज्या । ❀बलादावार्धधातुके विकल्प इष्यते❀ । प्रवेता । प्राजिता । प्रवेतुम् । प्राजितुम् ॥

---

ब्रुवो—आर्धधातुकविषय में 'ब्रू' धातु के स्थान में 'वच्' आदेश होता है।

चक्षिङः—आर्धधातुकविषय में 'चक्षिङ्' धातु के स्थान में 'ख्याञ्' आदेश होता है।

क्शादि—इस 'ख्याञ्' के स्थान में 'क्शाञ्' आदेश भी समझना चाहिए।

वर्जने—परन्तु वर्जन अर्थ में उक्त आदेश नहीं होता है।

असनयोश्च—अस् तथा अन प्रत्ययों के परे भी ख्याञादेश का प्रतिषेध समझना चाहिए।

बहुलम्—संज्ञा तथा वेद में बहुल करके प्रतिषेध होता है।

वा लिटि—लिट् के परे रहते 'चक्षिङ्' धातु के स्थान में विकल्प से 'ख्याञ्' आदेश होता है।

अजेर्वी—घञ् तथा अप् से भिन्न आर्धधातुक प्रत्ययों के परे रहते 'अज' धातु के स्थान में 'वी' आदेश होता है।

घञपोः—घञ् तथा अप् प्रत्ययों के साथ-साथ प्रतिषेध्य-कोटि में 'क्यप्' का भी समावेश समझना चाहिए।

बलादौ—बलादि आर्धधातुक प्रत्ययों के परे रहते विकल्प से 'वी' आदेश होता है।

---

(१) भवसौ विहायाभ्यधितैष कृञ् पदं ग्रहीतुकामस्त्रितयं तदेव हि—इति पूर्वार्द्धभागः।

(२) आख्यास्यति, आख्यास्यते इति कुत्रचिदुपलभ्यते।

(३) बहुलम् इति—संज्ञायां छन्दसि च जग्ध्यादेशादिकार्यं बहुलं न भवतीत्यर्थः।

## वा यौ ॥ ५७ ॥

पूर्वेण नित्ये प्राप्ते विकल्प उच्यते । यु इति ल्युटो ग्रहणम् । यौ परभूते अजेर्वा वी इत्ययमादेशो भवति । प्रवयणो दण्डः । प्राजनो दण्डः । प्रवयणमानय । प्राजनमानय ॥

## ण्यक्षत्रियार्षञितो यूनि लुगणिञोः ॥ ५८ ॥

ण्यादयो गोत्रप्रत्ययाः । ण्यान्तात् क्षत्रियगोत्राद् आर्षाद् ञितश्च परयोरणिञोर्यूनि लुग्भवति । ण्यान्तात्तावत्—"कुर्वादिभ्यो ण्यः", तस्माद्यूनि इञ् । तस्य लुक् । कौरव्यः पिता । कौरव्यः पुत्रः । ननु च कौरव्यशब्दस्तिकादिषु पठ्यते, ततः फिञा भवितव्यम्—कौरव्यायणिरिति ? क्षत्रियगोत्रस्य तत्र ग्रहणं "कुरुनादिभ्यो ण्यः" इत्यनेन विहितस्य । इदं तु ब्राह्मणगोत्रम् । "कुर्वादिभ्यो ण्यः" इति ण्यः । क्षत्रिय–"ऋष्यन्धकवृष्णिकुरुभ्यश्च" इत्यण् । तस्माद्यूनि इञ् । तस्य लुक् । वासिष्ठः पिता । वासिष्ठः पुत्रः । ञित्–"अनृष्यानन्तर्ये विदादिभ्योऽञ्" । तस्माद्यूनि इञ् । तस्य लुक् । वैदः पिताः । वैदः पुत्रः । अणः खल्वपि–"तिकादिभ्यः फिञ्" । तस्माद्यूनि "प्राग्दीव्यतोऽण्" । तस्य लुक् । तैकायनिः पिता । तैकायनिः पुत्रः । एतेभ्य इति किम् ? "शिवादिभ्योऽण्" । तस्मात् यूनि "अत इञ्" । तस्य न लुग्भवति । कौहडः पिता । कौहडिः पुत्रः । यूनीति किम् ? वामरथ्यस्य छात्राः वामरथाः । "कुर्वादिभ्यो ण्यः" इति ण्यः, तस्मात् "कण्वादिभ्यो गोत्रे" इति शैषिकोऽण् । तस्य लुग्न भवति । अणिञोरिति किम् ? दाक्षेरपत्यं युवा दाक्षायणः(१) । ॐअब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानम्ॐ । बौधिः पिता । बौधिः पुत्रः । जाबालिः पिता । जाबालिः पुत्रः । औदुम्बरिः पिता । औदुम्बरिः पुत्रः । भाण्डीजङ्घिः पिता । भाण्डीजङ्घिः पुत्रः । साल्वावयवलक्षण इञ् । तस्मात्फक् । तस्य लुक् । पैलादिदर्शनात् सिद्धम् ॥

## पैलादिभ्यश्च ॥ ५९ ॥

पैल इत्येवमादिभ्यो युवप्रत्ययस्य लुग्भवति । "पीलाया वा" इत्यण् । तस्मादणो "द्व्यचः" इति फिञ् । तस्य लुक् । पैलः पिता । पैलः पुत्रः । अन्ये पैलादय इञन्ताः, तेभ्य "इञः प्राचाम्" इति लुकि सिद्धेऽप्रागर्थः पाठः । पैल । शालङ्कि । सात्यकि । सात्यकामि । देवि । औदमज्जि । औदव्रजि । औदमेघि । औदबुद्धि । दैवस्थानि । पैङ्गलायनि । राणायनि । रौहक्षिति । भौलिङ्गि । औद्वाहमानि । औज्जिहानि(२) । "तद्राजाचाणः" । आकृतिगणोऽयम् ॥

## इञः प्राचाम् ॥ ६० ॥

गोत्रे य इञ् तदन्ताद्युवप्रत्ययस्य लुग्भवति । गोत्रविशेषणं प्राग्ग्रहणं न विकल्पार्थम् ।

---

**वा यौ**—ल्युट् प्रत्यय के परे रहते 'अज' धातु को विकल्प से 'वी' आदेश होता है ।

**ण्यक्षत्रियार्ष**—गोत्रार्थक-ण्यप्रत्ययान्त, क्षत्रियवाचकगोत्रप्रत्ययान्त, ऋषिवाचीगोत्रप्रत्ययान्त तथा ञितगोत्रप्रत्ययान्त शब्दों से युवापत्य में विहित अण् तथा इञ् का लुक् होता है ।

**अब्राह्मण**—अब्राह्मणगोत्रप्रत्ययान्तमात्र से विहित युवापत्यार्थक प्रत्यय का लुक् समझना चाहिए ।

**पैलादि**—पैल आदि शब्दों से विहित युवप्रत्यय का लुक् होता है ।

**इञः**—गोत्रार्थक इञ् प्रत्ययान्त से विहित युवप्रत्यय का लुक् होता है ।

---

(१) अत्र यञञोश्च इति फको लुग्न भवतीति क्वचिदधिकम् ।

(२) रागक्षति । राणि । सौमनि । ऊहमानि इत्यधिकं क्वचित् ।

पान्नागारेरपत्यं युवा। "यञिञोश्च" इति फक्। तस्य लुक्। पान्नागारिः पिता। पान्नागारिः पुत्रः। मान्थरैषणिः पिता। मान्थरैषणिः पुत्रः। प्राचामिति किम्? दाक्षिः पिता, दाक्षायणः पुत्रः॥

## न तौल्वलिभ्यः॥ ६१॥

अनन्तरेण प्राप्तो लुक् प्रतिषिद्ध्यते। तौल्वल्यादिभ्यः परस्य युवप्रत्ययस्य न लुग्भवति। तौल्वलिः पिता। तौल्वलायनः पुत्रः। तौल्वलि। धारणि। रावणि। पारणि। दैलीपि। दैवलि। दैवयज्ञि। प्रावाहणि। मान्धातकि। आनुहारति। श्वाफल्कि। अनुमति। आहिंसि। आयुधि। नैमिषि। आसिबन्धकि। बैकि। पौष्करसादि। वैरकि। वैलकि। वैहति। वैकर्णि। कारेणुपालि। कामालि(१)॥

## तद्राजस्य बहुषु तेनैवास्त्रियाम्॥ ६२॥

"ते तद्राजाः", "ञ्यादयस्तद्राजाः" इति वक्ष्यति, तस्य तद्राजसंज्ञस्य प्रत्ययस्य बहुषु वर्त्तमानस्य अस्त्रीलिङ्गस्य लुग्भवति तेनैव चेत्तद्राजेन कृतं बहुत्वं भवति। अङ्गाः। वङ्गाः। पुण्ड्राः। मगधाः। लोहध्वजाः। व्रीहिमन्तः। तद्राजस्येति किम्? औपगवाः। बहुष्विति किम्? आङ्गः। तेनैवग्रहणं किम्? प्रियो वाङ्गो येषां त इमे प्रियवाङ्गाः। अस्त्रियामिति किम्? आङ्ग्यः स्त्रियः॥

## यस्कादिभ्यो गोत्रे॥ ६३॥

बहुषु तेनैवास्त्रियामिति सर्वमनुवर्तते। यस्क इत्येवमादिभ्यः परस्य गोत्रप्रत्ययस्य बहुषु वर्त्तमानस्यास्त्रीलिङ्गस्य लुग्भवति, तेनैव चेद् गोत्रप्रत्ययेन कृतं बहुत्वं भवति। प्रत्ययविधेश्चान्यत्र लौकिकस्य गोत्रस्य ग्रहणमित्यनन्तरापत्येऽपि लुग्भवत्येव—यस्काः, लभ्याः। बहुष्वित्येव—यास्कः। तेनैवेत्येव—प्रिययास्काः। अस्त्रियामित्येव—यास्क्यः स्त्रियः। गोत्र इति किम्? यास्काश्छात्राः। यस्क। लभ्य। दुह्य। अयःस्थूण। तृणकर्ण। एते पञ्च शिवादिषु पठ्यन्ते। ततः परेभ्यः षड्भ्य इञ्(२)। सदामत्त। कम्बलभार। बहिर्योग। कर्णाटक। पिण्डीजङ्घ। बकसक्थ। ततः परेभ्यश्चतुर्भ्यो "गृष्ट्यादिभ्यश्च" इति ढञ्। बस्ति। कुद्रि(३)। अजबस्ति। मित्रयु। ततः परेभ्यो द्वादशभ्यः इञ्। रक्षोमुख। जङ्घारथ। मन्थक। उत्कास। कटुक। मन्थक। पुष्करसत्। विषपुट। उपरिमेखल। क्रोष्टुमान। क्रोष्टुपाद। शीर्षमाय। पुष्करसच्छब्दात् बाह्वादिपाठादिञ्। खरपशब्दो नडादिषु पठ्यते। ततः फक्। पदक। वर्मक। एताभ्याम् "अत इञ्"। भलन्दनशब्दात् "शिवादिभ्योऽण्"। भडिल। भण्डिल। भडित। भण्डित। एतेभ्यश्चतुर्भ्यः "अश्वादिभ्यः फञ्"॥

---

**न तौल्वलिभ्यः**—तौल्वलि आदि से विहित युवप्रत्यय का लुक् नहीं होता है।

**तद्राजस्य**—बहुत्वार्थक 'तद्राज' संज्ञक प्रत्ययों का, स्त्रीलिङ्ग को छोड़कर, लुक् हो जाता है यदि वह बहुत्व 'तद्राज' संज्ञककृत हो।

**यस्कादि**—'यस्क' आदि से परवर्त्ती बहुत्वार्थक गोत्रप्रत्ययों का लुक् होता है, स्त्रीलिङ्ग को छोड़कर, यदि वह बहुत्व उसी गोत्रप्रत्यय से जन्य हो।

---

(१) रान्धकि। असुराहति। प्राणाहति। पौष्कि। कान्दकि। दौषकगति। आन्तराहति। एते शब्दाः क्वचिदधिकाः।

(२) सप्तभ्य इञ् इति क्वचित्, तदनुसारेण कर्णाटकशब्दाददन्तरं पर्णाडक इत्यधिकम्।

(३) अत्र विभ्रि, कद्र इति पाठान्तरम्।

## यञञोश्च ॥ ६४ ॥

बहुषु तेनैवास्त्रियां गोत्र इति चानुवर्तते। यञोऽञश्च गोत्रप्रत्ययस्य बहुषु वर्तमानस्याऽस्त्रीलिङ्गस्य लुग्भवति। "गर्गादिभ्यो यञ्"। गर्गाः। वत्साः। अञः खल्वपि—"अनृष्यानन्तर्ये बिदादिभ्योऽञ्"। विदाः। उर्वाः। बहुष्वित्येव—गार्ग्यः, वैदः। तेनैवेत्येव—प्रियगार्ग्याः, प्रियवैदाः। अस्त्रियामित्येव—गार्ग्यः स्त्रियः, बैद्यः स्त्रियः। गोत्र इत्येव—"द्वीपादनुसमुद्रं यञ्"—द्वैप्याः। "उत्सादिभ्योऽञ्"—औत्साश्छात्राः। ॐयञादीनामेकद्वयोर्वा तत्पुरुषे षष्ठ्या उपसंख्यानम्ॐ। गार्ग्यस्य कुलं गार्ग्यकुलम्, गर्गकुलं वा। गार्ग्ययोः कुलं गार्ग्यकुलम्, गर्गकुलं वा। एवं वैदस्य कुलं वैदकुलम्, विदकुलं वा। वैदयोः कुलं वैदकुलम्, विदकुलं वा। यञादीनामिति किम्? आङ्गकुलम्। एकद्वयोरिति किम्? गर्गाणां कुलं गर्गकुलम्। तत्पुरुष इति किम्? गार्ग्यस्य समीपमुपगार्ग्यम्। षष्ठ्या इति किम्? परमगार्ग्यः॥

## अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च ॥ ६५ ॥

अत्र्यादिभ्यः परस्य गोत्रप्रत्यस्य बहुषु लुग्भवति। अत्रिशब्दात् "इतश्चानिञः" इति ढक्। इतरेभ्यः ऋष्यण्—अत्रयः, भृगवः, कुत्साः, वसिष्ठाः, गोतमाः, अङ्गिरसः। बहुष्वित्येव-आत्रेयः, भार्गवः। तेनैवेत्येव—प्रियात्रेयाः, प्रियभार्गवाः। अस्त्रियामिति किम्? आत्रेय्यः स्त्रियः॥

## बह्वच इञः प्राच्यभरतेषु ॥ ६६ ॥

बह्वचः प्रातिपादिकाद् य इञ् विहितः प्राच्यगोत्रे भरतगोत्रे च वर्तते तस्य बहुषु लुग्भवति। पन्नागाराः। मन्थरेणाः। भरतेषु खल्वपि-युधिष्ठिराः, अर्जुनाः। बह्वच इति किम्? वैकयः, पौष्पयः। प्राच्यभरतेष्विति किम्? बालाकयः, हास्तिदासयः। भरताः प्राच्या एव, तेषां पुनर्ग्रहणं ज्ञापनार्थम्—अन्यत्र प्राग्ग्रहणे भरतग्रहणं न भवतीति, तेन "इञः प्राचाम्" इति भरतानां युवप्रत्यस्य लुङ्न भवति—आर्जुनिः पिता, आर्जुनायनः पुत्रः॥

## न गोपवनादिभ्यः ॥ ६७ ॥

गोपवनादिभ्यः परस्य प्रत्ययस्य लुङ्न भवति। विदाद्यन्तर्गणोऽयम्। ततोऽञो गोत्रप्रत्ययस्य "यञञोश्च" इति लुक् प्राप्तः प्रतिषिद्ध्यते। गौपवनाः। शैग्रवाः। गोपवन। शिग्रु। बिन्दु। भाजन। अश्व। अवतान। श्यामाक। श्वापर्ण। एतावन्त एवाष्टौ गोपवनादयः। परिशिष्टानां हरितादीनां प्रमादपाठः। ते हि चतुर्थे विदादिषु पठ्यन्ते। तेभ्यश्च बहुषु लुग्भवत्येव—हरिताः, किंकासा इति॥

---

**यञञोश्च**—गोत्र-विहित बहुत्वार्थक यञ् तथा अञ् का लुक् होता है, स्त्रीलिङ्ग को छोड़कर, यदि बहुत्व उन्हीं प्रत्ययों द्वारा प्रयुक्त हो।

**यञादीनाम्**—एकवचन अथवा द्विवचन षष्ठी से युक्त गोत्रप्रत्ययान्त शब्द के साथ तत्पुरुष समास होने पर गोत्रप्रत्यय का लुक् समझना चाहिए।

**अत्रिभृगु**—अत्रि, भृगु, कुत्स, वसिष्ठ, गोतम तथा अङ्गिरस् शब्दों से तत्कृतबहुत्वार्थक गोत्रापत्य में विहित प्रत्यय का लुक् होता है।

**बह्वच**—बह्वच् शब्द से प्राच्यगोत्र तथा भरतगोत्र में विहित इञ् प्रत्यय का तत्कृतबहुत्व अर्थ में लुक् होता है।

**न गोप**—गोपवन आदि शब्दों से परवर्ती प्रत्यय का लुक् नहीं होता है।

## तिककितवादिभ्यो द्वन्द्वे ॥ ६८ ॥

तिकादिभ्यः कितवादिभ्यश्च द्वन्द्वे गोत्रप्रत्ययस्य बहुषु लुग्भवति । तैकायनयश्च कैतवायनयश्च—"तिकादिभ्यः फिञ्", तस्य लुक्—तिककितवाः । वाङ्करयश्च भाण्डीरथयश्च—"अत इञ्", तस्य लुक्—वङ्करभण्डीरथाः । औपकायनाश्च लामकायनाश्च—"नडादिभ्यः फक्" तस्य लुक्—उपकलमकाः । पाफकयश्च नारकयश्च—"अत इञ्" तस्य लुक्—पफकनरकाः । बाकनखयश्च श्वागुदपरिणद्धयश्च—"अत इञ्", तस्य लुक्—बकनखश्वगुदपरिणद्धाः । उब्जशब्दादत इञ्, ककुभशब्दाच्छिवाद्यण्, तयोर्लुक्—औब्जयश्च काकुभाश्च उब्जककुभाः । लाङ्कयश्च शान्तमुखयश्च—"अत इञ्", तस्य लुक्—लङ्कशान्तमुखाः । उरसशब्दस्तिकादिषु पठ्यते, ततः फिञ्, लङ्कटशब्दादिञ्, तयोर्लुक्—औरसायनयश्च लाङ्कटयश्च उरसलङ्कटाः । आष्टकयश्च कापिष्ठलयश्च—"अत इञ्", तस्य लुक्—अष्टककपिष्ठलाः । कार्ष्णाजिनयश्च कार्ष्णसुन्दरयश्च—"अत इञ्", तस्य लुक्—कृष्णाजिनकृष्णसुन्दराः । आग्निवेश्यश्च दासेरकयश्च—अग्निवेशशब्दाद् "गर्गादिभ्यो यञ्", दासेरकशब्दात् "अत इञ्", तयोर्लुक्—अग्निवेशदासेरकाः ॥

## उपकादिभ्योऽन्यतरस्यामद्वन्द्वे ॥ ६९ ॥

उपक इत्येवमादिभ्यः परस्य गोत्रप्रत्ययस्य बहुषु लुग्भवति अन्यतरस्यां द्वन्द्वे चाद्वन्द्वे च । अद्वन्द्वग्रहणं द्वन्द्वाधिकारनिवृत्त्यर्थम् । एतेषां च मध्ये त्रयो द्वन्द्वास्तिककितवादिषु पठ्यन्ते—उपकलमकाः, अष्टककपिष्ठलाः, कृष्णाजिनकृष्णसुन्दराः इति । तेषां पूर्वेणैव नित्यमेव लुग्भवति । अद्वन्द्वे त्वनेन विकल्पः—उपकाः, औपकायनाः । लमकाः, लामकायनाः । अष्टकाः, आष्टकयः । कपिष्ठलाः, कापिष्ठलयः । कृष्णाजिनाः, कार्ष्णाजिनयः । कृष्णसुन्दराः, कार्ष्णसुन्दरय इति । परिशिष्टानां च द्वन्द्वेऽद्वन्द्वे च विकल्प इति । पण्डारक । अण्डारक । गडुक । सुपर्यक । सुपिष्ठ । मयूरकर्ण । खारीजङ्घ । शलाबल । पतञ्जल । कठेरणि । कुषीतक । काशकृत्स्न । निदाघ । कलशीकण्ठ । दामकण्ठ । कृष्णपिङ्गल । कर्णक । पर्णक । जटिलक । बधिरक । जन्तुक । अनुलोम । अर्द्धपिङ्गलक । प्रतिलोम । प्रतान । अनभिहित(१) ॥

## आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् ॥ ७० ॥

आगस्त्यकौण्डिन्ययोरणो यञश्च बहुषु लुग्भवति, परिशिष्टस्य च प्रकृतिभागस्य यथासंख्यमगस्ति-कुण्डिनच् इत्येतावादेशौ भवतः । अगस्तयः । कुण्डिनाः । चकारः स्वरार्थः । मध्योदात्तो हि कुण्डिनशब्दस्तदादेशोऽपि तथा स्यात् । अगस्त्यशब्दादृष्यण् । कुण्डिनशब्दाद्गर्गादित्वाद्यञ् । तयोः "गोत्रे लुगचि" इति लुकि प्रतिषिद्धे आगस्ती-

---

**तिककितवादि**—तिकादि एवं कितवादि शब्दों से तत्कृतबहुत्व में आए हुए गोत्रप्रत्यय का लुक् होता है द्वन्द्वसमास में।

**उपकादि**—उपक आदि शब्दों से विहित तत्कृतबहुत्वार्थक गोत्रप्रत्यय का लुक् होता है विकल्प से द्वन्द्व तथा द्वन्द्वेतर समास में भी।

**आगस्त्य**—आगस्त्य तथा कौण्डिन्य शब्दों से विहित अण् तथा यञ् प्रत्ययों का लुक् हो जाता है और प्रकृतिमात्र को क्रमशः अगस्ति तथा कुन्डिनच् आदेश हो जाता है।

---

(१) चूडारक । उदङ्क । सुधायुक । अबन्धक । पद्ञ्जल । अनुपद । अपजग्ध । कमक । लेखाभ्र । कमन्दक । पिञ्जल । मसूरकर्ण । मदाघ । कदामत्त । दामकण्ठ इत्यधिकं क्वचित् ।

याश्छात्रा इति वृद्धलक्षणश्छो भवति। कौण्डिन्ये त्वणैव भवितव्यम्—"कण्वादिभ्यो गोत्रे" इति। तत्र विशेषो नास्ति—कौण्डिनाश्छात्राः॥

## सुपो धातुप्रातिपदिकयोः ॥ ७१ ॥

सुपो विभक्तेर्धातुसंज्ञायाः प्रातिपदिकसंज्ञायाश्च लुग्भवति। तदन्तर्गतास्तद्ग्रहणेन गृह्यन्ते। धातोस्तावत्-पुत्रीयति, घटीयति। प्रातिपदिकस्य-कष्टश्रितः, राजपुरुषः। धातुप्रातिपदिकयोरिति किम्? वृक्षः, प्लक्षः॥

## अदिप्रभृतिभ्यः शपः ॥ ७२ ॥

अदिप्रभृतिभ्य उत्तरस्य शपो लुग्भवति। अत्ति। हन्ति। द्वेष्टि॥

## बहुलं छन्दसि ॥ ७३ ॥

छन्दसि विषये शपो बहुलं लुग्भवति। अदिप्रभृतिभ्य उक्तस्ततो न भवत्यपि। वृत्रं हनति, अहिः शयते। अन्येभ्यश्च भवति—त्राध्वं नो देवाः॥

## यङोऽचि च ॥ ७४ ॥

यङो लुग्भवति अचि प्रत्यये परतः। चकारेण बहुलग्रहणमनुकृष्यते, न तु छन्दसीति, तेन छन्दसि भाषायां च यङो लुग्भवति। लोलुवः। पोपुवः। सनीस्रंसः। दनीध्वंसः। बहुलग्रहणादनच्यपि भवति—शाकुनिको लालपीति, दुन्दुभिर्वावदीति॥

## जुहोत्यादिभ्यः श्लुः ॥ ७५ ॥

शबनुवर्तते, न यङ्। जुहोत्यादिभ्य उत्तरस्य शपः श्लुर्भवति। लुकि प्रकृते श्लुविधानं द्विर्वचनार्थम्। जुहोति। (१)बिभर्त्ति। नेनेक्ति॥

## बहुलं छन्दसि ॥ ७६ ॥

छन्दसि विषये बहुलं शपः श्लुर्भवति। यत्रोक्तं तत्र न भवति, अन्यत्रापि भवति। जुहोत्वादिभ्यस्तावन्न भवति—दाति प्रियाणि, धाति प्रियाणि। अन्येभ्यश्च भवति—पूर्णां विवष्टि, जनिमाविवक्ति(२)॥

## गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ॥ ७७ ॥

लुगनुवर्त्तते, न श्लुः। गाति, स्था, घु, पा, भू इत्येतेभ्यः परस्य सिचो लुग्भवति परस्मैपदेषु परतः। अगात्। अस्थात्। घु-अदात्, अधात्। अपात्। अभूत्। ॐगापोर्ग्रहणे

---

**सुपो धातु**—धातुसंज्ञक तथा प्रातिपदिकसंज्ञक के अवयव सुप् का लुक् हो जाता है।

**अदिप्रभृतिभ्यः**—'अद्' आदि धातुओं से विहित शप् का लुक् हो जाता है।

**बहुलम्**—परन्तु वेद में बहुल करके शप् का लुक् होता है।

**यङोचि**—अच् प्रत्यय के परे रहते यङ् प्रत्यय का लुक् होता है।

**जुहोत्यादिभ्यः**—'हु' आदि धातुओं से विहित शप् का श्लु होता है।

**बहुलम्**—वेद में शप् का श्लु बहुल करके होता है।

**गाति स्था**—'गा', 'स्था', 'घु' संज्ञक धातु, 'पा' और 'भू' धातुओं से पर सिच् का लुक् होता है परस्मैपद में।

**गापोः**—उक्त सूत्र में 'गा' से 'इण्' धातु का और 'पा' से 'पिबति' रूपवाले 'पा' धातु का ग्रहण समझना चाहिए।

---

(१) मुद्रितपुस्तकेषु बिभेतीति पाठ उपलभ्यते।

(२) विभक्तीति पाठोऽपि न्यासे।

इणूपिबत्योर्ग्रहणम्क्ष । गायतेः पातेश्च न भवति—अगासीन्नटः, अपासीन्नृपः । परस्मैपदेष्विति किम् ? अगासातां ग्रामौ देवदत्तेन ॥

## विभाषा घ्राधेट्शाच्छासः ॥ ७८ ॥

घ्रा, धेट्, शा, छा, सा इत्येतेभ्य उत्तरस्य सिचः परस्मैपदेषु विभाषा लुग्भवति । धेटः पूर्वेण प्राप्ते विभाषार्थं वचनम् । परिशिष्टानामप्राप्ते । अघ्रात्, अघ्रासीत् । अधात्, अधासीत् । अशात्, अशासीत् । अच्छात्, अच्छासीत् । असात्, असासीत् । परस्मैपदेष्वित्येव—अघ्रासातां सुमनसौ देवदत्तेन ॥

## तनादिभ्यस्तथासोः ॥ ७९ ॥

तनादिभ्य उत्तरस्य सिचस्तथासोः परतो विभाषा लुग्भवति । अतत । अतथाः । अतनिष्ट । अतनिष्ठाः । असात । असाथाः । असनिष्ट । असनिष्ठाः । "जनसनखनाम्" इत्यात्वम् । थासा साहचर्यादात्मनेपदस्य तशब्दस्य ग्रहणम्, परस्मैपदे न भवति—अतनिष्ट यूयम् ॥

## मन्त्रे घसह्वरणशवृदहाद्वृचकृगमिजनिभ्यो लेः ॥ ८० ॥

मन्त्रविषये घस, ह्वर, णश, वृ, दह, आत्, वृच्, कृ, गमि, जनि इत्येतेभ्य उत्तरस्य लेर्लुग्भवति । घस-अक्षन्नमीमदन्त पितरः । ह्वरेति 'ह्वृ कौटिल्ये'-माह्वर्मित्रस्य त्वम् । नश-(१)प्रणङ् मर्त्यस्य । वृ इति वृङ्वृञोः सामान्येन ग्रहणम्-सुरुचो वेन आवः । दह-मान (२)आधक् । आदिति आकारान्तग्रहणम्, 'प्रा पूरणे'-आप्रा द्यावापृथिवी अन्तरिक्षम् । वृज्-मा नो अस्मिन्महाधने परावर्क् । कृ-अक्रन् कर्म कर्मकृतः । गमि-अग्मन् । जनि-अज्ञत वा अस्य दन्ताः । ब्राह्मणे प्रयोगोऽयम् । मन्त्रग्रहणं तु छन्दस उपलक्षणार्थम् ॥

## आमः ॥ ८१ ॥

आमः परस्य लेर्लुग् भवति । ईहांचक्रे । ऊहांचक्रे । ईक्षांचक्रे ॥

## अव्ययादाप्सुपः ॥ ८२ ॥

अव्ययादुत्तरस्यापः सुपश्च लुग्भवति । तत्र शालायाम् । यत्र शालायाम् । सुपः खल्वपि-कृत्वा, हित्वा ॥

## नाव्ययीभावादतोऽम्त्वपञ्चम्याः ॥ ८३ ॥

पूर्वेण लुक् प्राप्तः प्रतिषिद्ध्यते । अदन्तादव्ययीभावादुत्तरस्य सुपो न लुग्भवति,

---

**विभाषा**—'घ्रा', 'धेट्', 'शा', 'छा' तथा 'सा' धातुओं से परवर्त्ती सिच् का विकल्प से लुक् होता है ।

**तनादि**—'तन' आदि धातुओं से परवर्त्ती सिच् का त और थास् के परे रहते विकल्प से लुक् होता है ।

**मन्त्रे**—मन्त्रविषय में 'घस', 'ह्वर', 'णश', 'वृ', 'दह', आत्, 'वृच्', 'कृ', 'गम्' तथा 'जन्' धातुओं से परवर्त्ती च्लि का लुक् होता है ।

**आमः**—आमन्त से परवर्त्ती च्लि का लुक् होता है ।

**अव्ययात्**—अव्यय से परवर्त्ती 'आप्' तथा सुप् का लुक् होता है ।

**नाऽव्ययी**—अदन्त अव्ययीभाव से परवर्त्ती सुप् का लुक् नहीं होता है और पञ्चमी-भिन्न सुप् के स्थान में अम् आदेश भी होता है ।

---

(१) प्रानडिति पाठान्तरम् ।

(२) धगित्येव न्यासपाठः । बहुलं छन्दस्यमाङ्योगेऽपि इत्याडागमाभावः ।

अमादेशस्तु तस्य सुपो भवत्यपञ्चम्याः। तस्मिन् प्रतिषिद्धे पञ्चम्याः श्रवणमेव भवति। उपकुम्भं तिष्ठति। उपकुंभं पश्य। उपमणिकं तिष्ठति। उपमणिकं पश्य। अत इति किम्? अधिस्त्रि, अधिकुमारि। अपञ्चम्या इति किम्? उपकुम्भादानय॥

## तृतीयासप्तम्योर्बहुलम्॥ ८४॥

पूर्वेण नित्यमम्भावे प्राप्ते वचनमिदम्। तृतीयासप्तम्योर्विभक्त्योर्बहुलमम्भावो भवति अव्ययीभावे। उपकुम्भेन कृतम्। उपकुम्भं कृतम्। उपकुम्भे निधेहि। उपकुम्भं निधेहि। ॐसप्तम्या ऋद्धिनदीसमाससंख्यावयवेभ्यो नित्यममिति वक्तव्यम्ॐ। सुमद्रम्। सुमगधम्। उन्मत्तगङ्गम्। लोहितगङ्गम्। एकविंशति भारद्वाजम्। बहुलवचनात् सिद्धम्॥

## लुटः प्रथमस्य डारौरसः॥ ८५॥

लुडादेशस्य प्रथमपुरुषस्य परस्मैपदस्यात्मनेपदस्य च डा, रौ, रस इत्येते आदेशा भवन्ति यथासंख्यम्। कर्ता। कर्त्तारौ। कर्त्तारः। आत्मनेपदस्य-अध्येता, अध्येतारौ, अध्येतारः। प्रथमस्येति किम्? श्वः कर्त्तासि, श्वोऽध्येतासे॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ

द्वितीयाध्यायस्य चतुर्थः पादः॥ २॥ ४॥

समासश्चाध्यायः॥ २॥



---

तृतीया—अव्ययीभाव में तृतीया और सप्तमी को अम् आदेश होता है बहुल करके।

सप्तम्याः—जिस अव्ययीभाव समास का अवयव ऋद्धिवाचक, नदीवाचक, संख्यावाचक शब्द हों उनसे परवर्ती सप्तमी को नित्य अमादेश समझना चाहिए।

लुटः प्रथमस्य—लुट्स्थानीय प्रथम पुरुष के स्थान में परस्मैपद तथा आतमनेपद में क्रमशः डा, रौ तथा रस् आदेश होते हैं।

द्वितीयाध्याय का चतुर्थ पाद समाप्त हुआ।

द्वितीयाध्याय समाप्त हुआ।



# अथ तृतीयाध्यायस्य प्रथमः पादः ॥

## प्रत्ययः ॥ १ ॥

अधिकारोऽयम्। प्रत्ययशब्दः संज्ञात्वेनाधिक्रियते । आ पञ्चमाध्यायपरिसमाप्ते-र्यानित ऊर्ध्वमनुक्रमिष्यामः प्रत्ययसंज्ञास्ते वेदितव्याः, प्रकृत्युपपदोपाधिविकारागमान् वर्जयित्वा। वक्ष्यति-"तव्यत्तव्यानीयरः" । कर्त्तव्यम्। करणीयम्। (१)तैत्तिरीयम्। प्रत्ययप्रदेशाः—"प्रत्ययलोपे प्रत्ययलक्षणम्" इत्येवमादयः॥

## परश्च ॥ २ ॥

अयमप्यधिकारो योगे योग उपतिष्ठते, परिभाषा वा। परश्च स भवति धातोर्वा प्रातिपदिकाद्वा यः प्रत्ययसंज्ञः। कर्तव्यम्। तैत्तिरीयम्। चकारः पुनरस्यैव समुच्चयार्थः, तेनोणादिषु परत्वं न विकल्प्यते॥

## आद्युदात्तश्च ॥ ३ ॥

अयमप्यधिकारः, परिभाषा वा। आद्युदात्तश्च स भवति यः प्रत्ययसंज्ञः। अनियत-स्वरप्रत्ययप्रसङ्गेऽनेकाच्सु च प्रत्ययेषु देशस्यानियमे सति वचनमिदमादेरुदात्तार्थम् । कर्तव्यम्। तैत्तिरीयम्॥

## अनुदात्तौ सुप्पितौ ॥ ४ ॥

पूर्वस्यायमपवादः। सुपः पितश्च प्रत्यया अनुदात्ता भवन्ति । दृषदौ, दृषदः। पितः खल्वपि-पचति, पठति ॥

## गुप्तिज्किद्भ्यः सन् ॥ ५ ॥

"गुप गोपने", "तिज निशाने", "कित निवासे" एतेभ्यो धातुभ्यः सन्प्रत्ययो भवति। प्रत्ययसंज्ञा चाधिकृतैव। जुगुप्सते। तितिक्षते। चिकित्सति। ❀निन्दाक्षमाव्याधिप्रतीकारेषु सन्निष्यते, अन्यत्र यथाप्राप्तं प्रत्यया भवन्ति❀। गोपायति। तेजयति। सङ्केतयति। गुपादिष्वनुबन्धकरणमात्मनेपदार्थम् ॥

## मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ॥ ६ ॥

'मान पूजायाम्', 'बध बन्धने', 'दान अवखण्डने', 'शान् अवतेजने' इत्येतेभ्यो धातुभ्यः सन्प्रत्ययो भवति, अभ्यासस्य चेकारस्य दीर्घादेशो भवति। मीमांसते।

---

**प्रत्ययः**—अब प्रत्यय संज्ञा का अधिकार है।

**परश्च**—प्रत्ययसंज्ञक का प्रयोग धातु अथवा प्रातिपदिक से पर होता है।

**आद्युदात्तश्च**—प्रत्ययसंज्ञक शब्द आद्युदात्त होते हैं।

**अनुदात्तौ**—परन्तु सुप्प्रत्यय तथा पित् प्रत्यय अनुदात्त होते हैं।

**गुप्तिज्**—'गुप', 'तिज' तथा 'कित' धातुओं से सन् प्रत्यय होता है।

**निन्दा**—उपर्युक्त धातुओं से क्रमशः निन्दा, क्षमा तथा व्याधिप्रतीकार अर्थ में सन् प्रत्यय होता है, और अन्यत्र यथाप्राप्त प्रत्यय ही होते हैं।

**मान्बध**—'मान्', 'बध', 'दान्' तथा 'शान्' धातुओं से सन् प्रत्यय होता है और अभ्यास-भूत इकार के स्थान में दीर्घ होता है।

---

(१) न्यासपदमंजर्योरिदमुदाहरणमत्र नोपलभ्यते।

बीभत्सते। दीदांसते। शीशांसते। उत्तरसूत्रे वाग्रहणं सर्वस्य शेषो विज्ञायते, तेन क्वचिन्न भवत्यपि—मानयति, बाधयति, दानयति, निशानयति। ॐअत्रापि सन्नर्थविशेष इष्यतेॐ। मानेर्जिज्ञासायाम्। बधेर्वैरूप्ये। दानेरार्जवे। शानेर्निशाने॥

## धातोः कर्मणः समानकर्तृकादिच्छायां वा ॥ ७ ॥

इषिकर्म यो धातुरिषिणैव समानकर्तृकस्तस्मादिच्छायामर्थे वा सन्प्रत्ययो भवति। कर्मत्वं समानकर्तृकत्वं च धातोरर्थद्वारकम्। कर्तुमिच्छति चिकीर्षति। जिहीर्षति। धातुग्रहणं किम्? सोपसर्गादुत्पत्तिर्मा भूत्—प्रकर्तुमैच्छत् प्राचिकीर्षत्। कर्मण इति किम्? करणान्मा भूत्—गमनेनेच्छति। समानकर्तृकादिति किम्? देवदत्तस्य भोजनमिच्छति यज्ञदत्तः। इच्छायामिति किम्? कर्तुं जानाति। वावचनाद्वाक्यमपि भवति। धातोरिति विधानादत्र सन आर्द्धधातुकसंज्ञा भवति, न पूर्वत्र। ॐआशङ्कायामुपसंख्यानम्ॐ। शङ्के पतिष्यति कूलम्। पिपतिषति कूलम्। श्वा मुमूर्षति। ॐइच्छासन्नन्तात्प्रतिषेधो वक्तव्यःॐ। चिकीर्षितुमिच्छति। विशेषणं किम्? जुगुप्सिषते, मीमांसिषते॥

ॐशैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः।
सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यतेॐ॥

## सुप आत्मनः क्यच् ॥ ८ ॥

कर्मण इच्छायां वेत्यनुवर्त्तते। इषिकर्मण एषितुरेवात्मसम्बन्धिनः सुबन्तादिच्छायामर्थे वा क्यच्प्रत्ययो भवति। आत्मनः पुत्रमिच्छति पुत्रीयति। सुब्ग्रहणं किम्? वाक्यान्मा भूत्—महान्तं पुत्रमिच्छति। आत्मन इति किम्? राज्ञः पुत्रमिच्छति। ककारो "नः क्ये" इति सामान्यग्रहणार्थः। चकारस्तदविधातार्थः। ॐक्यचि मान्ताव्ययप्रतिषेधो वक्तव्यःॐ। इदमिच्छति। उच्चैरिच्छति। नीचैरिच्छति। ॐछन्दसि परेच्छायामिति वक्तव्यम्ॐ। मा त्वा वृका अघायवो विदन्॥

## काम्यच्च ॥ ९ ॥

सुबन्तात्कर्मण आत्मेच्छायां काम्यच् प्रत्ययो भवति। आत्मनः पुत्रमिच्छति पुत्रकाम्यति। वस्त्रकाम्यति। योगविभाग उत्तरत्र क्यचोनुवृत्त्यर्थः। ककारस्येत्संज्ञा प्रयोजनाभावान्न भवति, चकारादित्वाद्वा काम्यचः। उपयट्काम्यति॥

---

**अत्रापि**—यह सन् प्रत्यय भी 'मान्' धातु से जिज्ञासा अर्थ में, 'बध' धातु से वैरूप्य अर्थ में, 'दान्' धातु से ऋजुता अर्थ में और 'शान्' धातु से निशान अर्थ में समझना चाहिए।

**धातोः**—'इष' धातु के कर्मकारकस्थानापन्न धातु से इच्छा अर्थ में सन् प्रत्यय विकल्प से होता है यदि 'इष' धातु का कर्त्ता ही उस कर्मस्थानीय धातु का भी कर्त्ता हो।

**आशङ्कायाम्**—आशङ्का अर्थ में धातु से सन् प्रत्यय समझना चाहिए।

**इच्छा**—इच्छार्थकसनप्रत्ययान्त धातु से पुनः इच्छार्थक सनप्रत्यय नहीं होता है—यह समझना चाहिए।

**शैषिकात्**—शैषिक से सरूप शैषिक प्रत्यय, मत्वर्थीय प्रत्यय से पुनः सरूप मत्वर्थीय प्रत्यय तथा सन्नन्त से पुनः सन् प्रत्यय इष्ट नहीं हैं।

**सुपः**—'इष' धातु के कर्म तथा इच्छा करनेवाले के आत्मीय सम्बन्धी सुबन्त से इच्छा अर्थ में विकल्प से क्यच् प्रत्यय होता है।

**क्यचि**—मान्त अव्ययात्मक सुबन्त से क्यच् प्रत्यय का प्रतिषेध समझना चाहिए।

**छन्दसि**—वेद में पर की इच्छा में भी सन् प्रत्यय समझना चाहिए।

**काम्यच्च**—'इष' धातु के कर्मभूत सुबन्त से आत्मेच्छा अर्थ में काम्यच् प्रत्यय भी होता है।

## उपमानादाचारे ॥ १० ॥

क्यजनुवर्त्तते, न काम्यच्। उपमानात् कर्मणः सुबन्तादाचारेऽर्थे वा क्यच्प्रत्ययो भवति। आचारक्रियायाः प्रत्ययार्थत्वात्तदपेक्षयैवोपमानस्य कर्मता। पुत्त्रमिवाचरति पुत्त्रीयति छात्त्रम्। प्रावारीयति कम्बलम्। ॐअधिकरणाच्चेति वक्तव्यम्ॐ। प्रासादीयति कुट्याम्(१)। पर्यङ्कीयति मञ्चके॥

## कर्त्तुः क्यङ् सलोपश्च ॥ ११ ॥

आचार इत्यनुवर्त्तते। उपमानात्कर्त्तुः सुबन्तादाचारेऽर्थे वा क्यङ् प्रत्ययो भवति, सकारस्य च लोपो भवति। अन्वाचयशिष्टः सलोपः; तदभावेपि (२)क्यङ् भवत्येव। श्येन इवाचरति काकः श्येनायते। कुमुदं पुष्करायते। सलोपविधावपि वाग्रहणं संबध्यते, व्यवस्थितविभाषा च भवति। ओजायते। अप्सरायते। पयायते। पयस्यते॥

ॐओजसोऽप्सरसो नित्यं पयसस्तु विभाषयाॐ।(३)

सलोपविधौ च कर्त्तुरिति स्थानषष्ठी सम्पद्यते, तत्रालोऽन्त्यनियमे सति, हंसायते, सारसायते इति सलोपो न भवति। ॐआचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यःॐ। अवगल्भते, अवगल्भायते। क्लीबते, क्लीबायते। होडते, होडायते। ॐसर्वप्रातिपदिकेभ्य इत्येकेॐ। अश्व इवाचरत्यश्वायते। गर्दभायते। अश्वति। गर्दभति॥

## भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ॥ १२ ॥

भृश इत्येवमादिभ्यः प्रातिपदिकेभ्योऽच्व्यन्तेभ्यो भुवि भवत्यर्थे क्यङ्प्रत्ययो भवति, हलन्तानां च लोपः। अच्वेरिति प्रत्येकमभिसम्बध्यते। किमर्थं पुनरिदमुच्यते, यावता भवतियोगे च्विर्विधीयते, तेनोक्तार्थत्वाच्च्व्यन्तेभ्यो न क्यङ् भविष्यति? तत्सादृश्यप्रतिपत्त्यर्थं तर्हि च्विप्रतिषेधः क्रियते। अभूततद्भावविषयेभ्यो भृशादिभ्यः क्यङ्प्रत्ययः। अभृशो भृशो भवति भृशायते। शीघ्रायते। भृश। शीघ्र। मन्द। चपल। पण्डित। उत्सुक। उन्मनस्। अभिमनस्। सुमनस्। दुर्मनस्। रहस्। रेहस्। शश्वत्। बृहत्।

---

**उपमानात्**—कर्मकारकस्थानीय उपमानभूत सुबन्त से आचार अर्थ में विकल्प से क्यच् प्रत्यय होता है।

**अधि**—उपमानभूत अधिकरण कारक से भी आचार अर्थ में क्यच् प्रत्यय समझना चाहिए।

**कर्त्तुः**—उपमानभूत कर्त्तृकारकस्थानीय सुबन्त से आचार अर्थ में क्यङ् प्रत्यय होता है विकल्प से और सकार का लोप भी होता है।

**ओजसो**—ओजस् तथा अप्सरस् शब्दों के सकार का नित्यलोप होता है, पयस् आदि शब्दों के सकार का विकल्प से।

**आचारे**—आचार अर्थ में अवगल्भ, क्लीब तथा होड शब्दों से विकल्प में क्विप् प्रत्यय होता है।

**सर्व**—कुछ लोगों का कहना है कि सभी प्रातिपादिकों से आचार अर्थ में क्विप् प्रत्यय होता है।

**भृशादिभ्यो**—च्विप्रत्यान्त-भिन्न भृश आदि शब्दों से 'भवति' (होता है) के अर्थ में क्यङ् प्रत्यय होता है और हल् का लोप भी हो जाता है।

---

(१) कुड्ये इति क्वचित् पाठः।

(२) तदसम्भवेपि इति पदमंजर्यां पाठः।

(३) सकारस्येष्यते लोपः शब्दशास्त्रविचक्षणैः इति उत्तरार्धघटितसम्पूर्णः श्लोकः क्वचिदुपलभ्यते।

वेहत्। नृषत्। शुचि। अधर। ओजस्। वर्चस्(१)। भृशादिः। अच्वेरिति किम्? भृशीभवति॥

## लोहितादिडाज्भ्यः क्यष्॥ १३॥

लोहितादिभ्यो डाजन्तेभ्यश्च भवत्यर्थे क्यष् प्रत्ययो भवति। लोहितायति। लोहितायते। डाजन्तेभ्यः—पटपटायति, पटपटायते। लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणि। यानि लोहितादिषु पठ्यन्ते तेभ्यः क्यङेव, अपरिपठितेभ्यस्तु क्यषेव भवति—वर्मायति, वर्मायते, निद्रायति, निद्रायते, करुणायति, करुणायते, कृपायति, कृपायते। आकृतिगणोऽयम्। तथाच ककारः सामान्यग्रहणाऽर्थोऽनुबध्यते—"नः क्ये" इति। न हि पठितानां मध्ये नकारान्तः शब्दोऽस्ति। कृभ्वस्तिभिरिव क्यषापि योगे डाज् भवतीत्येतदेव वचनं ज्ञापकम्। अच्वेरित्यनुवृत्तेरभूततद्भावे क्यष् विज्ञायते। लोहित। नील। हरित। पीत। मद्र। फेन। मन्द। लोहितादि॥

## कष्टाय क्रमणे॥ १४॥

क्यङनुवर्त्तते, न क्यष्। कष्टशब्दाच्चतुर्थीसमर्थात्क्रमणेऽर्थेऽनार्जवे क्यङ् प्रत्ययो भवति। कष्टाय कर्मणे क्रामति(२) कष्टायते। अत्यल्पमिदमुच्यते। ॐसत्रकष्टकक्षकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम्ॐ। कण्वचिकीर्षा पापचिकीर्षा, तस्यामेतेभ्यः क्यङ् प्रत्ययो भवति। सत्रायते। कष्टायते। कक्षायते। कृच्छ्रायते। गहनायते। कण्वचिकीर्षायामिति किम्? (३) अजः कष्टं क्रामति॥

## कर्मणो रोमन्थतपोभ्यां वर्तिचरोः॥ १५॥

रोमन्थशब्दात्तपःशब्दाच्च कर्मणो यथाक्रमं वर्तिचरोरर्थयोः क्यङ् प्रत्ययो भवति। रोमन्थं वर्त्तयति (४)रोमन्थायते गौः। ॐहनुचलन इति वक्तव्यम्ॐ। इह मा भूत्—(५)कीटो रोमन्थं वर्त्तयति। ॐतपसः परस्मैपदं चॐ। तपश्चरति तपस्यति॥

## बाष्पोष्मभ्यामुद्वमने॥ १६॥

कर्मण इति वर्त्तते। बाष्पशब्दाद् उष्मशब्दाच्च कर्मण उद्वमनेऽर्थे क्यङ् प्रत्ययो

---

**लोहितादि**—लोहित आदि शब्दों तथा डाच् प्रत्ययान्त शब्दों से 'भवति' अर्थ में क्यष् प्रत्यय होता है।

**कष्टाय**—चतुर्थीसमर्थ कष्टशब्द से कौटिल्यात्मक क्रमण अर्थ में क्यङ् प्रत्यय होता है।

**सत्रकष्ट**—सत्र, कष्ट, कक्ष, कृच्छ्र तथा गहन शब्दों से पाप करने की इच्छा के अर्थ में क्यङ् प्रत्यय समझना चाहिए।

**कर्मणो**—क्रमशः वर्त्तन तथा चरण अर्थ में कर्मीभूत रोमन्थ तथा तपस् शब्दों से क्यङ् प्रत्यय होता है।

**हनु**—उपर्युक्त प्रत्यय तभी होता है यदि उस समय दाढ़ी में गति हो।

**तपसः**—उपर्युक्त क्यङ्प्रत्ययान्त तपस्य शब्द से परस्मैपद का भी विधान समझना चाहिए।

**बाष्पोष्म**—कर्मीभूत बाष्प तथा उष्म शब्दों मे उद्वमन अर्थ में क्यङ् प्रत्यय होता है।

---

(१) विमनस्। रभन्। हन्। रोहत्। शुचिस्। अरजस्—एते पुस्तकान्तरेऽधिकाः।

(२) कष्टाय क्रमणमनार्जवं करोतीत्यर्थः।

(३) अजः कष्टमिति—अजः कष्टं गहनं देशं क्रामतीत्यर्थः।

(४) रोमन्थायत इति—अभ्यवहृतं पुनराकृष्य चर्वयतीति।

(५) कीटो रोमन्थमिति—उद्गीर्णं बहिर्निरस्तमवगीर्णं वा पृष्ठान्तेन निर्गतं रोमन्थाख्यं द्रव्यं वर्तयति गुटिकां करोतीत्यर्थः।

भवति। बाष्पमुद्वमति बाष्पायते। उष्मायते। ॐफेनाच्चेति वक्तव्यम्ॐ। फेनमुद्वमति फेनायते॥

## शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे॥ १७॥

शब्द, वैर, कलह, अभ्र, कण्व, मेघ इत्येतेभ्यः करणे करोत्यर्थे क्यङ् प्रत्ययो भवति। शब्दं करोति शब्दायते। वैरायते। कलहायते। अभ्रायते। कण्वायते। मेघायते। ॐसुदिनदुर्दिननीहारेभ्यश्चेति वक्तव्यम्ॐ। सुदिनायते। दुर्दिनायते। नीहारायते। ॐअटाट्टाशीकाकोटापोटासोटाकष्टाग्रहणं(१) कर्तव्यम्ॐ। अटायते। अट्टायते। शीकायते। कोटायते। पोटायते। सोटायते। कष्टायते॥

## सुखादिभ्यः कर्तृवेदनायाम्॥ १८॥

कर्मग्रहणमनुवर्त्तते। सुख इत्येवमादिभ्यः कर्मभ्यो वेदनायामर्थेऽनुभवे क्यङ् प्रत्ययो भवति, वेदयितुश्चेत्कर्तुः सम्बन्धीनि सुखादीनि भवन्ति। सुखं वेदयते सुखायते। दुःखायते। कर्त्तृग्रहणं किम्? सुखं वेदयति प्रसाधको देवदत्तस्य। सुख। दुःख। (२)तृप्त। गहन। कृच्छ्र। अस्र। अलीक। प्रतीप। करुण। कृपण। सोढ। सुखादिः॥

## नमोवरिवश्चित्रङः क्यच्॥ १९॥

करण इति वर्त्तते। नमस्, वरिवस्, चित्रङ् इत्येतेभ्यो वा क्यच्प्रत्ययो भवति करणविशेषे पूजादौ। नमसः पूजायाम्—नमस्यति देवान्। वरिवसः परिचर्यायाम्—(३)वरिवस्यति गुरून्। चित्रङ आश्चर्ये—चित्रीयते। ङकार आत्मनेपदार्थः॥

## पुच्छभाण्डचीवराण्णिङ्॥ २०॥

करण इति वर्तते। पुच्छ, भाण्ड, चीवर इत्येतेभ्यो णिङ् प्रत्ययो भवति करणविशेषे। ॐपुच्छादुदसने पर्यसने वाॐ। उत्पुच्छयते। परिपुच्छयते। ॐभाण्डात् समाचयनेॐ।

---

फेनाच्चेति—फेन शब्द से भी उद्वमन अर्थ में क्यङ्-प्रत्यय का प्रतिपादन करना चाहिए।

शब्दवैर—शब्द, वैर, कलह, अभ्र, कण्व तथा मेघ शब्दों से 'करोति' अर्थ में क्यङ् प्रत्यय होता है।

सुदिन—सुदिन, दुर्दिन, तथा नीहार शब्दों से भी 'करोति' अर्थ में क्यङ् प्रत्यय का विधान समझना चाहिए।

अटाट्टा—अट, अट्ट, शीका, कोटा, पोटा, सोटा तथा कष्टा शब्दों का भी क्यङ् की प्रकृतियों में समावेश समझना चाहिए।

सुखादिभ्यः—सुख आदि कर्मकारकस्थानीय शब्दों से अनुभवार्थ में क्यङ् प्रत्यय होता है यदि अनुभूतिविषयीभूत सुखादि स्वगत हों।

नमो—नमस्, वरिवस् तथा चित्रङ् शब्दों से विकल्प से करण अर्थ में क्यच् प्रत्यय होता है।

पुच्छ—पुच्छ, भाण्ड तथा चीवर शब्दों से करण अर्थ में णिङ् प्रत्यय होता है।

पुच्छात्—पुच्छ शब्द से उत्क्षेपण तथा परिक्षेपण अर्थों में ही णिङ् प्रत्यय समझना चाहिए।

भाण्डात्—भाण्ड शब्द से समाचयन अर्थ में णिङ्प्रत्यय समझना चाहिए।

(१) अट्टाटाशीकाकोटापोटासोटासृष्टाधृष्टापुष्टाग्रहणं कर्त्तव्यमिति पुस्तकान्तरे पाठः। भाष्ये तु अटाट्टाशीकाकोटापोटासोटाप्रुष्टारुष्टाग्रहणं कर्तव्यमिति पाठः।

(२) तृप्तशब्दस्य स्थाने तीव्रेति पाठान्तरम्।

(३) वरिवस्यति परिचरतीत्यर्थः। चित्रीयते—विस्मयत इत्येके, विस्मापयत इत्यर्थ इत्यन्ये।

सम्भाण्डयते। ॐचीवरादर्जने परिधाने वाॐ। संचीवरयते भिक्षुः। ङकार आत्मनेपदार्थः। णकारः सामान्यग्रहणार्थः--"णेरनिटि" इति॥

## मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्॥ २१॥

मुण्ड, मिश्र, श्लक्ष्ण, लवण, व्रत, वस्त्र, हल, कल, कृत, तूस्त इत्येतेभ्यः करणे णिच् प्रत्ययो भवति। मुण्डं करोति मुण्डयति। मिश्रयति। श्लक्ष्णयति। लवणयति। व्रताद् भोजने तन्निवृत्तौ च—पयो व्रतयति, वृषलान्नं व्रतयति। वस्त्रात्समाच्छादने—संवस्त्रयति। हलिं गृह्णाति हलयति। कलिं गृह्णाति कलयति। हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थम्। अजहलत्। अचकलत्। कृतं गृह्णाति कृतयति। तूस्तानि विहन्ति वितूस्तयति केशान्। विशदीकरोतीत्यर्थः॥

## धातोरेकाचो हलादेः क्रियासमभिहारे यङ्॥ २२॥

एकाज् यो धातुर्हलादिः क्रियासमभिहारे (१)वर्त्तते तस्माद्यङ् प्रत्ययो भवति। पौनःपुन्यं भृशार्थो वा क्रियासमभिहारः। पुनः पुनः पचति पापच्यते। यायज्यते। भृशं ज्वलति जाज्वल्यते। देदीप्यते। धातोरिति किम्? सोपसर्गादुत्पत्तिर्मा भूत्—भृशं प्राटति। एकाच इति किम्? भृशं जागर्ति। हलादेरिति किम्? भृशमीक्षते। ॐसूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनां ग्रहणं यङ्विधावनेकाजहलाद्यर्थम्ॐ। सोसूच्यते। सोसूत्र्यते। मोमूत्र्यते। अटाट्यते। अरार्यते। अशाश्यते। प्रोर्णोनूयते। भृशं शोभते भृशं रोचत इत्यत्र नेष्यते, अनभिधानात्॥

## नित्यं कौटिल्ये गतौ॥ २३॥

गतिवचनाद्धातोः कौटिल्ये गम्यमाने नित्यं यङ् प्रत्ययो भवति। कुटिलं क्रामति चङ्क्रम्यते(२)। दन्द्रम्यते। नित्यग्रहणं विषयनियमार्थम्—गतिवचनान्नित्यं कौटिल्य एव यङ् भवति, न तु क्रियासमभिहारे—भृशं क्रामति॥

## लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्॥ २४॥

लुप, सद, चर, जप, जभ, दह, दश, गृ इत्येतेभ्यो भावगर्हायां (धात्वर्थगर्हायां) यङ्

---

**चीवरात्**—चीवर शब्द से अर्जन तथा परिधान अर्थों में णिङ्प्रत्यय समझना चाहिए।

**मुण्डमिश्र**—मुण्ड, मिश्र, श्लक्ष्ण, लवण, व्रत, वस्त्र, हल, कल, कृत तथा तूस्त शब्दों से करण अर्थ में णिच्प्रत्यय होता है।

**धातोरेकाचो**—एकाच् हलादि धातु से क्रियासमभिहार में यङ् प्रत्यय होता है।

**सूचिसूत्रि**—अनेकाच् तथा अहलादि धातुओं में सूचि, सूत्रि, मूत्रि, अट, ऋ, अश तथा ऊर्णुञ् धातुओं से भी यङ् का विधान करना चाहिए।

**नित्यम्**—गत्यर्थक धातुओं से कौटिल्य अर्थ में नित्य यङ् प्रत्यय होता है।

**लुपसद**—लुप, सद, चर, जप, जभ, दह, दश तथा गृ धातुओं से धात्वर्थगर्हा में यङ् प्रत्यय होता है।

---

(१) विप्रकीर्णानामेकत्र राशीकरणं समुदायभावापत्तिर्मुख्यः समभिहारः। स च क्रियाणामुत्पन्नापवर्गिणीनां सहानवस्थानादेकेन च धातुनाऽनेकस्याः क्रियाया युगपदनभिधानान्न सम्भवतीति गौणं समभिहारं दर्शयितुमाह—पौनः पुन्यमित्यादि। फलातिरेको वा भृशार्थता।

(२) वीऽप्यीयस्यध्वनि गतागतानि करोति स कुटिलां गतिं सम्पादयंश्चङ्क्रम्यते दन्द्रम्यत इति चोच्यते।

प्रत्ययो भवति। गर्हितं (१)लुम्पति लोलुप्यते। एवम्—सासद्यते, चञ्चूर्यते, जञ्जप्यते, जञ्जभ्यते, दन्दह्यते, दन्दश्यते, निजेगिल्यते। भावगर्हायामिति किम्? साधु जपति। भावग्रहणं किम्? साधनगर्हायां मा भूत्-मन्त्रं जपति वृषलः। नित्यग्रहणं विषयनियमार्थमनुवर्त्तते—एतेभ्यो नित्यं भावगर्हायामेव भवति, न तु क्रियासमभिहारे—भृशं लुम्पति॥

## सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्ण-चूर्णचुरादिभ्यो णिच्॥ २५॥

सत्यादिभ्यश्चूर्णपर्यन्तेभ्यश्चुरादिभ्यश्च णिच् प्रत्ययो भवति। सत्यमाचष्टे सत्यापयति। ॐअर्थवेदसत्यानामापुग्वक्तव्यःॐ। अर्थमाचष्टे अर्थापयति। वेदापयति। आपुग्वचनसामर्थ्याट्टिलोपो न भवति। पाशाद्विमोचने—विपाशयति। रूपाद्दर्शने—रूपयति। वीणयोपगायति उपवीणयति। तूलेनानुकुष्णाति अनुतूलयति। श्लोकैरुपस्तौति उपश्लोकयति। सेनयाऽभियाति अभिषेणयति। लोमान्यनुमार्ष्टि अनुलोमयति। त्वचं गृह्णाति त्वचयति। अकारान्तस्त्वचशब्दः। वर्मणा संनह्यति संवर्मयति। वर्णं गृह्णाति वर्णयति। चूर्णैरवध्वंसति अवचूर्णयति। चुरादिभ्यः स्वार्थे—चोरयति, चिन्तयति। स्वाभाविकत्वादर्थाभिधानस्य यथास्वं(२)प्रत्यया निर्दिश्यन्ते॥

## हेतुमति च॥ २६॥

हेतुः स्वतन्त्रस्य कर्त्तुः प्रयोजकः, तदीयो व्यापारः प्रेषणादिलक्षणो हेतुमान्, तस्मिन्नभिधेये धातोर्णिच् प्रत्ययो भवति। कटं कारयति। ओदनं पाचयति। ॐतत्करोतीत्युपसंख्यानं सूत्रयत्याद्यर्थम्ॐ। सूत्रं करोति सूत्रयति। ॐआख्यानात् कृतस्तदाचष्ट इति णिच् कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्ॐ। आख्यानात् कृदन्ताण्णिज्वक्तव्यस्तदाचष्ट इत्येतस्मिन्नर्थे, कृल्लुक्, प्रकृतिप्रत्यापत्तिः, प्रकृतिवच्च कारकं भवति। कंसवधमाचष्टे कंसं घातयति। बलिबन्धमाचष्टे बलिं बन्धयति। राजाऽऽगमनमाचष्टे राजानमागमयति। ॐआङ्लोपश्च कालात्यन्तसंयोगे मर्यादायाम्ॐ। आरात्रि विवासमाचष्टे रात्रिं विवासयति। ॐचित्रीकरणे प्रापिॐ। उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं

---

**सत्याप**—सत्याप, पाश, रूप, वीणा, तूल, श्लोक, सेना, लोम, त्वच, वर्म, वर्ण, चूर्ण तथा चुरादि धातुओं से णिच् प्रत्यय होता है।

**अर्थवेद**—अर्थ, वेद तथा सत्य शब्दों को आपुक् का आगम होता है।

**हेतुमति**—प्रयोजकव्यापार प्रेषणादि के अर्थ में धातु से णिच् प्रत्यय होता है।

**तत्करोति**—'सूत्रयति' आदि की निष्पत्ति के लिए द्वितीयासमर्थ से 'करोति' अर्थ में भी णिच्प्रत्यय का विधान समझना चाहिए।

**आख्यानात**—आख्यानात्मक कृदन्त से 'आचष्टे' ( कहता है ) अर्थ में णिच्प्रत्यय, कृत्प्रत्यय का लुक्, कृत्प्रत्ययप्रकृति का यथावत् अवस्थान तथा कृत्प्रकृति से शुद्ध णिच् में जिस प्रकार का रूप होता है उसी प्रकार का शब्दस्वरूप भी होता है।

**आङ्लोपश्च**—काल के अत्यन्त संयोग के गम्यमान होने पर मर्यादार्थक आङ् का लोप तथा पूर्ववत् णिच्, कृत्प्रत्ययलोप आदि होते हैं।

**चित्रीकरणे**—चित्रीकरण के गम्यमान होने पर 'प्राप्नोति' ( प्राप्ति करता है ) अर्थ में णिच् तथा कृत्प्रत्य के लुक् आदि होते हैं।

---

( १ ) गर्हितमिति-क्रियाविशेषणम्, तेन गर्हात्र गम्यते। गर्हितत्वं तु च्छेदनस्य निषिद्धतृणादिविषयत्वात्।

( २ ) यथायथमिति न्यासे।

संभावयते सूर्यमुद्गमयति । ॐनक्षत्रयोगे ज्ञिॐ। पुष्ययोगं जानाति पुष्येण योजयति । मघाभिर्योजयति ॥

## कण्ड्वादिभ्यो यक् ॥ २७ ॥

कण्डूञ् इत्येवमादिभ्यो यक् प्रत्ययो भवति। द्विविधाः कण्ड्वादयो धातवः प्रातिपदिकानि च। तत्र धात्वधिकाराद्धातुभ्य एव प्रत्ययो विधीयते, न प्रातिपदिकेभ्यः। तथाच गुणप्रतिषेधार्थः ककारोऽनुबध्यते—

धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि। आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः ॥

कण्डूञ्—कण्डूयति । कण्डूयते। ञित्वात् "कर्त्रभिप्राये क्रियाफले" इत्यात्मनेपदम्। कण्डूञ्। मन्तु। हृणीङ्। वल्गु। अस्मनस्। महीङ्। लेट्। लोट्। इरस्। इरज्। इरञ्। द्रवस्। मेधा। कुसुभ। मगध। तन्तस्। पम्पस्। सुख। दुःख। सपर। अरर। भिषज्। भिष्णज्। इषुध। चरण। चुरण। भुरण। तुरण। गद्गद। एला। केला। खेला। लिट्। लोट्(१) ॥

## गुपूधूपविच्छिपणिपनिभ्य आयः ॥ २८ ॥

'गुपू रक्षणे', 'धूप संतापे', 'विच्छ गतौ', 'पण व्यवहारे स्तुतौ च', 'पन च' इत्येतेभ्यो धातुभ्य आयप्रत्ययो भवति। गोपायति। धूपायति। विच्छायति। पणायति। पनायति। स्तुत्यर्थेन पनिना साहचर्यात्तदर्थः पणिः प्रत्ययमुत्पादयति न व्यवहारार्थः—शतस्य पणते, सहस्रस्य पणते। अनुबन्धश्च केवले चरितार्थः, तेनायप्रत्ययान्तान्नात्मनेपदं भवति ॥

## ऋतेरीयङ् ॥ २९ ॥

ऋतिः सौत्रो धातुर्घृणायां वर्तते, तत ईयङ् प्रत्ययो भवति। ङकार आत्मनेपदार्थः। ऋतीयते। ऋतीयेते। ऋतीयन्ते ॥

## कमेर्णिङ् ॥ ३० ॥

कमेर्धातोर्णिङ् प्रत्ययो भवति। णकारो वृद्ध्यर्थः। ङकार आत्मनेपदार्थः। कामयते। कामयेते। कामयन्ते ॥

## आयादय आर्द्धधातुके वा ॥ ३१ ॥

आर्द्धधातुकविषये आर्द्धधातुकविवक्षायामायादयः प्रत्यया वा भवन्ति। गोप्ता, गोपायिता। अर्तिता, ऋतीयिता। कमिता, कामयिता। नित्यं प्रत्ययप्रसङ्गे तदुत्पत्तिरार्धधातुकविषये विकल्प्यते, तत्र यथायथं प्रत्यया भवन्ति—गुप्तिः, गोपाया ॥

---

नक्षत्र—नक्षत्रयोगवाचक प्रातिपदिक से 'जानाति' ( जानता है ) अर्थ में णिच्प्रत्यय, कृत्-लुक आदि होते हैं।

कण्ड्वादिभ्यो—कण्डूञ् आदि धातुओं से यक्प्रत्यय होता है।

गुपुधूप—गुप्, धूप, विच्छ, पण तथा पन धातुओं से 'आय' प्रत्यय होता है।

ऋतेरीयङ्—घृणार्थक 'ऋ' धातु से ईयङ् प्रत्यय होता है।

कमेर्णिङ्—'कम' धातु से णिङ्प्रत्यय होता है।

आयादयः—आर्धधातुकविवक्षा में आय आदि प्रत्यय विकल्प से होते हैं।

( १ ) असुञ्। हृणीञ्। रूषय। पुरण इति क्वचित्।

## सनाद्यन्ता धातवः ॥ ३२ ॥

सन् आदिर्येषां ते सनादयः, सनादयोऽन्ते येषां ते सनाद्यन्ताः(१)। सनाद्यन्ताः समुदाया धातुसंज्ञा भवन्ति। प्रत्ययग्रहणपरिभाषयैव पदसंज्ञायामन्तवचनेन लिङ्गेन प्रतिषिद्धा सती पुनरिहान्तवचनेन प्रतिप्रसूयते। चिकीर्षति। पुत्रीयति। पुत्रकाम्यति ॥

## स्यतासी ऌलुटोः ॥ ३३ ॥

ऌरूपमुत्सृष्टानुबन्धं सामान्यमेव, तस्मिन् लुटि च परतो धातोर्यथासंख्यं स्यतासी प्रत्ययौ भवतः। करिष्यति। अकरिष्यत्। श्वः कर्ता। इदित्करणमनुनासिकलोपप्रतिषेधार्थम्(२)—मन्ता, संगन्ता(३) ॥

## सिब्बहुलं लेटि ॥ ३४ ॥

धातोः सिप् प्रत्ययो भवति बहुलं लेटि परतः। जोषिषत्। तारिषत्। मन्दिषत्। न च भवति—पताति(४)विद्युत्, उदधिं च्यावयाति ॥

## कास्प्रत्ययादाममन्त्रे लिटि ॥ ३५ ॥

'कासृ शब्दकुत्सायाम्', ततः प्रत्ययान्तेभ्यश्च धातुभ्य आम् प्रत्ययो भवति लिटि परतोऽमन्त्रविषये। कासाञ्चक्रे। प्रत्ययान्तेभ्यः-लोलूयाञ्चक्रे। अमन्त्र इति किम्? कृष्णो नोनाव। *कास्यनेकाच इति वक्तव्यं चुलुम्पाद्यर्थम्*। चुलुम्पाञ्चकार। चकासाञ्चकार। दरिद्राञ्चकार ॥

आमोऽमित्वमदन्तत्वादगुणत्वं विदेस्तथा।<br>(५)आस्कासोरांविधानाच्च पररूपं कतन्तवत् ॥

## इजादेश्च गुरुमतोऽनृच्छः ॥ ३६ ॥

इजादिर्यो धातुर्गुरुमान् ऋच्छतिवर्जितस्तस्माच्च लिटि परत आम्प्रत्यो भवति। ईहाञ्चक्रे। ऊहाञ्चक्रे। इजादेरिति किम्? ततक्ष, ररक्ष। गुरुमत इति किम्? इयज(६), उपव।

---

**सनाद्यन्ताः**—सन् आदि प्रत्ययों से युक्त शब्दस्वरूप की 'धातु' संज्ञा होती है।

**स्यतासी**—ऌट्, ऌङ् तथा लुट् के परे रहते धातु से स्य (आदिद्वय से) तथा तासि प्रत्यय होते हैं।

**सिब्बहुलम्**—लेट् के परे रहते धातु से सिप् प्रत्यय होता है बहुल करके।

**कास्**—मन्त्र से अतिरिक्त विषय में 'कास्' धातु तथा प्रत्ययान्त धातुओं से आम् प्रत्यय होता है लिट् के परे रहते।

**कास्यनेकाचः**—उक्त सूत्र में प्रत्यय के स्थान में अनेकाच् शब्द का उल्लेख करना चाहिए जिससे चुलुम्प, चकास् आदि से आम्प्रत्यय का विधान हो सके।

**इजादेश्च**—ऋच्छधातुभिन्न गुरुमान् इजादि धातु से भी लिट् के परे रहते आम्प्रत्यय होता है।

---

(१) सनादयोऽन्ते येषां ते सनाद्यन्ताः, तद्गुणसंविज्ञानश्चायं बहुव्रीहिः।

(२) प्रतिबन्धार्थम् इति न्यासे।

(३) संहन्तेति पाठान्तरम्।

(४) पदतीति न्यासे पाठः, तत्र पद गताविति धातुः ॥

(५) आस्चकासोरिति न्यासे पाठः।

(६) इयेष, उवोषेति पाठान्तरम्।

अनृच्छ इति किम् ? आनर्च्छ, आनर्च्छतुः, आनर्च्छुः। ऊर्णोतेश्च प्रतिषेधो वक्तव्यः। प्रोर्णुनाव। अथवा—

वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम्।
आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात्(१)॥

## दयायासश्च ॥ ३७ ॥

'दय दानगतिरक्षणेषु', 'अय गतौ', 'आस उपवेशने' इत्येतेभ्यो लिटि परत आम्प्रत्ययो भवति। दयाञ्चक्रे। पलायाञ्चक्रे। आसाञ्चक्रे॥

## उषविदजागृभ्योऽन्यतरस्याम् ॥ ३८ ॥

'उष दाहे', 'विद ज्ञाने', 'जागृ निद्राक्षये' एतेभ्यो लिटि परतोऽन्यतरस्यामाम् प्रत्ययो भवति। ओषाञ्चकार, उवोष। विदाञ्चकार, विवेद। जागराञ्चकार, जजागार। विदेरदन्तत्वप्रतिज्ञानादामि गुणो न भवति।

## भीह्रीभृहुवां श्लुवच्च ॥ ३९ ॥

'ञिभी भये', 'ह्री लज्जायाम्', 'डुभृञ् धारणपोषणयोः', 'हु दानादानयोः' इत्येतेभ्यो लिटि परत आम्प्रत्यो भवत्यन्तरस्याम्, श्लाविव चास्मिन् कार्यं भवति। किं पुनस्तत् ? (२)द्वित्वमित्वञ्च। बिभयाञ्चकार, बिभाय। जिह्रयाञ्चकार, जिह्राय। बिभराञ्चकार बभार। जुहवाञ्चकार, जुहाव॥

## कृञ्चानुप्रयुज्यते लिटि ॥ ४० ॥

आम्प्रत्ययस्य पश्चात् कृञनुप्रयुज्यते लिटि परतः। कृञिति प्रत्याहारेण कृभ्वस्तयो गृह्यन्ते, तत्सामर्थ्यादस्तेर्भूभावो न भवति। पाचयाञ्चकार। पाचयाम्बभूव। पाचयामास॥

## विदाङ्कुर्वन्त्वित्यन्यतरस्याम् ॥ ४१ ॥

विदाङ्कुर्वन्त्वित्येतदन्यतरस्यां निपात्यते। किं पुनरिह निपात्यते ? विदेर्लोट्याम्प्रत्ययो गुणाभावो लोटो लुक् कृञश्च लोट्परस्यानुप्रयोगः। अत्र भवन्तो विदाङ्कुर्वन्तु, विदन्तु। (३)इतिकरणः प्रदर्शनार्थः—न केवलं प्रथमपुरुषबहुवचनम्, किं तर्हि, सर्वाण्येव लोड्वच-

---

ऊर्णोतेश्च—ऊर्णुञ् धातु से आम्प्रत्यय का प्रतिषेध समझना चाहिए।

दयाया—दय, अय तथा आस धातुओं से आम्प्रत्यय होता है लिट् के परे रहते।

उषविद—उष, विद तथा जागृ धातुओं से विकल्प से आम्प्रत्यय होता है लिट् के परे रहते।

भीह्री—'भी', 'ह्री', 'भृ' तथा 'हु' धातुओं से विकल्प से आम्प्रत्यय होता है लिट् के परे रहते और इसमें श्लु के समान कार्य होते हैं।

कृञ्चा—लिट् के परे रहते आम्प्रत्यय के पश्चात् 'कृञ्' का अनुप्रयोग होता है।

विदाङ्कुर्वन्त्विति—'विद्' धातु से लोट् के परे रहते आम्प्रत्यय, गुणाभाव, लोट् का लुक्, लोट्परक कृञ् का अनुप्रयोग—इतने निपातित होते हैं।

---

(१) इडुपग्रहादिति—इडुपग्रह इण्निषेधः, विभाषाऽगुण इति पञ्चमी, फलस्य चात्र हेतुत्वं यथाध्ययनेन वसतीति। एकाच इति वर्तमाने श्र्युकः इति य इट्प्रतिषेधः ततोऽपि हेतोर्णुवद्भावो वाच्य इत्यर्थः। न्यासे इडुपग्रह इति प्रथमान्तपाठोऽपि। तत्रेडुपग्रहमुद्दिश्योर्णोर्णुवद्भावो वाच्य इत्यर्थः।

(२) द्वित्वेत्वेति पदमंजरीसम्मतः पाठः।

(३) इतिकरणमुपलक्षणार्थम् इति न्यासे पाठः।

नान्यनुप्रयुज्यन्ते—विदाङ्करोतु, विदाङ्कुरुतात्, विदाङ्कुरुताम्, विदाङ्कुरु, विदाङ्कुरुतमित्यादि ॥

## अभ्युत्सादयांप्रजनयांचिकयांरमयामकः पावयांक्रिया-द्विदामक्रन्निति च्छन्दसि ॥ ४२ ॥

अभ्युत्सादयामित्येवमादयश्छन्दसि विषयेऽन्यतरस्यां निपात्यन्ते। सदिजनिरमीणां ण्यन्तानां लुङ्याम्प्रत्ययो निपात्यते। चिनोतेरपि तत्रैवाम्प्रत्ययो (१)द्विर्वचनं कुत्वं च। अकरिति चतुर्भिरपि प्रत्येकमनुप्रयोगः सम्बध्यते। पावयाङ्क्रियादिति पवतेः पुनातेर्वा ण्यन्तस्य लिङ्याम् निपात्यते, क्रियादिति चास्यानुप्रयोगः। विदामक्रन्निति विदेर्लुङ्याम् निपात्यते, गुणाभावश्च, अक्रन्निति चास्यानुप्रयोगः। अभ्युत्सादयामकः। अभ्युदसीषददिति भाषायाम्। प्रजनयामकः। प्राजीजनदिति भाषायाम्। चिकयामकः। अचैषीदिति भाषायाम्। रमयामकः। अरीरमदिति भाषायाम्। पावयाङ्क्रियात। पाव्यादिति भाषायाम्। विदामक्रन्। अवेदिषुरिति भाषायाम्। ( इति करणः(२) प्रयोगप्रदर्शनार्थः ) ॥

## च्लि लुङि ॥ ४३ ॥

धातोश्च्लिः प्रत्ययो भवति लुङि परतः। इकार उच्चारणार्थः, चकारः स्वरार्थः। अस्य सिजादीनादेशान् वक्ष्यति, तत्रैवोदाहरिष्यामः ॥

## च्लेः सिच् ॥ ४४ ॥

च्लेः सिजादेशो भवति। इकार उच्चारणार्थः, चकारः स्वरार्थः। अकार्षीत्। अहार्षीत्। आगमानुदात्तत्वं हि प्रत्ययस्वरमिव चित्स्वरमपि बाधेतेति स्थानिन्यादेशे च द्विश्चकारोऽनुबध्यते। ॐस्पृशमृशकृषतृपदृपां सिज्वा वक्तव्यःॐ। अस्प्राक्षीत्, अस्पार्क्षीत्, अस्पृक्षत्। अम्राक्षीत्, अमार्क्षीत्, अमृक्षत्। अक्राक्षीत्, अकार्क्षीत्, अकृक्षत्। अत्राप्सीत्, अतार्प्सीत्, अतृपत्। अद्राप्सीत्, अदार्प्सीत्, अदृपत् ॥

## शल इगुपधादनिटः क्सः ॥ ४५ ॥

शलन्तो यो धातुरिगुपधस्तस्मात्परस्य च्लेरनिटः क्स आदेशो भवति। दुह—अधुक्षत्। लिह—अलिक्षत्। शल इति किम्? अभैत्सीत्, अच्छैत्सीत्। इगुपधादिति किम्? अधाक्षीत्। अनिट इति किम्? अकोषीत, अमोषीत् ॥

## श्लिष आलिङ्गने ॥ ४६ ॥

श्लिषेर्धातोरालिङ्गनक्रियावचनात्परस्य च्लेः क्स आदेशो भवति। आलिङ्गनमुपगूहनं

---

अभ्युत्सादयाम्—वेद में 'अभ्युत्सादयामकः', 'प्रजनयामकः', 'चिकयामकः', 'रमयामकः', 'पावयांक्रियात' तथा 'विदामक्रन्' शब्दों का निपातन किया जाता है।

च्लि—लुङ् के परे रहते धातु से च्लि प्रत्यय होता है।

च्लेः—च्लि को सिच् आदेश हो जाता है।

स्पृशकृश—'स्पृश', 'मृश', 'कृष', 'तृप' तथा 'दृप' धातुओं से विहित च्लि को विकल्प से सिच् आदेश होता है।

शलः—इगुपध शलन्त धातु से विहित अनिट् च्लि को क्स आदेश हो जाता है।

श्लिषः—आलिङ्गनार्थक 'श्लिष' धातु से विहित च्लि के स्थान में क्स आदेश हो जाता है।

---

( १ ) द्विर्वचनं चेत्येव पदमञ्जर्याम्। ततोऽत्र कुत्वं चेति अपपाठः।

( २ ) कोष्ठान्तर्गतः पाठो मुद्रितपुस्तकेष्वनुपलभ्यमानोऽपि न्याससंवादात् परिवर्धितः।

परिष्वङ्गः। अत्र नियमार्थमेतत्। आश्लिक्षत् कन्यां देवदत्तः। आलिङ्गन इति किम्? समाश्लिषज्जतु काष्ठम्॥

## न दृशः॥ ४७॥

पूर्वेण क्सः प्राप्तः प्रतिषिध्यते। दृशेर्धातोः परस्य च्लेः क्सादेशो न भवति। अस्मिन् प्रतिषिद्धे "इरितो वा" इत्यङ्सिचौ भवतः—अदर्शत्, अद्राक्षीत्॥

## णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्॥ ४८॥

सिजपवादश्चङ् विधीयते। ण्यन्तेभ्यो धातुभ्यः श्रि, द्रु, स्रु इत्येतेभ्यश्च परस्य च्लेश्चङादेशो भवति कर्तृवाचिनि लुङि परतः। ङकारो गुणवृद्धिप्रतिषेधार्थः, चकारश्चङीति विशेषणार्थः। अचीकरत्। अजीहरत्। अशिश्रियत्। अदुद्रुवत्। असुस्रुवत्। कर्त्तरीति किम्? अकारयिषातां कटौ देवदत्तेन। ॐकमेरुपसंख्यानम्ॐ। "आयादय आर्द्धधातुके वा" इति यदा णिङ् नास्ति तदैतदुपसंख्यानम्—अचकमत। णिङ्पक्षे सन्वद्भावः—अचीकमत।

(१)नाकमिष्टसुखं यान्ति सुयुक्तैर्वडवारथैः।
अथ पत्काषिणो यान्ति येऽचीकमतभाषिणः॥

## विभाषा धेट्श्व्योः॥ ४९॥

'धेट् पाने', 'टुओश्वि गतिवृद्ध्योः' इत्येताभ्यामुत्तरस्य च्लेर्विभाषा चङादेशो भवति। धेटस्तावत्-अदधत्। सिच्पक्षे—"विभाषा घ्राधेट्" इति लुक्—अधात्, अधासीत्। श्वयतेः खल्वपि-अशिश्वियत्। (२) अङोऽप्यत्र विकल्पः—अश्वत्, अश्वयीत्। कर्तरीत्येव—अधिषातां गावौ वत्सेन॥

## गुपेश्छन्दसि॥ ५०॥

गुपेः परस्य च्लेश्छन्दसि विषये विभाषा चङादेशो भवति। यत्रायप्रत्ययो नास्ति तत्रायं विधिः। इमान्नो मित्रावरुणौ गृहानजूगुपतम्, अगौप्तम्, अगोपिष्टम्, अगोपायिष्टमिति वा। भाषायां तु चङन्तं शिष्टं रूपत्रयं भवति॥

## नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः॥ ५१॥

'ऊन परिहाणे', 'ध्वन शब्दे', 'इल प्रेरणे', 'अर्द गतौ याचने च' इत्येतेभ्यो धातुभ्यो ण्यन्तेभ्यः पूर्वेण च्लेश्चङि प्राप्ते छन्दसि विषये न भवति। काममूनयीः (३)। औननः इति भाषायाम्। मा त्वाग्निर्ध्वनयीत्। अदिध्वनदिति भाषायाम्। काममैलयीः। ऐलिलदिति भाषायाम्। मैनमर्दयीत्। आर्दिददिति भाषायाम्॥

---

**न दृशः**—'दृश' धातु से विहित च्लि को क्स आदेश नहीं होता है।

**णिश्रि**—ण्यन्त, 'श्रि', 'द्रु', 'स्रु' धातुओं से विहित च्लि के स्थान से चङ् आदेश हो जाता है।

**कमेरुप**—'कम्' धातु से विहित च्लि को भी चङ् आदेश का प्रतिपादन करना चाहिए।

**विभाषा**—'धेट्' तथा 'श्वि' धातुओं के च्लि को विकल्प से चङ् आदेश होता है।

**गुपेः**—'गुप्'-धातुविहित च्लि के स्थान में छन्दोविषय में चङ् आदेश होता है विकल्प से।

**नोनयति**—'ऊन', 'ध्वन', 'इल' तथा 'अर्द' धातुओं से ण्यन्तावस्था में 'णिश्रि…' आदि सूत्र से प्राप्त चङ् आदेश नहीं होता है।

---

(१) न्यासपदमञ्जर्योरयं श्लोको न व्याख्यातः, तस्मात् पश्चात् मूले प्रक्षिप्त इति प्रतिभाति।

(२) अङप्यत्र विकल्प्यते इति न्यासे।

(३) उदाहरणे औनयीदिति प्रत्युदाहरणे औननदिति न्यासधृतपाठः। मुद्रितमूलपुस्तके औननदिति तिबन्तः पाठः उदाहरणविरुद्धः।

## अस्यतिवक्तिख्यातिभ्योऽङ् ॥ ५२ ॥

'असु क्षेपणे', 'वच परिभाषणे' ब्रूञादेशो वा, 'ख्या प्रकथने' चक्षिङादेशो वा, इत्येभ्यः परस्य च्लेरङादेशो भवति कर्तृवाचिनि लुङि परतः। अस्यतेः पुषादिपाठादेवाङि सिद्धे पुनर्ग्रहणमात्मनेपदार्थम्—पर्यास्थत, पर्यास्थेताम्, पर्यास्थन्त। वक्ति-अवोचत्, अवोचताम्, अवोचन्। ख्याति-आख्यत्, आख्यताम्, आख्यन्। कर्त्तरीति किम्? पर्यासिषातां गावौ वत्सेन ॥

## लिपिसिचिह्वश्च ॥ ५३ ॥

'लिप उपदेहे', 'षिच क्षरणे', 'ह्वेञ् स्पर्धायाम्' इत्येतेभ्यश्च परस्य च्लेरङादेशो भवति। अलिपत्। असिचत्। पृथग्योग उत्तरार्थः ॥

## आत्मनेपदेष्वन्यतरस्याम् ॥ ५४ ॥

पूर्वेण प्राप्ते विभाषा आरभ्यते। लिपि सिचि ह्व आत्मनेपदेषु परतश्च्लेरङादेशो भवति अन्यतरस्याम्। "स्वरितञित" इत्यात्मनेपदम्। आलिपत, अलिप्त। असिचत, असिक्त। अह्वत, अह्वास्त ॥

## पुषादिद्युताद्यॢदितः परस्मैपदेषु ॥ ५५ ॥

पुषादिभ्यो द्युतादिभ्यः लृदिद्भ्यश्च धातुभ्यः परस्य च्लेः परस्मैपदेषु परतोऽङादेशो-भवति। पुषादिर्दिवाद्यन्तर्गणो गृह्यते, न भ्वादिक्र्याद्यन्तर्गणः। पुष—अपुषत्। द्युतादि-अद्युतत्, अश्वितत्। लृदिद्भ्यः—गम्लृ-अगमत्, शक्लृ-अशकत्। परस्मैपदेष्विति किम्? व्यद्योतिष्ट, अलोटिष्ट ॥

## सर्त्तिशास्त्यर्त्तिभ्यश्च ॥ ५६ ॥

'सृ गतौ', 'शासु अनुशिष्टौ', 'ऋ गतौ' इत्येतेभ्यः परस्य च्लेरङादेशो भवति। सर्त्ति-असरत्। शास्ति-अशिषत्। अर्त्ति-आरत्। पृथग्योगकरणमात्मनेपदार्थम्—समरन्त। चकारः परस्मैपदेष्वित्यनुकर्षणार्थः, तच्चोत्तरत्रोपयोगं यास्यति ॥

## इरितो वा ॥ ५७ ॥

इरितो धातोः परस्य च्लेरङादेशो वा भवति। भिदिर्-अभिदत्, अभैत्सीत्। छिदिर्—आच्छिदत् ' अच्छैत्सीत्। परस्मैपदेष्वित्येव—अभित्त (१)अच्छित्त ॥

## जॄस्तन्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ॥ ५८ ॥

वेति वर्त्तते। 'जॄष् वयोहानौ', 'स्तम्भुः' सौत्रो धातुः, 'म्रुचु म्लुचु गत्यर्थे', 'ग्रुचु ग्लुचु

---

**अस्यति**—'असु', 'वच' तथा 'ख्या' धातुओं से पर च्लि के स्थान में अङ् आदेश हो जाता है।

**लिपि**—'लिप', 'सिच' एवम् 'ह्वेञ्' धातुओं से विहित च्लि को भी अङ् आदेश होता है।

**आत्मने**—आत्मनेपद के परे 'लिप', 'सिच' एवम् 'ह्वेञ्' धातुओं के च्लि को विकल्प से अङ् आदेश हो जाता है।

**पुषादि**—'पुष' आदि, 'द्युत' आदि तथा लृदित् धातुओं से विहित च्लि को अङ् आदेश होता है परस्मैपद में।

**सर्त्ति**—'सृ', 'शास्' तथा 'ऋ' धातुओं से विहित च्लि को भी अङ् आदेश हो जाता है।

**इरितो**—इरित धातुओं से विहित च्लि के स्थान में अङ् आदेश होता है विकल्प से।

**जॄस्तम्भु**—'जॄष्', 'स्तम्भु', 'म्रुचु', 'म्लुचु', 'ग्रुचु', 'ग्लुचु', 'ग्लुञ्चु' तथा 'श्वि' धातुओं से विहित च्लि को विकल्प से अङ् आदेश होता है।

---

(१) अच्छित्तेत्यस्य स्थाने अरुद्धेति न्यासपाठः।

स्तेयकरणे', 'ग्लुन्चु षसूज गतौ', 'टुओश्वि गतिवृद्ध्योः'—इत्येतेभ्यो धातुभ्यः परस्य च्लेर्वाऽङादेशो भवति। अजरत्, अजारीत्। अस्तभत्, अस्तम्भीत्। अम्रुचत्, अम्रोचीत्। अम्लुचत्, अम्लोचीत्। अग्रुचत्, अग्रोचीत्। अग्लुचत्, अग्लोचीत्। (अग्लुचत्) अग्लुञ्चीत्। अश्वत्, अश्वयीत्। ग्लुचुग्लुञ्चोरेक(१) तरोपादानेऽपि रूपत्रयं सिद्धयति, अर्थभेदात्तु द्वयोरुपादानं कृतम्। केचित्तु वर्णयन्ति—द्वयोरुपादानसामर्थ्यात् ग्लुञ्चेरनुनासिकलोपो न भवति—अग्लुञ्चदिति॥

## कृमृदृरुहिभ्यश्छन्दसि ॥ ५९ ॥

कृ, मृ, दृ, रुहि इत्येतेभ्यः परस्य च्लेश्छन्दसि विषयेऽङादेशो भवति। शकलाङ्गुष्ठकोऽकरत्। अयोऽमरन्। अदरदर्थान्। पर्वतमारुहत्। अन्तरिक्षाद्दिवमारुहम्। छन्दसीति किम्? अकार्षीत्, अमृत, अदारीत्, अरुक्षत्॥

## चिण् ते पदः ॥ ६० ॥

'पद गतौ' अस्माद्धातोः परस्य च्लेश्चिणादेशो भवति तशब्दे परतः। सामर्थ्यादात्मनेपदैकवचनं गृह्यते। उदपादि सस्यम्। समपादि भैक्षम्। त इति किम्? उदपत्साताम्, उदपत्सत॥

## दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ॥ ६१ ॥

चिण् त इति वर्त्तते। 'दीपी दीप्तौ', 'जनी प्रादुर्भावे', 'बुध अवगमने', 'पूरी आप्यायने', 'ताय सन्तानपालनयोः', 'ओप्यायी वृद्धौ' इत्येतेभ्यः परस्य च्लेस्तशब्दे परतोऽन्यतरस्यां चिणादेशो भवति। अदीपि, अदीपिष्ट। अजनि, अजनिष्ट। अबोधि, अबुद्ध। अपूरि, अपूरिष्ट। अतायि, अतायिष्ट। अप्यायि, अप्यायिष्ट॥

## अचः कर्मकर्त्तरि ॥ ६२ ॥

अजन्ताद्धातोः परस्य च्लेः कर्मकर्त्तरि तशब्दे परतश्चिणादेशो भवति। प्राप्तविभाषेयम्। अकारि कटः स्वयमेव, अकृत कटः स्वयमेव। अलावि केदारः स्वयमेव, अलाविष्ट केदारः स्वयमेव। अच इति किम्? अभेदि काष्ठं स्वयमेव। कर्मकर्त्तरीति किम्? अकारि कटो देवदत्तेन॥

## दुहश्च ॥ ६३ ॥

'दुह प्रपूरणे' अस्मात्परस्य च्लेश्चिणादेशो भवत्यन्यतरस्याम्। अदोहि गौः स्वयमेव, अदुग्ध गौः स्वयमेव। कर्मकर्त्तरीत्येव—अदोहि गौर्गोपालकेन॥

---

**कृमृ**—'कृ', 'मृ', 'दृ', तथा 'रुह' धातुओं से विहित च्लि के स्थान में अङ् आदेश होता है वेद में।

**चिण् ते**—'पद' धातु के च्लि को चिण् आदेश होता है 'त' के परे रहते।

**दीपजन**—'दीप', जन', 'बुध' 'पूर्', 'ताय्' तथा 'प्याय्' धातुओं से विहित च्लि को चिण् आदेश होता है तशब्द के परे रहते।

**अचः**—अजन्तधातु से परवर्त्ती च्लि को तशब्द के परे रहते कर्मकर्त्ता में विकल्प से चिण् आदेश होता है।

**दुहश्च**—'दुह्' धातु से विहित च्लि को विकल्प से कर्मकर्त्ता में तशब्द के परे रहते चिण् आदेश होता है।

---

(१) अन्यतरोपादानेऽपीति पदमंजरीसम्मतः पाठः।

## न रुधः ॥ ६४ ॥

'रुधिर् आवरणे' अस्मात्परस्य च्लेः कर्मकर्त्तरि चिणादेशो न भवति। अन्ववारुद्ध गौः स्वयमेव। कर्मकर्त्तरीत्येव—अन्ववारोधि गौर्गोपालकेन॥

## तपोऽनुतापे च ॥ ६५ ॥

नेति वर्त्तते। 'तप संतापे' अस्मात्परस्य च्लेश्चिणादेशो न भवति कर्मकर्त्तर्यनुतापे च। अनुतापः पश्चात्तापः, तस्य ग्रहणमकर्मकर्त्रर्थम्, तत्र हि भावकर्मणोरपि प्रतिषेधो भवति—अतप्त तपस्तापसः, अन्ववातप्त (१)पापेन कर्मणा॥

## चिण् भावकर्मणोः ॥ ६६ ॥

धातोः परस्य च्लेश्चिणादेशो भवति भावे (२)कर्मणि तशब्दे परतः। भावे तावत्—अशायि भवता। कर्मणि खल्वपि-अकारि कटो देवदत्तेन, अहारि भारो यज्ञदत्तेन। चिण्ग्रहणं विस्पष्टार्थम्॥

## सार्वधातुके यक् ॥ ६७ ॥

भावकर्मवाचिनि सार्वधातुके परतो धातोर्यक् प्रत्ययो भवति। आस्यते भवता। शय्यते भवता। कर्मणि—क्रियते कटः, गम्यते ग्रामः। ककारो गुणवृद्धिप्रतिषेधार्थः। यग्विधाने कर्मकर्त्तर्युपसंख्यानम्, विप्रतिषेधाद्धि यकः शपो बलीयस्त्वम्। क्रियते कटः स्वयमेव। पच्यते ओदनः स्वयमेव॥

## कर्त्तरि शप् ॥ ६८ ॥

कर्तृवाचिनि सार्वधातुके परतो धातोः शप्प्रत्ययो भवति। पकारः स्वरार्थः, शकारः सार्वधातुकार्थः(३)। भवति। पचति॥

## दिवादिभ्यः श्यन् ॥ ६९ ॥

'दिव' इत्येवमादिभ्यो धातुभ्यः श्यन्प्रत्ययो भवति। शपोऽपवादः। नकारः स्वरार्थः, शकारः सार्वधातुकार्थः। दीव्यति। सीव्यति॥

## वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ॥ ७० ॥

उभयत्र विभाषेयम्। 'टुभ्राशृ टुभ्लाशृ दीप्तौ', 'भ्रमु अनवस्थाने', 'भ्रमु चलने'

---

**न रुधः**—'रुध्' धातु के च्लि को कर्मकर्त्ता में चिण् नहीं होता है।

**तपोऽनु**—'तप्' धातु से विहित च्लि को कर्मकर्त्ता तथा अनुताप अर्थ में चिण् आदेश नहीं होता है।

**चिण्**—धातु से विहित च्लि को भाव तथा कर्म में तशब्द के परे रहते चिण् आदेश होता है।

**सार्वधातुके**—भाव तथा कर्म में विहित सार्वधातुक प्रत्ययों के परे रहते धातुओं से यक् प्रत्यय होता है।

**कर्त्तरि**—कर्तृवाचक सार्वधातुक प्रत्यय के परे रहते धातु से शप् प्रत्यय होता है।

**दिवादिभ्यः**—'दिव्' आदि धातुओं से श्यन् प्रत्यय होता है।

**वा भ्राश**—'भ्राश', 'भ्लाश', 'भ्रम्', 'क्रम्', 'त्रस्', 'त्रुट्' तथा 'लष्' धातुओं से विकल्प से श्यन् प्रत्यय होता है।

---

(१) अन्ववातप्तेति—पूर्वं यत्पापं कर्म कृतं तेन पश्चात्तप्तोऽभ्याहत इत्यर्थः।

(२) भावकर्मणोरर्थयोरिति न्यासधृतपाठः।

(३) सार्वधातुकसंज्ञार्थः इति न्यासे।

द्वयोरपि ग्रहणम्, 'क्रमु पादविक्षेपे', 'क्लमु ग्लानौ', 'त्रसी उद्वेगे', 'त्रुटी छेदने', 'लष कान्तौ' इत्येतेभ्यो वा श्यन् प्रत्ययो भवति। भ्राशते, भ्राश्यते। भ्लाशते, भ्लाश्यते। भ्रमति, भ्राम्यति। क्रामति, क्राम्यति। क्लामति, क्लाम्यति। त्रसति, त्रस्यति। त्रुटति, त्रुट्यति। लषति, लष्यति॥

## यसोऽनुपसर्गात् ॥ ७१ ॥

'यसु प्रयत्ने' दैवादिकः, तस्मान्नित्ये श्यनि प्राप्तेऽनुपसर्गाद्विकल्प उच्यते। यसोऽनुपसर्गाद्वा श्यन्प्रत्ययो भवति। यस्यति, यसति। अनुपसर्गादिति किम्? आयस्यति, प्रयस्यति॥

## संयसश्च ॥ ७२ ॥

सोपसर्गार्थ आरम्भः। सम्पूर्वाच्च यसेर्वा श्यन्प्रत्ययो भवति। संयस्यति। संयसति॥

## स्वादिभ्यः श्नुः ॥ ७३ ॥

'षुञ् अभिषवे' इत्येवमादिभ्यो धातुभ्यः श्नुप्रत्ययो भवति। शपोऽपवादः। सुनोति। सिनोति॥

## श्रुवः शृ च ॥ ७४ ॥

श्रुवः श्नुप्रत्ययो भवति, तत्सन्नियोगेन श्रुवः शृ इत्ययमादेशो भवति। शृणोति। शृणुतः। शृण्वन्ति॥

## अक्षोऽन्यतरस्याम् ॥ ७५ ॥

'अक्षू व्याप्तौ' भौवादिकः, तस्मादन्यतरस्यां श्नुप्रत्ययो भवति। अक्ष्णोति। अक्षति॥

## तनूकरणे तक्षः ॥ ७६ ॥

'तक्षू त्वक्षू तनूकरणे', तस्मात्तनूकरणे वर्तमानादन्यतरस्यां श्नुप्रत्ययो भवति। अनेकार्थत्वाद्धातूनां विशेषेणोपादानम्। तक्षति काष्ठम्। तक्ष्णोति काष्ठम्। तनूकरण इति किम्? सन्तक्षति(१)वाग्भिः॥

## तुदादिभ्यः शः ॥ ७७ ॥

'तुद व्यथने' इत्येवमादिभ्यो धातुभ्यः शप्रत्ययो भवति। शपोऽपवादः। शकारः सार्वधातुकसंज्ञार्थः। तुदति। नुदति॥

---

**यसोऽनुप**—अनुपसर्गक 'यस्' धातु से श्यन्प्रत्यय विकल्प से होता है।

**संयसश्च**—सम्पूर्वक 'यस्' धातु से विकल्प से श्यन् प्रत्यय होता है।

**स्वादिभ्यः**—'सु' आदि धातुओं से श्नु प्रत्यय होता है।

**श्रुवः**—'श्रु' धातु से श्नु प्रत्यय तथा 'श्रु' को शृ आदेश हो जाता है।

**अक्षोऽन्य**—'अक्ष्' धातु से विकल्प से श्नुप्रत्यय होता है।

**तनूकरणे**—तनूकरण ( To chop ) अर्थ से वर्त्तमान 'तक्ष्' धातु से विकल्प से श्नुप्रत्यय होता है।

**तुदादिभ्यः**—'तुद' आदि धातुओं से श प्रत्यय होता है।

---

( १ ) सन्तक्षतीति—निर्भर्त्सयतीत्यर्थः।

## रुधादिभ्यः श्नम् ॥ ७८ ॥

'रुधिर् आवरणे' इत्येवमादिभ्यो धातुभ्यः श्नम् प्रत्ययो भवति। शपोऽपवादः। मकारो (१)देशविध्यर्थः। शकारः "श्नान्नलोपः" इति विशेषणार्थः। रुणद्धि। भिनत्ति॥

## तनादिकृञ्भ्य उः ॥ ७९ ॥

'तनु विस्तारे' इत्येवमादिभ्यो धातुभ्यः कृञश्च उप्रत्ययो भवति। शपोऽपवादः। तनोति। सनोति। क्षणोति। कृञः खल्वपि-करोति। तनादिपाठादेव उप्रत्यये सिद्धे करोतेरुपादानं नियमार्थम्—अन्यत् तनादिकार्यं मा भूदिति "तनादिभ्यस्तथासोः" इति विभाषा सिचो लुग् न भवति—अकृत, अकृथाः॥

## धिन्विकृण्व्योर च ॥ ८० ॥

'हिवि धिवि जिवि प्रीणनार्थाः', 'कृवि हिंसाकरणयोः' इत्येतयोर्द्धात्वोरुप्रत्ययो भवत्यकारश्चान्तादेशः। धिनोति। कृणोति। अतो लोपस्य स्थानिवद्भावाद् गुणो न भवति॥

## क्र्यादिभ्यः श्ना ॥ ८१ ॥

'डुक्रीञ् द्रव्यविनिमये' इत्येवमादिभ्यो धातुभ्यः श्नाप्रत्ययो भवति। शपोऽपवादः। शकारः सार्वधातुकसंज्ञार्थः। क्रीणाति। प्रीणाति॥

## स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च ॥ ८२ ॥

आद्याश्चत्वारो धातवः सौत्राः, 'स्कुञ् आप्रवणे' इत्येतेभ्यः श्ना प्रत्ययो भवति श्नुश्च। स्तभ्नाति, स्तभ्नोति। स्तुभ्नाति, स्तुभ्नोति। स्कभ्नाति, स्कभ्नोति। स्कुभ्नाति, स्कुभ्नोति। स्कुनाति, स्कुनोति। उदित्त्वप्रतिज्ञानात् सौत्राणामपि धातूनां सर्वार्थत्वं विज्ञायते, नैतद्विकरणविषयत्वमेव॥

## हलः श्नः शानज्झौ ॥ ८३ ॥

हल उत्तरस्य श्नाप्रत्ययस्य शानजादेशो भवति हौ परतः। मुषाण। पुषाण। हल इति किम्? क्रीणीहि। हाविति किम्? मुष्णाति। श्न इति स्थानिनिर्देश आदेशसंप्रत्ययार्थः। इतरथा हि प्रत्ययान्तरमेव सर्वविषयं विज्ञायेत॥

## छन्दसि शायजपि ॥ ८४ ॥

छन्दसि विषये श्नः शायजादेशो भवति, शानजपि। (२)गृभाय जिह्वया मधु। शानचः खल्वपि-बधान पशुम्॥

---

**रुधादिभ्यः**—'रुध्' आदि धातुओं में श्नम्प्रत्यय होता है।

**तनादि**—'तन' आदि धातुओं से तथा 'कृञ्' धातु से उप्रत्यय होता है।

**धिन्वि**—'धिवि' तथा 'कृवि' धातुओं से उप्रत्यय तथा अन्त में अकारादेश हो जाता है।

**क्र्यादिभ्यः**—'क्री' आदि धातुओं से श्ना प्रत्यय होता है।

**स्तम्भु**—'स्तम्भु', 'स्तुम्भु', 'स्कम्भु', 'स्कुम्भु' तथा 'स्कु' धातुओं से श्नाप्रत्यय भी होता है और श्नुप्रत्यय भी।

**हलः श्नः**—हल् से उत्तर वर्तमान श्ना को हि के परे रहते शानच् आदेश हो जाता है।

**छन्दसि**—वेद में श्ना को शायच् तथा शानच् दोनों ही आदेश होते हैं।

---

(१) मकार इति—विशिष्टे देशे विधानार्थं इत्यर्थः। स पुनर्देशोऽन्त्यात्परः।

(२) गृहायेति पाठान्तरम्।

## व्यत्ययो बहुलम् ॥ ८५ ॥

यथायथं(१)विकरणाः शबादयो विहिताः, तेषां छन्दसि विषये बहुलं व्यत्ययो भवति। व्यतिगमनं व्यत्ययो व्यतिहारः(२)—विषयान्तरे विधानम्, क्वचिद्द्विविकरणता, क्वचित्त्रिविकरणता च। आण्डा शुष्मस्य भेदति। भिनत्तीति प्राप्ते। स च न मरति। न म्रियत इति प्राप्ते। द्विविकरणता—इन्द्रो वस्तेन नेषतु। नयत्विति प्राप्ते। त्रिविकरणता—इन्द्रेण युजा तरुषेम वृत्रम्(३)। (४)तीर्यास्मेति प्राप्ते। बहुलग्रहणं (५)सर्वविधिव्यभिचारार्थम्॥

सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेन॥

## लिङ्याशिष्यङ्॥ ८६ ॥

आशिषि विषये यो लिङ् तस्मिन् परतश्छन्दसि विषयेऽङ् प्रत्ययो भवति। शपोऽपवादः। "छन्दस्युभयथा" इति लिङः सार्वधातुकसंज्ञाप्यस्ति। स्थागागमिवचिविदिशकिरुहयः प्रयोजनम्। स्था—उपस्थेयं वृषभं तुग्रियाणाम्। गा—सत्यमुपगेयम्। गमि—गमेम जानतो गृहान्। वचि—मन्त्रं वोचेमाग्नये। विदि—विदेयमेनां मनसि प्रविष्टाम्। शकि—व्रतं चरिष्यामि तच्छकेयम्। रुहि—स्वर्गं लोकमारुहेयम्। ॐदृशेरग्वक्तव्यःॐ। पितरं च दृशेयं मातरं च॥

## कर्मवत्कर्मणा तुल्यक्रियः॥ ८७ ॥

कर्मणि क्रिया कर्म, कर्मस्थया क्रियया तुल्यक्रियः कर्त्ता कर्मवद्भवति। यस्मिन् कर्मणि कर्तृभूतेऽपि तद्वत्क्रिया लक्ष्यते यथा कर्मणि, स कर्ता कर्मवद् भवति—कर्माश्रयाणि कार्याणि प्रतिपद्यते। "कर्तरि शप्" इति कर्तृग्रहणमिहानुवृत्तं प्रथमया विपरिणम्यते। यगात्मनेपदचिण्चिण्वद्भावाः प्रयोजनम्। भिद्यते काष्ठं स्वयमेव। अभेदि काष्ठं स्वयमेव। कारिष्यते कटः स्वयमेव। वत्करणं स्वाश्रयमपि यथा स्यात्—भिद्यते कुसुलेनेति, अकर्मकाणां भावे लः सिद्धो भवति। "लिङ्याशिष्यङ्" इति द्विलकारको निर्देशः, तत्र लानुवृत्तेर्लान्तरस्य कर्त्ता कर्मवद्भवतीति कुसूलाद् द्वितीया न भवति। कर्मणेति किम्? करणाधिकरणाभ्यां तुल्यक्रियस्य मा भूत्—साध्वसिश्छिनत्ति, साधु स्थाली पचति। धात्वधिकारात्समाने धातौ कर्मवद्भावः, इह न भवति—पचत्योदनं देवदत्तः, राध्यत्योदनः स्वयमेवेति।

---

**व्यत्ययो**—वेद में उक्त प्रत्ययों तथा उनकी प्रकृतियों का व्यत्यय भी हो जाता है।

**लिङ्याशिष्यङ्**—वेद में आशीरर्थक लिङ् के परे रहते धातुओं से अङ्प्रत्यय होता है।

**दृशेरग्**—परन्तु 'दृश्' धातु से अक् प्रत्यय होता है—ऐसा समझना चाहिए।

**कर्मवत्**—कर्मस्था क्रिया से तुल्य क्रियावाला कर्त्ता कर्मवत् हो जाता है।

---

(१) यथायथम्—यस्मिन् यस्मिन् विषये इत्यर्थः।

(२) व्यतिकरः इति न्यासे।

(३) दृषदमिति न्यासे।

(४) तरेमेति पदमंजरीसम्मतः पाठः।

(५) सर्वेति—सर्वस्य प्रकृतस्याप्रकृतस्य विधेर्व्यभिचारो व्यत्ययलक्षणो यथा स्यादित्येवमर्थं बहुलग्रहणम्। उपग्रहः—लादेशव्यङ्ग्यक्रियाविशेषो मुख्य उपग्रहः। इह तु तद्व्यक्तिनिमित्तात् परस्मैपदात्मनेपदयोरुपग्रहशब्दो वर्तते। नरःपुरुषः प्रथमादिः। कालः—कालशब्दोऽत्र कालविषयत्वाल्लुङादिप्रत्ययेषु वर्तते। कर्तृ—कर्तृशब्दः कारकपरः। विभक्तीनां व्यत्यय इत्यर्थः। यङ्—यङिति सार्वधातुके यक् इति यकारादारभ्य लिङ्याशिष्यङ् इति ङकारान्तः प्रत्याहारः। शास्त्रकृत्-पाणिनिः।

कर्मस्थभावकानां कर्मस्थक्रियाणां च कर्ता कर्मवद्भवति, न कर्तृस्थभावकानां न वा कर्तृस्थक्रियाणाम्—

कर्मस्थः पचतेर्भावः कर्मस्था च भिदेः क्रिया ।
मासासिभावः कर्तृस्थः कर्तृस्था च गमेः क्रिया ॥

## तपस्तपःकर्मकस्यैव ॥ ८८ ॥

'तप संतापे', अस्य कर्त्ता कर्मवद्भवति, स च तपःकर्मकस्यैव, नान्यकर्मकस्य । क्रियाभेदाद्विध्यर्थमेतत् । उपवासादीनि तपांसि तापसं तपन्ति । दुःखयन्तीत्यर्थः । स तापसस्त्वगस्थिभूतः स्वर्गाय तपस्तप्यते । अर्जयतीत्यर्थः । पूर्वेणाप्राप्तः कर्मवद्भावो विधीयते—तप्यते तपस्तापसः, अतप्त तपस्तापसः । तपःकर्मकस्यैवेति किम् ? उत्तपति सुवर्णं सुवर्णकारः ॥

## न दुहस्नुनमां यक्चिणौ ॥ ८९ ॥

दुह, स्नु, नम्र इत्येतेषां कर्मकर्तरि यक्चिणौ कर्मवद्भावापदिष्टौ न भवतः । दुहेरनेन यक् प्रतिषिध्यते । चिण् तु "दुहश्च" इति पूर्वमेव विभाषितः । दुग्धे गौः स्वयमेव । अदुग्ध गौः स्वयमेव, अदोहि गौः स्वयमेव । प्रस्नुते गौः स्वयमेव, प्रास्नोष्ट गौः स्वयमेव । नमते दण्डः स्वयमेव, अनंस्त दण्डः स्वयमेव । यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानम् (१)कारयति कटं देवदत्तः । कारयते कटः स्वयमेव । अचीकरत्कटं देवदत्तः । अचीकरत कटः स्वयमेव । उत्पुच्छयते गौः स्वयमेव । उदपुपुच्छत गौः स्वयमेव । श्रन्थाति ग्रन्थं देवदत्तः । श्रथ्नीते ग्रन्थः स्वयमेव । अश्रन्थिष्ट ग्रन्थः स्वयमेव । ग्रथ्नाति श्लोकं देवदत्तः । ग्रथ्नीते श्लोकः स्वयमेव । अग्रन्थिष्ट श्लोकः स्वयमेव । ब्रवीति श्लोकं देवदत्तः । ब्रूते श्लोकः स्वयमेव । अवोचच्छ्लोकं देवदत्तः । अवोचत श्लोकः स्वयमेव । आत्मनेपदविधानेऽकर्मकाणाम्—आहन्ति माणवकं देवदत्तः, आहते माणवकः स्वयमेव । आवधिष्ट माणवकः स्वयमेव, आहतेति वा । विकुर्वते सैन्धवाः स्वयमेव । व्यकृषत सैन्धवाः स्वयमेव ॥

## कुषिरजोः प्राचां श्यन् परस्मैपदं च ॥ ९० ॥

'कुष निष्कर्षे', 'रञ्ज रागे' अनयोर्धात्वोः कर्मकर्तरि प्राचामाचार्याणां मतेन श्यन् प्रत्ययो भवति परस्मैपदं च । यगात्मनेपदयोरपवादौ । कुष्यति पादः स्वयमेव । रज्यति वस्त्रं स्वयमेव । प्राचां ग्रहणं विकल्पार्थम्—कुष्यते, रज्यते । व्यवस्थितविभाषा चेयम्, तेन लिङ्लिटोः स्यादिविषये च न भवतः—चुकुषे पादः स्वयमेव,

---

तपस्तपः—'तप' धातुका कर्त्ता यदि तपःकर्मक होता है तभी उसे कर्मवद्भाव होता है अन्यथा नहीं ।

न दुह—'दुह','स्नु' तथा 'नम्' धातुओं से कर्मवद्भावप्रयुक्त कर्मकर्त्ता में विहित यक् तथा उनके च्लि को चिण् आदेश नहीं होते हैं ।

यक्चिणोः—ण्यन्त, 'ग्रन्थि' 'श्रन्थि', 'ब्रू' तथा आत्मनेपद में अकर्मक धातुओं से भी यक्-चिण् का प्रतिषेध प्रतिपादनीय है ।

कुषिरजोः—'कुष' तथा 'रञ्ज' धातुओं से प्राचीन आचार्यों के मत में कर्मकर्त्ता में श्यन् प्रत्यय तथा परस्मैपद होता है ।

---

(१) अस्य वार्तिकस्योदाहरणानां न्यासे दर्शनात् वृत्ताविमानि नासन् । पदमंजर्यामपि एषामुदाहरणानि कचिद्वृत्तौ पठ्यन्ते कचिन्नेत्युक्तम् ।

रर‍ञ्जे वस्त्रं स्वयमेव, कोषिपीष्ट पादः स्वयमेव, रङ्क्षीष्ट वस्त्रं स्वयमेव, कोषिष्यते पादः स्वयमेव, रङ्क्ष्यते वस्त्रं स्वयमेव, अकोषि पादः स्वयमेव, अरञ्जि वस्त्रं स्वयमेव।

## धातोः ॥ ९१ ॥

धातोरित्ययमधिकारो वेदितव्यः आ तृतीयाध्यायपरिसमाप्तेः। यदित ऊर्ध्वमनुक्रमिष्यामो धातोरित्येवं तद्वेदितव्यम्। वक्ष्यति—"तव्यत्तव्यानीयरः" इति—कर्त्तव्यम्। करणीयम्। धातुग्रहणमनर्थकम्, यङ्विधौ धात्वधिकारात्। कृदुपसर्गसंज्ञार्थं तर्हि—अस्मिन् धात्वधिकारे ते यथा स्याताम्, पूर्वत्र मा भूतामिति। आर्धधातुकसंज्ञार्थं च द्वितीयं धातुग्रहणं कर्तव्यम्, धातोरित्येवंविहितस्य यथा स्यात्, इह मा भूत्—लूभ्याम्, लूभिरिति॥

## तत्रोपपदं सप्तमीस्थम् ॥ ९२ ॥

तत्रैतस्मिन् धात्वधिकारे तृतीये यत्सप्तमीनिर्दिष्टं तदुपपदसंज्ञं भवति। वक्ष्यति—"कर्मण्यण्", कुम्भकारः। स्थग्रहणं सूत्रेषु सप्तमीनिर्देशप्रतिपत्त्यर्थम्, इतरथा हि सप्तमी श्रूयते यत्र तत्रैव स्यात्—स्तम्बेरमः, कर्णेजप इति। यत्र वा सप्तमीश्रुतिरस्ति, "सप्तम्यां जनेर्डः" इति—उपसरः, मन्दुरज इति। स्थग्रहणात्तु सर्वत्र भवति। गुरुसंज्ञाकरणमन्वर्थसंज्ञाविज्ञाने सति समर्थपरिभाषाव्यापारार्थम्—पश्य कुम्भं करोति कटमिति प्रत्ययो न भवति। उपपदप्रदेशाः—"उपपदमतिङ्" इत्येवमादयः॥

## कृदतिङ् ॥ ९३ ॥

अस्मिन् धात्वधिकारे तिङ्वर्जितः प्रत्ययः कृत्संज्ञको भवति। कर्तव्यम्। करणीयम्। अतिङिति किम्? चीयात्, स्तूयात्। कृत्प्रदेशाः—"कृत्तद्धितसमासाश्च" इत्येवमादयः॥

## वाऽसरूपोऽस्त्रियाम् ॥ ९४ ॥

अस्मिन् धात्वधिकारेऽसमानरूपः प्रत्ययोऽपवादो वा बाधको भवति स्त्र्यधिकारविहितप्रत्ययं वर्जयित्वा। ण्वुल्तृचौ उत्सर्गौ, "इगुपधज्ञाप्रीकिरः कः" इत्यपवादः, तद्विषये ण्वुल्तृचावपि भवतः—विक्षेपकः, विक्षेप्ता, विक्षिपः। असरूप इति किम्? "कर्मण्यण्" इत्युत्सर्गः, "आतोऽनुपसर्गे कः" इत्यपवादः. स नित्यं बाधको भवति—गोदः, कम्बलदः। नानुबन्धकृतमसारूप्यम्। अस्त्रियामिति किम्? "स्त्रियां क्तिन्" इत्युत्सर्गः, "अ प्रत्ययात्" इत्यपवादः, स बाधक एव भवति—चिकीर्षा, जिहीर्षा॥

## कृत्याः प्राङ् ण्वुलः ॥ ९५ ॥

"ण्वुल्तृचौ" इति वक्ष्यति, प्रागेतस्माण्ण्वुल्संशब्दनाद् यानित ऊर्ध्वमनुक्रमिष्यामः कृत्यसंज्ञकास्ते वेदितव्याः। तत्रैवोदाहरिष्यामः। कृत्यप्रदेशाः—"कृत्यैरधिकार्थवचने", "कृत्यानां कर्तरि वा" इत्येवमादयः॥

---

धातोः—अब तृतीयाध्यायसमाप्तिपर्यन्त 'धातोः' का अधिकार समझना चाहिए।

तत्रोपपदम्—'धातोः' के अधिकार में सप्तमीनिर्दिष्ट की 'उपपद' संज्ञा होती है।

कृदतिङ्—'धातोः' के अधिकार में तिङ्भिन्न प्रत्ययों की 'कृत्' संज्ञा होती है।

वाऽसरूपो—इस धात्वधिकार के अन्तःपाती स्त्र्यधिकार को छोड़कर अन्य असमानरूप प्रत्यय उत्सर्ग प्रत्यय का विकल्प से बाधक होता है।

कृत्याः—यहाँ से आगे ण्वुल् के पूर्व के प्रत्ययों की कृत्यसंज्ञा होती है।

## तव्यत्तव्यानीयरः ॥ ९६ ॥

धातोरिति वर्तते। धातोस्तव्यत्, तव्य, अनीयर् इत्येते प्रत्यया भवन्ति। तकार-रेफौ स्वरार्थौ। कर्तव्यम्। कर्तव्यम्। करणीयम्॥ ॐवसेस्तव्यत् कर्तरि णिच्चॐ। वास्तव्यः। ॐकेलिमर उपसंख्यानम्ॐ। पचेलिमा माषाः। भिदेलिमानि काष्ठानि। कर्म-कर्तरि चायमिष्यते॥

## अचो यत् ॥ ९७ ॥

अजन्ताद्धातोर्यत्प्रत्ययो भवति। तकारो "यतोऽनावः" इति स्वरार्थः। गेयम्। पेयम्। चेयम्। जेयम्। अज्ग्रहणं किम्? यावता हलन्ताण्ण्यतं वक्ष्यति, अजन्तभूत-पूर्वादपि यथा स्यात्—दित्स्यम्, धित्स्यम्। ॐतकि-शसि-चति-जनीनामुपसंख्यानम्ॐ। तकि–तक्यम्। शसि–शस्यम्। चति–चत्यम्। यति–यत्यम्। जनि–जन्यम्॥ ॐहनो वा वध चॐ। वध्यम्। घात्यम्॥

## पोरदुपधात् ॥ ९८ ॥

पवर्गान्ताद्धातोरकारोपधाद्यत्प्रत्ययो भवति। ण्यतोऽपवादः। शप्–शप्यम्। लभ्–लभ्यम्। पोरिति किम्? पाक्यम्, वाक्यम्। अदुपधादिति किम्? कोप्यम्, गोप्यम्। तपरकरणं तत्कालार्थम्—आप्यम्॥

## शकिसहोश्च ॥ ९९ ॥

'शक्लृ शक्तौ', 'षह मर्षणे' अनयोर्धात्वोर्यत्प्रत्ययो भवति। शक्यम्। सह्यम्॥

## गदमदचरयमश्चानुपसर्गे ॥ १०० ॥

'गद व्यक्तायां वाचि', 'मदी हर्षे', 'चर गतिभक्षणयोः', 'यम उपरमे' इत्येतेभ्यश्चानु-पसर्गेभ्यो यत्प्रत्ययो भवति। गद्यम्। मद्यम्। चर्यम्। यम्यम्। अनुपसर्ग इति किम्? प्रगाद्यम्, प्रमाद्यम्। यमेः पूर्वेणैव सिद्धेऽनुपसर्गनियमार्थं वचनम्॥ ॐचरेराङि चागुरौॐ। आचर्यो(१) देशः। अगुराविति किम्? आचार्य उपनेता(२)॥

---

**तव्यत्तव्या**—धातु से तव्यत, तव्य तथा अनीयर् प्रत्यय होते हैं।

**वसेस्तव्यत्**—'वस' धातु से कर्त्ता में तव्यत तथा णिच् प्रत्यय होते हैं।

**केलिमर**—धातुओं से केलिमर् प्रत्यय का भी प्रतिपादन करना चाहिए।

**अचो यत्**—अजन्त धातु से यत प्रत्यय होता है।

**तकिशसि**—'तकि', 'शसि', 'चति', 'यति', तथा 'जनी' धातुओं से भी यत प्रत्यय का विधान समझना चाहिए।

**हनो वा**—'हन्' धातु से विकल्प से यत् प्रत्यय तथा हन्' को वध आदेश हो जाता है।

**पोरदुपधात्**—पवर्गान्त अकारोपध धातुओं से यत प्रत्यय होता है।

**शकि**—'शक्' तथा 'सह' धातुओं से भी यत प्रत्यय होता है।

**गदमद**—अनुपसर्गक 'गद', 'मद', 'चर' तथा 'यम' धातुओं से यत् प्रत्यय होता है।

**चरेराङि**—आङुपसर्गक 'चर' धातु से गुरुभिन्न तत्व के वाच्य होने पर यत प्रत्यय हो जाता है।

---

(१) आचर्यः—गन्तव्यः।

(२) गुरुरिति न्यासे।

## अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु ॥ १०१ ॥

अवद्य, पण्य, वर्या इत्येते शब्दा निपात्यन्ते गर्ह्यपणितव्यानिरोध इत्येतेष्वर्थेषु यथासंख्यम् । अवद्यमिति निपात्यते, गर्ह्यं चेत्तद्भवति । अवद्यं(१) पापम् । अनुद्यमन्यत्–"वदः सुपि क्यप् च" । (२)पण्यमिति निपात्यते, पणितव्यं चेत्तद्भवति । पण्यः कम्बलः । पण्या गौः । (३)पाण्यमन्यत् । वर्येति स्त्रियां निपात्यते, अनिरोधश्चेद्भवति । अनिरोधोऽप्रतिबन्धः (४) । शतेन वर्या । सहस्रेण वर्या । वृत्याऽन्या । स्त्रीलिङ्गनिर्देशः किमर्थः ? वार्या ऋत्विजः ॥

## वह्यं करणम् ॥ १०२ ॥

वहेर्धातोः करणे यत्प्रत्ययो निपात्यते । वहत्यनेनेति वह्यं शकटम् । करण इति किम् ? वाह्यमन्यत् ॥

## अर्यः स्वामिवैश्ययोः ॥ १०३ ॥

'ऋ गतौ' अस्माण्ण्यति प्राप्ते स्वामिवैश्ययोरभिधेययोर्यत्प्रत्ययो निपात्यते । अर्यः स्वामी । अर्यो वैश्यः । "यतोऽनाव" इत्याद्युदात्तत्वे प्राप्ते । ‡स्वामिन्यन्तोदात्तत्वं च वक्तव्यम्‡ । स्वामिवैश्ययोरिति किम् ? आर्यो ब्राह्मणः ॥

## उपसर्या काल्या प्रजने ॥ १०४ ॥

उपसर्यति निपात्यते काल्या चेत्प्रजने भवति । उपपूर्वात्सर्तेर्यत्प्रत्ययः । प्राप्तकाला=काल्या । प्रजनः=प्रजननम्, प्रथमगर्भग्रहणम् । गर्भग्रहणे प्राप्तकाला–उपसर्या गौः, उपसर्या वडवा । काल्या प्रजन इति किम् ? उपसार्या शरदि मथुरा ॥

## अजर्यं संगतम् ॥ १०५ ॥

अजर्यमिति निपात्यते संगतं चेद्भवति । जीर्यतेर्नञ्पूर्वात्संगते सङ्गमने कर्तरि यत्प्रत्ययो निपात्यते । न जीर्यतीत्यजर्यम्, अजर्यमार्यसंगतम् । अजर्यं नोऽस्तु सङ्गतम् । संगतमिति किम् ? अजरिता कम्बलः ॥

## वदः सुपि क्यप् च ॥ १०६ ॥

अनुपसर्ग इति वर्तते । वदेर्धातोः सुबन्त उपपदे अनुपसर्गे क्यप् प्रत्ययो भवति, चका-

---

**अवद्य**—गर्ह्य ( निन्द्य ), पणितव्य तथा अनिरोध अर्थों में क्रमशः 'अवद्य', 'पण्य' तथा 'वर्या' शब्दों का निपातन है ।

**वह्यम्**—करण अर्थ में 'वह' धातु से यत् प्रत्यय होना है ।

**अर्यः**—'ऋ' धातु से यत् प्रत्यय का निपातन होता है यदि स्वामी तथा वैश्य उस समुदाय के वाच्य हों ।

**स्वामिनि**—स्वामी अर्थ में अन्तोदात्तत्व का विधान भी करना चाहिए ।

**उपसर्या**—जिसके गर्भग्रहण-काल की सम्प्राप्ति हो गई हो उसके अभिधान के लिए 'उपसर्या' शब्द का निपातन होता है ।

**अजर्यम्**—मित्रता के अर्थ में 'अजर्यम्' शब्द का निपातन है ।

**वदः**—सुबन्तोपपदक अनुपसर्गक 'वद' धातु से क्यप् तथा यत् प्रत्यय होते हैं ।

---

( १ ) अवद्यं वदनानर्हम् ।

( २ ) पण्यं व्यवहर्त्तव्यम् ।

( ३ ) पाण्यं स्तुत्यम् ।

( ४ ) अप्रतिबन्धः प्रसरानभिघातः ।

राद्यच्च । ब्रह्मोद्यम् । ब्रह्मवद्यम् । सत्योद्यम् । सत्यवद्यम् । सुपीति किम् ? वाद्यम् । अनुप-सर्ग इत्येव—प्रवाद्यम् ॥

## भुवो भावे ॥ १०७ ॥

सुप्यनुपसर्गे इत्यनुवर्त्तते । भवतेर्धातोः सुबन्त उपपदेऽनुपसर्गे भावे क्यप् प्रत्ययो भवति । यत्तु नानुवर्त्तते । ब्रह्मभूयं गतः, ब्रह्मत्वं गतः । देवभूयं गतः, देवत्वं(१)गतः । भावग्रहणमुत्तरार्थम् । सुपीत्येव—भव्यम् । अनुपसर्ग इत्येव—प्रभव्यम् ॥

## हनस्त च ॥ १०८ ॥

सुप्यनुपसर्गे इति वर्तते, भाव इति च । हन्तेर्धातोः सुबन्त उपपदेऽनुपसर्गे भावे क्यप् प्रत्ययो भवति, तकारश्चान्तादेशः । ब्रह्महत्या । अश्वहत्या । सुपीत्येव—घातः । ण्यत्तु भावे न भवति, अनभिधानात् । अनुपसर्ग इत्येव—प्रघातो वर्तते ॥

## एतिस्तुशास्वृदृजुषः क्यप् ॥ १०९ ॥

सुप्यनुपसर्गे भाव इति निवृत्तम् । सामान्येन विधानमेतत् । एति, स्तु, शास्, वृ, दृ, जुष् इत्येतेभ्यः क्यप् प्रत्ययो भवति । इत्यः । स्तुत्यः । शिष्यः । वृत्यः । आदृत्यः । जुष्यः । क्यब्विति वर्तमाने पुनः क्यब्ग्रहणं बाधकबाधनार्थम्, "ओरावश्यके" इति ण्यतं बाधित्वा क्यबेव भवति—अवश्यस्तुत्यः । वृग्रहणे वृञो ग्रहणमिष्यते, न वृङः-वार्या ऋत्विजः । ॐशंसिदुहिगुहिभ्यो वेति वक्तव्यम्ॐ । शस्यम् । शंस्यम् । दुह्यम् । दोह्यम् । गुह्यम् । गोह्यम् । ॐआङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम्ॐ । आज्यं घृतम् । कथमुपेयम् ? (२) एरेतद्रूपम्, न इणः ॥

## ऋदुपधाच्चाक्लृपिचृतेः ॥ ११० ॥

ऋकारोपधाच्च धातोः क्यप् प्रत्ययो भवति, क्लृपिचृती वर्जयित्वा । वृतु-वृत्यम् । वृधु-वृध्यम् । अक्लृपिचृतेरिति किम् ? कल्प्यम्, चर्त्यम् । तपरकरणं किम् ? 'कॄत संशब्दने'—ण्यदेव भवति, कीर्त्यम् । ॐपाणौ सृजेर्ण्यद्वक्तव्यःॐ । पाणिसर्ग्या रज्जुः । ॐसमवपूर्वाच्चॐ । समवसर्ग्या ॥

## ई च खनः ॥ १११ ॥

खनेर्धातोः क्यप् प्रत्ययो भवतीकारश्चान्तादेशः । खेयम् । दीर्घनिर्देशः प्रश्लेषार्थः । तत्र द्वितीय इकारो "ये विभाषा" इत्यात्वबाधनार्थः ॥

---

भुवो—सुबन्तोपपदक अनुपसर्गक 'भू' धातु से भाव में क्यप् प्रत्यय होता है ।

हनस्त—अनुपसर्गक सुबन्तोपपदक 'हन्' धातु से भाव में क्यप् प्रत्यय होता है और अन्त में तकारादेश भी ।

एतिस्तु—'इण्', 'स्तु', 'शास्', 'वृ', तथा 'जुष्' धातुओं से क्यप् प्रत्यय होता है ।

शंसि—'शंस्', 'गुह' तथा 'दुह' धातुओं के विकल्प से क्यप् प्रत्यय समझना चाहिए ।

आङ्पूर्वात्—आङ्पूर्वक 'अन्ज' धातु से संज्ञा के तद्वाच्य होने पर क्यप् प्रत्यय होता है ।

ऋदुप—'क्लप्' तथा 'चृत्' धातुओं से अतिरिक्त ऋकारोपध धातुओं से क्यप् प्रत्यय होता है ।

पाणौ—पाणि अर्थ के वाच्य होने पर 'सृज्' धातु से ण्यत् प्रत्यय समझना चाहिए ।

समव—सम् एवम् अव उपसर्गों से विशिष्ट 'सृज्' धातु से भी ण्यत् प्रत्यय समझना चाहिए ।

ई च—'खन्' धातु से क्यप् प्रत्यय तथा ईकार अन्तादेश होता है ।

---

(१) अस्यार्थस्य न्यासे दर्शनादयं मूलपाठो नास्तीत्यवगम्यते ।

(२) इक एतदिति न्यासे पाठः ।

## भृञोऽसंज्ञायाम् ॥ ११२ ॥

भृञो धातोरसंज्ञायां विषये क्यप् प्रत्ययो भवति । भृत्याः कर्मकराः । भर्तव्या इत्यर्थः । असंज्ञायामिति किम् ? भार्यो नाम क्षत्रियः । ॐसंपूर्वाद्विभाषाॐ । संभृत्याः, संभार्या वा ॥

संज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिद्ध्यति ।
स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिद्ध्यति ॥

## मृजेर्विभाषा ॥ ११३ ॥

मृजेर्धातोर्विभाषा क्यप् प्रत्ययो भवति । ऋदुपधत्वात् प्राप्तविभाषेयम् । परिमृज्यः, परिमार्ग्यः ॥

## राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ॥ ११४ ॥

राजसूय, सूर्य, मृषोद्य, रुच्य, कुप्य, कृष्टपच्य, अव्यथ्य इत्येते शब्दाः क्यपि निपात्यन्ते । राज्ञा (१)सोतव्यः, राजा वा इह सूयते राजसूयः क्रतुः । सूसर्तिभ्यां क्यप्, सर्त्तेरुत्वं (२)सुवतेर्वा रुडागमः—सरति सुवति वा सूर्यः । मृषापूर्वस्य वदतेः पक्षे यति प्राप्ते नित्यं क्यब् निपात्यते—मृषोद्यम् । रोचतेऽसौ रुच्यः, कर्तरि क्यप् । गुपेरादेः कत्वं च संज्ञायाम्—(३) कुप्यम् । गोप्यमन्यत् । कृष्टे पच्यन्ते कृष्टपच्याः । कर्मकर्त्तरि निपातनम् । न व्यथते अव्यथ्यः ॥

## भिद्योद्ध्यौ नदे ॥ ११५ ॥

भिदेरुज्झेश्च क्यब् निपात्यते नदेऽभिधेये, उज्झेर्धत्वं च । भिनत्ति कूलं भिद्यः । उज्झत्युदकम् उद्ध्यः । नद इति किम् ? भेत्ता, उज्झिता ॥

## पुष्यसिद्ध्यौ नक्षत्रे ॥ ११६ ॥

पुषेः सिधेश्चाधिकरणे क्यब् निपात्यते नक्षत्रेऽभिधेये । पुष्यन्त्यस्मिन्नर्था इति पुष्यः । सिद्ध्यन्त्यस्मिन्निति सिद्ध्यः । नक्षत्र इति किम् ? पोषणं, सेधनम् ॥

## विपूयविनीयजित्या मुञ्जकल्कहलिषु ॥ ११७ ॥

विपूय, विनीय, जित्य इत्येते शब्दा निपात्यन्ते यथासंख्यं मुञ्जकल्कहलि इत्येतेष्व-

---

**भृञो**—'भृञ्' धातु से असंज्ञा-विषय में क्यप् प्रत्यय होता है ।

**सम्पूर्वात्**—सम्पूर्वक 'भृञ्' धातु से विकल्प से क्यप् प्रत्यय होता है ।

**मृजेः**—'मृज्' धातु से विकल्प के क्यप् प्रत्यय होता है ।

**राजसूय**—'राजसूय', 'सूर्य', 'मृषोद्य', 'रुच्य', 'कुप्य', 'कृष्टपच्य' तथा 'अव्यथ्य'—इतने क्पिप्रत्ययान्त शब्द निपातित होते हैं ।

**भिद्योद्ध्यौ**—नद अर्थ में 'भिद्' धातु से क्यप् प्रत्यय तथा 'उज्झ' धातु से क्यप् एवम् धत्व का निपातन है ।

**पुष्य**—'पुष्' तथा 'सिध्' धातुओं से अधिकरण में क्यप् प्रत्यय का निपातन होता है यदि नक्षत्र का अभिधान क्यबन्त से हो ।

**विपूय**—मुञ्ज, कल्क तथा हलि अर्थों में क्रमशः 'विपूय', 'विनीय' तथा 'जित्य' शब्द निपातित होते हैं ।

---

(१) सोतव्यः—अभिषवद्वारा निष्पादयितव्य इत्यर्थः । राजा—लतात्मकः सोमः ।

(२) सुवतेरिति—सुवतेरिति पञ्चमी, सुवतेः परस्य क्यप इत्यर्थः ।

(३) कुप्यम्—स्वर्णरजतादिभिन्नं धनम् ।

र्थेषु बोध्येषु। विपूर्वात्पवतेर्नयतेश्च तथा जयतेर्यति प्राप्ते कर्मणि क्यब् निपात्यते—(१) विपूयो मुञ्जः। विपाव्यमन्यत्। विनीयः कल्कः। विनेयमन्यत्। जित्यो हलिः। जेयमन्यत् ॥

## प्रत्यपिभ्यां ग्रहेश्छन्दसि ॥ ११८ ॥

प्रति, अपि इत्येवंपूर्वाद् ग्रहेः क्यप् प्रत्ययो भवति छन्दसि विषये। मत्तस्य न प्रतिगृह्यम्। तस्मान्नापि गृह्यम्। छन्दसीति किम् ? प्रतिग्राह्यम्, अपिग्राह्यम् ॥

## पदास्वैरिबाह्यापक्ष्येषु च ॥ ११९ ॥

पदेऽस्वैरिणि बाह्यायां पक्ष्ये चार्थे ग्रहेर्धातोः क्यप् प्रत्ययो भवति। पदे तावत्—प्रगृह्यं पदम्—यस्य प्रगृह्यसंज्ञा विहिता। अवगृह्यं पदम्—यस्यावग्रहः क्रियते। अस्वैरी परतन्त्रः—गृह्यका इमे। गृहीतका इत्यर्थः। बाह्यायाम्—ग्रामगृह्या सेना, नगरगृह्या सेना। ग्रामनगराभ्यां बहिर्भूतेत्यर्थः। स्त्रीलिङ्गनिर्देशादन्यत्र न भवति—पक्षे भवः पक्ष्यः, वासुदेवगृह्याः, अर्जुनगृह्याः। तत्पक्षाश्रिता इत्यर्थः ॥

## विभाषा कृवृषोः ॥ १२० ॥

कृञो वृषेश्च विभाषा क्यप् प्रत्ययो भवति। करोतेर्ण्यति प्राप्ते वर्षतेर्ऋदुपधत्वान्नित्ये क्यपि प्राप्ते विभाषाऽऽरभ्यते। कृत्यम्। कार्यम्। वृष्यम्। वर्ष्यम् ॥

## युग्यं च पत्त्रे ॥ १२१ ॥

युग्यमिति निपात्यते, पत्त्रं चेत्तद्भवति। पतत्यनेनेति पत्त्रं वाहनमुच्यते। युग्यो गौः। युग्योऽश्वः। युग्यो हस्ती। युजेः क्यप् कुत्वं च निपात्यते। पत्त्रे इति किम् ? योग्यमन्यत् ॥

## अमावस्यदन्यतरस्याम् ॥ १२२ ॥

अमाशब्दः सहार्थे वर्त्तते, तस्मिन्नुपपदे वसेर्धातोः कालेऽधिकरणे ण्यत्प्रत्ययो भवति, तत्रान्यतरस्यां वृद्ध्यभावो निपात्यते। सह वसतोऽस्मिन् काले सूर्याचन्द्रमसाविति अमावस्या, अमावास्या। एकदेशविकृतस्यानन्यत्वात् "अमावास्याया वा" इत्यत्रामावस्याशब्दस्यापि ग्रहणं भवति।

अमावसोरहं ण्यतोर्निपातयाम्यवृद्धिताम्।
तथैकवृत्तिता तयोः स्वरश्च मे प्रसिद्ध्यति ॥

---

**प्रत्यपिभ्याम्**—प्रतिपूर्वक तथा अपिपूर्वक 'ग्रह' धातु से क्यप् प्रत्यय होता है वेद में।

**पदास्वैरि**—पद, अस्वैरी ( =परतन्त्र ), बाह्या तथा पक्ष्य अर्थों में 'ग्रह' धातु से क्यप् प्रत्यय होता है।

**विभाषा**—'कृञ्' धातु तथा 'वृष' धातु से विकल्प से क्यप् होता है।

**युग्यम्**—पत्त्र अर्थ में नपुंसकलिङ्गविशिष्ट 'युग्य' शब्द का निपातन है।

**अमा**—अमाशब्दोपपदक 'वस' धातु से कालात्मक अधिकरण में ण्यत् प्रत्यय तथा पाक्षिक वृद्ध्यभाव निपातित होते हैं।

---

( १ ) विपूयो मुञ्जः-रज्ज्वादिकरणाय शोधयितव्य इत्यर्थः। कल्कः-तैलेन घृतेन वा त्रिफलादिद्रव्यसमवेतेन साध्यः कश्चिदौषधविशेषः। जित्यः—बलेन कृष्टव्य इत्यर्थः। बृहद्धलं हलिः। कृष्टसमीकरणार्थं स्थूलकाष्ठं वा हलिः।

छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि ॥१२३॥

निष्टर्क्यादयः शब्दाश्छन्दसि विषये निपात्यन्ते। यदिह लक्षणेन अनुपपन्नं तत्सर्वं निपातनात्सिद्धम्। निष्टर्क्य इति–'कृती छेदने' इत्यस्मान्निस्पूर्वात् क्यपि प्राप्ते ण्यत्, आद्यन्तविपर्ययश्च, निसश्च षत्वं निपात्यते—निष्टर्क्यं चिन्वीत पशुकामः। देवशब्द उपपदे ह्वयतेर्जुहोतेर्वा क्यप्, दीर्घस्तुगभावश्च—देवहूयः। प्रपूर्वादुत्पूर्वाच्च नयतेः क्यप्-प्रणीयः, उन्नीयः। उत्पूर्वाच्छिषेः क्यप्-उच्छिष्यम्। 'मृङ् प्राणत्यागे', 'स्तृञ् आच्छादने', 'ध्वृ हूर्छने' एतेभ्यो यत् प्रत्ययः-मर्यः, स्तर्या—स्त्रियामेव निपातनम्, ध्वर्यः। खनेर्यत्-खन्यः। एतस्मादेव ण्यत्-खान्यः। देवशब्द उपपदे यजेर्यत्-देवयज्या। स्त्रीलिङ्गनिपातनम्। आङ्पूर्वात्पृच्छेः क्यप्—आपृच्छ्यः। प्रतिपूर्वात्सीव्यतेः क्यप् षत्वं च-प्रतिषीव्यः। ब्रह्मण्युपपदे वदेर्ण्यत्-ब्रह्मवाद्यः। भवतेः स्तौतेश्च ण्यत् आवादेशश्च भवति-भाव्यः, स्ताव्यः। उपपूर्वस्य चिनोतेर्ण्यदायादेशौ-उपचाय्यपृडम्। पृडे चोत्तरपदे निपातनमेतत्। *हिरण्य इति वक्तव्यम्*। हिरण्यादन्यत्र उपचेयपृडमेव।

निष्टर्क्ये व्यत्ययं विद्यान्निसः षत्वं निपातनात्।
ण्यदायादेश इत्येतावुपचाय्ये निपातितौ ॥
ण्यदेकस्माच्चतुर्भ्यः क्यप् चतुर्भ्यश्च यतो विधिः।
ण्यदेकस्माद्यशब्दश्च द्वौ क्यपौ ण्यद्विधिश्चतुः ॥

## ऋहलोर्ण्यत् ॥ १२४ ॥

पञ्चम्यर्थे षष्ठी, ऋवर्णान्ताद्धातोर्हलन्ताच्च ण्यत्प्रत्ययो भवति। कार्यम्। हार्यम्। धार्यम्। वाक्यम्। पाक्यम् ॥

## ओरावश्यके ॥ १२५ ॥

अवश्यभाव आवश्यकम्। उवर्णान्ताद्धातोर्ण्यत् प्रत्ययो भवत्यावश्यके द्योत्ये। यतोऽपवादः। लाव्यम्। पाव्यम्। आवश्यके इति किम्? लव्यम्। आवश्यके द्योत्य इति चेत् स्वरसमासानुपपत्तिः-अवश्यपाव्यमिति? नैष दोषः, मयूरव्यंसकादित्वात् समासः, उत्तरपदप्रकृतिस्वरे च यत्नः करिष्यते ॥

## आसुयुवपिरपिलपित्रपिचमश्च ॥ १२६ ॥

आङ्पूर्वात्सुनोतेः, यु, वपि, रपि, लपि, त्रपि, चम् इत्येतेभ्यश्च ण्यत् प्रत्ययो भवति। यतोऽपवादः। आसाव्यम्। याव्यम्। वाप्यम्। राप्यम्। लाप्यम्। त्राप्यम्। आचाम्यम्। अनुक्तसमुच्चयार्थश्चकारः—दभि-दाभ्यम् ॥

---

छन्दसि—वेद में 'निष्टर्क्य', 'देवहूय', 'प्रणीय', 'उन्नीय', 'उच्छिष्य', 'मर्य', 'स्तर्य', 'अध्वर्य', 'खन्य', 'खान्य', 'देवयज्या', 'पृच्छ्य', 'प्रतिषीव्य', 'ब्रह्मवाद्य', 'भाव्य', 'स्ताव्य', 'उपचाय्य' एवं 'पृड' शब्दों का निपातन है।

हिरण्ये—'उपचाय्य' इस शब्द का निपातन हिरण्य अर्थ में समझना चाहिए।

ऋहलोः—ऋवर्णान्त एवम् हलन्त धातुओं से ण्यत् प्रत्यय होता है।

ओरावश्यके—उवर्णान्त धातुओं से आवश्यक अर्थ में ण्यत् प्रत्यय होता है।

आसु—आङ्पूर्वक 'सुञ्', 'यु', 'वप्', 'रप्', 'लप्', 'त्रप्' तथा 'चम्' धातुओं से ण्यत् प्रत्यय होता है।

## आनाय्योऽनित्ये ॥ १२७ ॥

आनाय्य इति निपात्यते अनित्येऽभिधेये । नयतेराङ्पूर्वाण्ण्यदायादेशौ निपात्येते । आनाय्यो दक्षिणाग्निः । रूढिरेषा, तस्मादनित्यविशेषे दक्षिणाग्नावेवावतिष्ठते, तस्य चानित्यत्वं नित्यमजागरणात् । यश्च गार्हपत्यादानीयते दक्षिणाग्निराहवनीयेन सहैकयोनिस्तत्रैतन्निपातनं न दक्षिणाग्निमात्रे, तस्य हि योनिर्विकल्प्यते—वैश्यकुलाद्वित्तवतो भ्राष्ट्राद्वा गार्हपत्याद्वेति ॥

आनाय्योऽनित्य इति चेद्दक्षिणाग्नौ कृतं भवेत् ।
एकयोनौ तु तं विद्यादानेयो ह्यन्यथा भवेत् ॥

## प्रणाय्योऽसंमतौ ॥ १२८ ॥

अविद्यमाना संमतिरस्मिन्नित्यसंमतिः । संमननं संमतिः, संगतता पूजा । प्रणाय्य इति निपात्यतेऽसंमतावभिधेये । प्रणाय्यश्चोरः । असंमताविति किम् ? प्रणेयोऽन्यः । यद्येवं कथमेतत्–"ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्रणाय्यायान्तेवासिने, नान्यस्मै कस्मैचन" इति ? संमतिरभिलाषोऽप्युच्यते, तदभावेन निष्कामतया असम्मतिरन्तेवासी भवति, तस्मै निष्कामाय मोक्षार्थं यतमानायान्तेवासिने प्रणाय्याय ब्रह्म प्रब्रूयादिति युज्यते ॥

## पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु ॥ १२९ ॥

पाय्यादयः शब्दा निपात्यन्ते यथासंख्यं माने, हविषि, निवासे, सामिधेन्यां चाभिधेयायाम् । पाय्य इति–माङो ण्यत् प्रत्ययः आदेः पत्वं च निपात्यते माने—पाय्यं मानम् । मेयमन्यत् । संपूर्वान्नयतेर्ण्यदायादेशावुपसर्गदीर्घत्वं च निपात्यते—सान्नाय्यं हविः । सन्नेयमन्यत् । रूढिरवाच्च हविर्विशेष एवाऽवतिष्ठते । निपूर्वाच्चिनोतेर्ण्यदायादेशावाद्विकुत्वं च निपात्यते—निकाय्यो निवासः । निचेयमन्यत् । धाय्येति–धाञो ण्यत् प्रत्ययो निपात्यते सामिधेनी चेत्सा भवति—धाय्या सामिधेनी । धेयमन्यत् । सामिधेनीशब्द ऋग्विशेषस्य वाचकः, तत्र च धाय्येति न सर्वा सामिधेन्युच्यते । किं तर्हि ? का चिदेव । रूढिशब्दो ह्ययम् । तथा चासामिधेन्यामपि दृश्यते–"धाय्याः शंसत्यग्निर्नेता त्वं सोमक्रतुभिः" इति ॥

## क्रतौ कुण्डपाय्यसंचाय्यौ ॥ १३० ॥

कुण्डपाय्य, संचाय्य इत्येतौ शब्दौ निपात्येते क्रतावभिधेये । कुण्डशब्दे तृतीयान्त उपपदे पिबतेर्धातोरधिकरणे यत्प्रत्ययो निपात्यते युक्च । कुण्डेन पीयतेऽस्मिन् सोम इति–कुण्डपाय्यः क्रतुः । "यतोऽनावः" इति स्वरः । संपूर्वाच्चिनोतेर्ण्यदायादेशौ निपात्येते—सञ्चीयतेऽस्मिन् सोम इति संचाय्यः क्रतुः । क्रताविति किम् ? कुण्डपानम्, संचयः ॥

## अग्नौ परिचाय्योपचाय्यसमूह्याः ॥ १३१ ॥

परिचाय्य, उपचाय्य, समूह्य इत्येते शब्दा निपात्यन्ते अग्नावभिधेये । पर्युपपूर्वा-

---

आनाय्यो—अनित्य अर्थ में 'आनाय्य' शब्द का निपातन है ।

प्रणाय्यो– असम्मति अर्थ में 'प्रणाय्य' शब्द का निपातन है ।

पाय्य—मान, हविस्, निवास तथा सामिधेनी अर्थों में क्रमशः 'पाय्य', 'सान्नाय्य', 'निकाय्य' तथा 'धाय्य' शब्दों का निपातन है ।

क्रतौ—क्रतु अर्थ में 'कुण्डपाय्य', तथा 'संचाय्य' शब्दों का निपातन है ।

अग्नौ—अग्नि अर्थ में 'परिचाय्य', 'उपचाय्य' तथा 'संचाय्य' शब्दों का निपातन है ।

चिनोतेर्ण्यदायादेशौ निपात्येते—परिचाय्यः, उपचाय्यः। सम्पूर्वाद्वहेः सम्प्रसारणं दीर्घत्वं च निपात्यते-समूह्यं चिन्वीत पशुकामः। अग्नाविति किम्? परिचेयम्, उपचेयम्, संवाह्यम् ॥

## चित्याग्निचित्ये च ॥ १३२ ॥

चित्यशब्दोऽग्निचित्याशब्दश्च निपात्येते। चीयतेऽसौ चित्योऽग्निः। अग्निचयनमेवाग्निचित्या। भावे यकारप्रत्ययस्तुक् च, तेनान्तोदात्तत्वं भवति। अग्नावित्येव—चेयमन्यत् ॥

## ण्वुल्तृचौ ॥ १३३ ॥

धातोरिति वर्त्तते। सर्वधातुभ्यो ण्वुल्तृचौ प्रत्ययौ भवतः। कारकः। कर्त्ता। हारकः। हर्त्ता। चकारः (१)सामान्यग्रहणाविघातार्थः-"तुश्छन्दसि", "तुरिष्ठेमेयस्सु" इति ॥

## नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ॥ १३४ ॥

प्रत्येकमादिशब्दः सम्बध्यते। त्रिभ्यो गणेभ्यस्त्रयः प्रत्यया यथासंख्यं भवन्ति। (२)नन्द्यादिभ्यो ल्युः, ग्रहादिभ्यो णिनिः, पचादिभ्योऽच्। नन्दिग्रहिपचादयश्च न धातुपाठतः सन्निविष्टा गृह्यन्ते, किं तर्हि? नन्दनरमणेत्येवमादिषु प्रातिपदिकगणेषु अपोद्धृत्य प्रकृतयो निर्दिश्यन्ते। ॐनन्दिवाशिमदिदूषिसाधिवर्द्धिशोभिरोचिभ्यो ण्यन्तेभ्यः संज्ञायाम्ॐ। नन्दनः। वाशनः। मदनः। दूषणः। साधनः। वर्द्धनः। शोभनः। रोचनः। ॐसहितपिदमेः संज्ञायाम्ॐ। सहनः। तपनः। दमनः। जल्पनः। रमणः। दर्पणः। संक्रन्दनः। सङ्कर्षणः। संहर्षणः। जनार्दनः। यवनः। मधुसूदनः। विभीषणः। लवणः। निपातनाण्णत्वम्। (३)वित्तविनाशनः। कुलदमनः। शत्रुदमनः। इति नन्द्यादिः। ग्रह। उत्सह। उद्वस। उद्भास। स्था। मन्त्र। सम्मर्द। ग्राही। उत्साही। उद्वासी। उद्भासी। स्थायी। मन्त्री। सम्मर्दी। ॐरक्षश्रुवसवपशां नौॐ। निरक्षी। निश्रावी। निवासी। निवापी। निशायी। ॐयाचिव्याहृसंव्याहृव्रजवदवसां प्रतिषिद्धानाम्ॐ। अयाची। अव्याहारी। असंव्याहारी। अव्राजी। अवादी। अवासी। ॐअचामचित्तकर्तृकाणाम्ॐ। प्रति-

---

**चित्या**—अग्नि अर्थ में ही 'चित्य' तथा 'अग्निचित्या' शब्दों का भी निपातन है।

**ण्वुल्**—धातु से ण्वुल् तथा तृच् प्रत्यय होते हैं।

**नन्दि**—'नन्द्' आदि धातुओं से ल्युप्रत्यय, 'ग्रह' आदि धातुओं से णिनि प्रत्यय तथा 'पच' आदि धातुओं के अच् प्रत्यय होते हैं।

**नन्दिवाशि**—णिज्विशिष्ट 'नन्द', 'वाश्'; 'मद्', 'दुष्', 'साध्', 'वृध्', 'शुभ्' तथा 'रुच्' धातुओं से संज्ञा में ल्यु प्रत्यय समझना चाहिए।

**सहितपि**—'सह', 'तप' तथा 'दम' धातुओं से भी संज्ञा में ल्यु प्रत्यय समझना चाहिए।

**रक्षश्रु**—'रक्ष', 'श्रु', 'वस', 'वप' तथा 'शो' धातुओं से निपूर्वक होने पर ही णिनि प्रत्यय समझना चाहिए।

**याचि**—नञ्पूर्वक 'याच्', 'व्याहृ', 'संव्याहृ', 'व्रज', 'वद', 'वस' धातुओं से णिनि प्रत्यय होता है।

**अचामचित्त**—अचित्तकर्तृक नञ्पूर्वक अजन्त धातुओं से भी णिनि प्रत्यय समझना चाहिए।

---

(१) सामान्यग्रहणार्थ इति न्यासपाठः।

(२) अत्र गणे दूषणशब्दस्य स्थाने भूषण इति क्वचित्, तदा मदि भूषि साधि इति पाठः।

(३) चित्तनाशनः इति न्यासे।

षिद्धानामित्येव। अकारी। अहारी। अविनायी। अविशायी। ॐविशयी विषयी देशेॐ। विशयी, विषयी देशः। ॐअभिभावी भूतेॐ। अभिभावी। अपराधी। (१)उपरोधी। परिभावी। परिभवी। इति ग्रह्यादिः॥ पच। वच। वप। वद। चल। शल। तप। पत। नदट्। भषट्। वस। गरट्। प्लवट्। चरट्। तरट्। चोरट्। ग्राहट्। जर। मर। क्षर। क्षम। सूदट्। देवट्। मोदट्। सेव। मेष। कोप। मेधा। नर्त्त। दश। दम्भ। जारभरा। श्वपच। (२)पचादिराकृतिगणः॥

अज्विधिः सर्वधातुभ्यः पठ्यन्ते च पचादयः।
अण्बाधनार्थमेव स्यात् सिध्यन्ति श्वपचादयः(३)॥

## इगुपधज्ञाप्रीकिरः कः॥ १३५॥

इगुपधेभ्यो जानातेः प्रीणातेः किरतेश्च कप्रत्ययो भवति। विक्षिपः। विलिखः। बुधः। कृशः। जानातीति ज्ञः। प्रीणातीति प्रियः। किरतीति किरः। देवसेवमेषादयः पचादौ पठितव्याः॥

## आतश्चोपसर्गे॥ १३६॥

आकारान्तेभ्यो धातुभ्य उपसर्ग उपपदे कप्रत्ययो भवति। णस्यापवादः। प्रस्थः। सुग्लः। सुम्लः॥

## पाघ्राध्माधेट्दृशः शः॥ १३७॥

पादिभ्यो धातुभ्य उपसर्ग उपपदे शप्रत्ययो भवति। उत्पिबः। विपिबः। उज्जिघ्रः। विजिघ्रः। उद्धमः। विधमः। उद्धयः। विधयः। उत्पश्यः। विपश्यः। उपसर्ग इति केचिन्नाऽनुवर्तयन्ति—पश्यतीति पश्यः। ॐजिघ्रतेः संज्ञायां प्रतिषेधो वक्तव्यःॐ। व्याघ्रः॥

## अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च॥ १३८॥

अनुपसर्गेभ्यो लिम्पादिभ्यः शप्रत्ययो भवति। लिम्पतीति लिम्पः। विन्दतीति विन्दः। धारयतीति धारयः। पारयतीति पारयः। वेदयतीति वेदयः। उदेजयतीत्युदेजयः। चेतयतीति चेतयः। सातिः सौत्रो धातुः-सातयः। साहयः। अनुपसर्गादिति किम्? प्रलिपः। ॐनौ लिम्पेरिति वक्तव्यम्ॐ। निलिम्पा नाम देवाः। ॐगवादिषु विन्देः संज्ञायाम्ॐ। गोविन्दः। अरविन्दः।

---

**विशयी**—देश अर्थ में णिनिप्रत्ययान्त 'विशयी' तथा 'विषयी' शब्द साधु हैं।

**अभिभावी**—भूत अर्थ में णिनिप्रत्ययान्त 'अभिभावी' शब्द साधु है।

**इगुपध**—इगुपध, 'ज्ञा', 'प्री' तथा 'किर' धातुओं से क प्रत्यय होता है।

**आतश्चोप**—उपसर्गोपपदक आकारान्त धातुओं से भी क प्रत्यय होता है।

**पाघ्रा**—उपसर्गोपपदक 'पा', 'घ्रा', 'ध्मा', 'धेट्' तथा 'दृश' धातुओं से श प्रत्यय होता है।

**जिघ्रतेः**—संज्ञा के अभिधेय होने पर 'घ्रा' धातु से श प्रत्यय का प्रतिषेध समझना चाहिए।

**अनुपसर्गात्**—अनुपसर्गक 'लिम्प', 'विन्द', 'धारि', 'पारि', 'वेदि', 'उदेजि', 'चेति', 'साति' तथा 'साहि' धातुओं से श प्रत्यय होता है।

**नौ**—निपूर्वक 'लिम्प' धातु से भी श प्रत्यय समझना चाहिए।

**गवादिषु**—गवाद्युपपदक 'विन्द' धातु से संज्ञा में श प्रत्यय समझना चाहिए।

---

(१) अवरोधीति पदमञ्जर्याम।

(२) क्वचिद् दम्भशब्द उपलभ्यते।

(३) क्वचिन्नायमुपलभ्यते श्लोकः। न्यासपदमञ्जर्योरपि न व्याख्यातोऽयं श्लोकः।

## ददातिदधात्योर्विभाषा ॥ १३९ ॥

दाञो धाञश्च विभाषा शप्रत्ययो भवति । णस्यापवादः । ददः । दायः । दधः । धायः । अनुपसर्गादित्येव—प्रदः, प्रधः ।

## ज्वलितिकसन्तेभ्यो णः ॥ १४० ॥

इतिशब्द आद्यर्थः । 'ज्वल दीप्तौ' इत्येवमादिभ्यो धातुभ्यः 'कस गतौ इत्येवमन्तेभ्यो विभाषा णप्रत्ययो भवति । अचोऽपवादः । ज्वालः । ज्वलः । चालः । चलः । अनुपसर्गादित्येव—प्रज्वलः । ॐतनोतेर्ण उपसंख्यानम्ॐ । अवतनोतीत्यवतानः ॥

## श्याद्व्यधास्रुसंस्रवतीणवसावहृलिहश्लिषश्वसश्च ॥ १४१ ॥

अनुपसर्गादिति, विभाषा चेति निवृत्तम् । श्यैङ, आकारान्तेभ्यश्च धातुभ्यः, व्यध, आस्रु, संस्रु, अतीण्, अवसा, अवहृ, लिह, श्लिष, श्वस इत्येतेभ्यश्च णप्रत्ययो भवति । आकारान्तत्वादेव श्यायतेः प्रत्यये सिद्धे पुनर्वचनं बाधकबाधनार्थम्, उपसर्गे कं बाधित्वाऽयमेव भवति—अवश्यायः, प्रतिश्यायः । दायः । धायः । व्याधः । आस्रावः । संस्रावः । अत्यायः । अवसायः । अवहारः । लेहः । श्लेषः । श्वासः ॥

## दुन्योरनुपसर्गे ॥ १४२ ॥

दुनोतेर्नयतेश्चानुपसर्गे णप्रत्ययो भवति । दुनोतीति दावः । नयतीति नायः । अनुपसर्ग इति किम् ? प्रदवः, प्रणयः ॥

## विभाषा ग्रहः ॥ १४३ ॥

विभाषा ग्रहेर्धातोर्णप्रत्ययो भवति । अचोऽपवादः । ग्रहः, ग्राहः । व्यवस्थितविभाषा चेयम्, (१)जलचरे नित्यम्-ग्राहः । ज्योतिषि नेष्यते—तत्र ग्रह एव । ॐभवतेश्चेति वक्तव्यम्ॐ । भवतीति भावः, भवः ॥

## गेहे कः ॥ १४४ ॥

ग्रहेर्धातोः कप्रत्ययो भवति गेहे कर्त्तरि । गृहं वेश्म, तात्स्थ्याद् दाराश्च । गृह्णन्तीति गृहा दाराः, गृहाणि वेश्मानि ॥

## शिल्पिनि ष्वुन् ॥ १४५ ॥

धातोः ष्वुन् प्रत्ययो भवति शिल्पिनि कर्त्तरि । ॐनृतिखनिरञ्जिभ्यः परिगणनं

---

ददाति—'दाञ्' तथा 'धाञ्' धातुओं से विकल्प से श प्रत्यय होता है ।

ज्वलिति—'ज्वल' आदि 'कस'-पर्यन्त धातुओं से ण प्रत्यय होता है ।

तनोतेर्ण—'तन' धातु से भी ण प्रत्यय का प्रतिपादन करना चाहिए ।

श्याद्व्यध—'श्यैङ्', अकारान्त, 'व्यध', 'आस्रु', 'संस्रु', 'अतीण्', 'अवसा', 'अवहृ', 'लिह्', 'श्लिष', तथा 'श्वस' धातुओं के ण प्रत्यय होता है ।

दुन्योरनुप—अनुपसर्गक 'दु' तथा 'नी' धातुओं से ण प्रत्यय होता है ।

विभाषा—'ग्रह' धातु से विकल्प से णप्रत्यय होता है ।

भवतेश्चेति—'भू' धातु से भी विकल्प से ण प्रत्यय का विधान करना चाहिए ।

गेहे—समुदाय से कर्त्ता गेह (घर) के वाच्य होने पर 'ग्रह' धातु से क प्रत्यय होता है ।

शिल्पिनि—धातु से शिल्पी अर्थ में ष्वुन् प्रत्यय होता है ।

नृतिखनि—'नृति', 'खनि' तथा 'रञ्जि' धातुओं से ही उक्त ष्वुन् प्रत्यय होता है, इस प्रकार ष्वुन्प्रत्ययप्रकृतिभूत धातुओं का परिगणन करना चाहिए ।

---

(१) जलचरे ग्राह एव । ज्योतिषि ग्रह एव इति कुत्रचित् पाठान्तरम् ।

कर्त्तव्यम्॥ । नर्त्तकः । खनकः । रजकः । नर्त्तकी । खनकी । रजकी । रञ्जेरनुनासिक-लोपश्च ॥

## गस्थकन् ॥ १४६ ॥

गायतेस्थकन्प्रत्ययो भवति शिल्पिनि कर्त्तरि । गायकः । गायिका ।

## ण्युट् च ॥ १४७ ॥

चकारेण ण इत्यनुकृष्यते । गायतेर्ण्युट्प्रत्ययो भवति शिल्पिनि कर्त्तरि । गायनः । गायनी । योगविभाग उत्तरार्थः ॥

## हश्च व्रीहिकालयोः ॥ १४८ ॥

चकारेण ण्युडनुकृष्यते । जहातेर्जिहातेश्च धातोर्ण्युट्प्रत्ययो भवति व्रीहौ काले च कर्त्तरि । हायना नाम व्रीहयः, जहत्युदकमिति कृत्वा । काले—हायनः संवत्सरः, जिहीते भावानिति कृत्वा ॥

## प्रुसृल्वः समभिहारे वुन् ॥ १४९ ॥

प्रु, सृ, लू इत्येतेभ्यो धातुभ्यः समभिहारे वुन् प्रत्ययो भवति । प्रवकः । सरकः । लवकः । समभिहारग्रहणेनात्र साधुकारित्वं लक्ष्यते । साधुकारिणि वुन्विधानात्सकृदपि यः सुष्ठु करोति तत्र भवति, बहुशो यो दुष्टं करोति तत्र न भवति ॥

## आशिषि च ॥ १५० ॥

आशिषि गम्यमानायां धातुमात्राद् वुन् प्रत्ययो भवति । जीवतात्, जीवकः । नन्दतात्, नन्दकः । आशीः प्रार्थनाविशेषः, स चेह क्रियाविषयः—अमुष्याः क्रियायाः कर्त्ता भवेदित्येवमाशास्यते ।

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ
तृतीयाध्यायस्य प्रथमः पादः ।



---

गस्थकन्—शिल्पी अर्थ में 'गै' धातु से थकन् प्रत्यय होता है ।
ण्युट्—'गै' धातु से शिल्पी अर्थ में ण्युट् प्रत्यय भी होता है ।
हश्च—व्रीहि तथा काल अर्थों में 'ओहाक्' तथा 'ओहाङ्' धातुओं से ण्युट् प्रत्यय होता है ।
प्रुसृ—'प्रु', 'सृ' तथा 'लू' धातुओं से समभिहार में वुन्प्रत्यय होता है ।
आशिषि च—आशीरर्थ में धातुमात्र से वुन् प्रत्यय होता है ।

तृतीयाध्याय का प्रथम पाद समाप्त हुआ ।



# अथ तृतीयाध्यायस्य द्वितीयः पादः ॥

## कर्मण्यण् ॥ १ ॥

त्रिविधं(१) कर्म—निर्वर्त्यं विकार्यं प्राप्यं चेति। सर्वत्र कर्मण्युपपदे धातोरण्प्रत्ययो भवति। निर्वर्त्यं तवात्—कुम्भकारः, नगरकारः। विकार्यम्—काण्डलावः, शरलावः। प्राप्यम्—वेदाध्यायः, चर्चापारः। ग्रामं गच्छति, आदित्यं पश्यति, हिमवन्तं शृणोतीत्यत्र न भवति, अनभिधानात्। ॐशीलिकामिभक्ष्याचरिभ्यो णः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्ॐ। मांसशीलः। मांसशीला। मांसकामः। मांसकामा। मांसभक्षः। मांसभक्षा। कल्याणाचारः। कल्याणाचारा। ॐईक्षिक्षमिभ्यां चेति वक्तव्यम्ॐ। सुखप्रतीक्षः। सुखप्रतीक्षा। बहुक्षमः। बहुक्षमा॥

## ह्वावामश्च ॥ २ ॥

'ह्वेञ् स्पर्द्धायां शब्दे च', 'वेञ् तन्तुसन्ताने', माङ् माने' इत्येतेभ्यश्च कर्मण्युपपदेऽण् प्रत्ययो भवति। कप्रत्ययापवादः। स्वर्गह्वायः। तन्तुवायः। धान्यमायः॥

## आतोऽनुपसर्गे कः ॥ ३ ॥

आकारान्तेभ्योऽनुपसर्गेभ्यः कर्मण्युपपदे कप्रत्ययो भवति। अणोऽपवादः। गोदः। कम्बलदः। पार्ष्णित्रम्। अङ्गुलित्रम्। अनुपसर्ग इति किम्? गोसन्दायः, वडवासन्दायः॥

## सुपि स्थः ॥ ४ ॥

सुबन्त उपपदे तिष्ठतेः कप्रत्ययो भवति। समस्थः। विषमस्थः(२)। अत्र योगविभागः कर्त्तव्यः—'सुपीति'। सुप्याकारान्तेभ्यः कप्रत्ययो भवति। द्वाभ्यां पिबतीति द्विपः। पादपः। कच्छपः। ततः—'स्थः' इति। स्थश्च सुपि कप्रत्ययो भवति। किमर्थमिदम्? कर्तरि पूर्वयोगः,

---

**कर्मण्यण्**—कर्मकारक के उपपद होने पर धातु से अण् प्रत्यय होता है।

**शीलिकामि**—'शीलि', 'कामि', 'भक्षि' तथा 'आङ्पूर्वक 'चर' धातुओं से कर्मोपपद में ण प्रत्यय होता है तथा पूर्वपदप्रकृतिस्वर भी।

**ईक्षि**—'ईक्ष' तथा 'क्षम्' धातुओं से भी ण प्रत्यय तथा पूर्वपदप्रकृतिस्वरत्व समझना चाहिए।

**ह्वावा**—कर्मोपपदक 'ह्वेञ्', 'वेञ्' तथा 'माङ्' धातुओं से भी अण् प्रत्यय होता है।

**आतोऽनुप**—अनुपसर्गक कर्मोपपदक आकारान्त धातुओं से क प्रत्यय होता है।

**सुपि**—सुबन्त के उपपद रहने पर 'स्था' धातु से क प्रत्यय होता है।

---

(१) अत्र कर्मेति ईप्सिततमस्यैव ग्रहणम् इत्यभिप्रेत्याह—त्रिविधम् इति। तथा च हरिकारिकाः—

"निर्वर्त्यं च विकार्यं च प्राप्यञ्चेति त्रिधा मतम्। तच्चेप्सिततमं कर्म ………………… ॥
यदसज्जायते सद्वा जन्मना यत्प्रकाशते। तन्निर्वर्त्यम्, विकार्यन्तु द्वेधा कर्म व्यवस्थितम् ॥
प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्ठादिभस्मवत्। किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥
क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते। दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते ॥" इति ॥
दर्शनम् = प्रत्यक्षम्, अनुमानम् = तदितरप्रमाणम् इति बोध्यम्। (श्रीना०)

(२) कूटस्थ इत्येतदप्युदाहरणं क्वचित्।

अनेन भावे यथा स्यात्–आखूनामुत्थानम् आखूत्थः, शलभोत्थः। इत उत्तरं कर्मणीति, सुपीति च द्वयमप्यनुवर्त्तते। तत्र सकर्मकेषु धातुषु कर्मणीत्येतदुपतिष्ठते, अन्यत्र सुपीति॥

## तुन्दशोकयोः परिमृजापनुदोः॥ ५॥

तुन्दशोकयोः कर्मणोरुपपदयोः परिमृजापनुदोर्धात्वोः कप्रत्ययो भवति। तुन्दपरिमृज आस्ते। शोकापनुदः पुत्त्रो जातः। ॐआलस्यसुखाहरणयोरिति वक्तव्यम्ॐ। अलसस्तुन्दपरिमृज उच्यते। तुन्दपरिमार्ज एवान्यः। सुखस्याहर्त्ता शोकापनुदः। शोकापनोद एवान्यः। ॐकप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्ॐ। मूलानि विभुजतीति मूलविभुजो रथः। नखमुचानि धनूंषि। काकगुहास्तिलाः। कौ मोदते कुमुदम्॥

## प्रे दाज्ञः॥ ६॥

सोपसर्गार्थ आरम्भः। ददातेर्जानातेश्च धातोः प्रेणोपसृष्टात् कर्मण्युपपदे कप्रत्ययो भवति। अणोऽपवादः। सर्वप्रदः। पथिप्रज्ञः। प्र इति किम्? गोसंदायः॥

## समि ख्यः॥ ७॥

सोपसर्गार्थ आरम्भः। सम्पूर्वात् 'ख्या' इत्येतस्माद्धातोः कर्मण्युपपदे कप्रत्ययो भवति। अणोऽपवादः। गां सञ्चष्टे गोसंख्यः॥

## गापोष्टक्॥ ८॥

कर्मण्यनुपसर्ग इति वर्त्तते। गायतेः पिबतेश्च धातोः कर्मण्युपपदेऽनुपसर्गे टक् प्रत्ययो भवति। कस्यापवादः। शक्रं गायति शक्रगः। सामगः। शक्रगी। सामगी। ॐसुराशीध्वोः पिबतेरिति वक्तव्यम्ॐ। सुरापः। सुरापी। शीधुपः। शीधुपी। सुराशीध्वोरिति किम्? क्षीरपा ब्राह्मणी। पिबतेरिति किम्? सुरां पातीति सुरापा। अनुपसर्ग इत्येव—शक्रसंगायः। सामसंगायः। ॐबहुलं छन्दसीति वक्तव्यम्ॐ। या ब्राह्मणी सुरापी भवति नैनां देवाः पतिलोकं नयन्ति। या ब्राह्मणी सुरापा भवति नैनां देवाः पतिलोकं नयन्ति॥

## हरतेरनुद्यमनेऽच्॥ ९॥

हरतेर्धातोरनुद्यमने वर्त्तमानात् कर्मण्युपपदेऽच् प्रत्ययो भवति। अणोऽपवादः। उद्यमनमुत्क्षेपणम्। अंशं हरतीत्यंशहरः। रिक्थहरः। अनुद्यमन इति किम्? भारहारः।

**तुन्दशोकयोः**—कर्मत्वविशिष्ट 'तुन्द' तथा शोक के उपपद होने पर क्रमशः 'परिमृज्' तथा 'अपनुद' धातुओं से क प्रत्यय होता है।

**आलस्य**—उक्त दोनों ही धातुओं से क्रमशः आलस्य तथा सुखाहरण अर्थ में क प्रत्यय का विधान समझना चाहिए।

**कप्रकरणे**—'मूलविभुज' आदि कप्रत्ययान्त शब्दों का भी साधुत्व अवगन्तव्य है।

**प्रे दाज्ञः**—प्रोपसर्गक 'दा' तथा 'ज्ञा' धातुओं से कर्म के उपपदत्व में क प्रत्यय होता है।

**समि ख्यः**—कर्मोपपदक सम्पूर्वक 'ख्या' धातु से क प्रत्यय होता है।

**गापोष्टक्**—अनुपसर्गक कर्मोपपदक 'गै' तथा 'पा' धातुओं से टक् प्रत्यय होता है।

**सुराशीध्वोः**—सुरोपपदक तथा शीधूपपदक 'पा' धातु से भी टक् प्रत्यय समझना चाहिए।

**बहुलम्**—वेद में टक् प्रत्यय बहुल करके होता है।

**हरतेरनु**—अनुद्यमन अर्थ में वर्त्तमान कर्मोपपदक 'हृ' धातु से अच् प्रत्यय होता है।

※अच्प्रकरणे शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुःषु ग्रहेरुपसंख्यानम्※। शक्तिग्रहः। लाङ्गलग्रहः। अङ्कुशग्रहः। यष्टिग्रहः। तोमरग्रहः। घटग्रहः। घटीग्रहः। धनुर्ग्रहः। ※सूत्रे च धार्यर्थे※। सूत्रग्रहः। सूत्रं धारयतीत्यर्थः। सूत्रग्राह एवान्यः॥

## वयसि च ॥ १० ॥

वयसि गम्यमाने हरतेः कर्मण्युपपदेऽच्प्रत्ययो भवति। उद्यमनाऽर्थोऽयमारम्भः। कालकृता शरीरावस्था यौवनादिर्वयः। यदुद्यमनं क्रियमाणं संभाव्यमानं वा वयो गमयति तत्रायं विधिः। अस्थिहरः श्वा। कवचहरः क्षत्रियकुमारः॥

## आङि ताच्छील्ये ॥ ११ ॥

आङ्पूर्वाद्धरतेः कर्मण्युपपदेऽच्प्रत्ययो भवति ताच्छील्ये गम्यमाने। ताच्छील्यं तत्स्वभावता। पुष्पाहरः। फलाहरः। पुष्पाद्याहरणे स्वाभाविकी फलानपेक्षा प्रवृत्तिरस्येत्यर्थः। ताच्छील्य इति किम्? भारमाहरतीति भाराहारः॥

## अर्हः ॥ १२ ॥

'अर्ह पूजायाम्' अस्माद्धातोः कर्मण्युपपदेऽच् प्रत्ययो भवति। अणोपवादः। स्त्रीलिङ्गे (१)विशेषः। पूजार्हा। गन्धार्हा। मालार्हा॥

## स्तम्बकर्णयो रमिजपोः ॥ १३ ॥

स्तम्ब, कर्ण इत्येतयोः सुबन्तयोरुपपदयोर्यथासंख्यं रमिजपोर्धात्वोरच्प्रत्ययो भवति। रमेरकर्मकत्वाज्जपेः शब्दकर्मकत्वात् कर्म न सम्भवतीति सुपीत्येतदिहाभिसंबध्यते। ※हस्तिसूचकयोरिति वक्तव्यम्※। स्तम्बे रमते इति स्तम्बेरमो हस्ती। कर्णे जपतीति कर्णेजपः सूचकः। हस्तिसूचकयोरिति किम्? स्तम्बे रन्ता, कर्णे जपिता मशकः॥

## शमि धातोः संज्ञायाम् ॥ १४ ॥

शम्युपपदे धातुमात्रात्संज्ञायां विषयेऽच प्रत्ययो भवति। शंकरः। शंभवः। शंवदः। धातुग्रहणं किम्, यावता धातोरिति वर्त्तत एव? शमि संज्ञायामिति सिद्धे धातुग्रहणं कृञो हेत्वादिषु टप्रतिषेधार्थम्—शंकरा नाम परिव्राजिका, शंकरा नाम शकुनिका, तच्छीला च॥

---

**अच्-प्रकरणे**—शक्ति, लाङ्गल, अङ्कुश, यष्टि, तोमर, घट, घटी तथा धनुः के उपपद होने पर 'ग्रह' धातु से भी अच् प्रत्यय समझना चाहिए।

**सूत्रे च**—धारण के समुदाय-वाच्य होने से सूत्रोपपदक 'ग्रह' धातु से भी अच् प्रत्यय समझना चाहिए।

**वयसि**—वयस् के गम्यमान होने पर कर्मोपपदक 'हृ' धातु से अच् प्रत्यय होता है।

**आङि**—आङ्पूर्वक कर्मोपपदक 'हृ' धातु से ताच्छील्य के गम्यमान होने पर अच् प्रत्यय होता है।

**अर्हः**—कर्मोपपदक 'अर्ह' धातु से अच् प्रत्यय होता है।

**स्तम्बकर्णयोः**—सुबन्त स्तम्बोपपदक 'रम' तथा सुबन्तकर्णोपपदक 'जप' धातुओं से अच् प्रत्यय होता है।

**हस्ति**—उपर्युक्त 'रम' तथा 'जप' धातुओं से क्रमशः हाथी तथा पिशुन अर्थों में ही अच् प्रत्यय समझना चाहिए।

**शमि**—शमुपपदक धातुमात्र से संज्ञा-विषय में अच् प्रत्यय होता है।

---

(१) अणि सति स्त्रीलिंगे टिड्ढाणञिति ङीप् स्यात्, अचि तु अदन्तत्वात् टाप् प्रवर्तते इति विशेषः प्रकृते। (श्रीना.)

## अधिकरणे शेतेः ॥ १५ ॥

सुपीति संबध्यते । शेतेर्धातोरधिकरणे सुबन्त उपपदेऽच्प्रत्ययो भवति । खे शेते खशयः । गर्तशयः । ॐपार्श्वादिषूपसंख्यानम्ॐ । पार्श्वाभ्यां शेते पार्श्वशयः । उदरशयः । पृष्ठशयः । ॐदिग्धसहपूर्वाच्चॐ । दिग्धेन सह शेते दिग्धसहशयः । ॐउत्तानादिषु कर्त्तृषुॐ । उत्तानः शेते उत्तानशयः । अवमूर्द्धा शेते अवमूर्द्धशयः । ॐगिरौ डश्छन्दसिॐ । गिरौ शेते गिरिशः ॥

## चरेष्टः ॥ १६ ॥

अधिकरण इति वर्त्तते । चरेर्धातोरधिकरणे सुबन्त उपपदे टप्रत्ययो भवति । कुरुषु चरतीति कुरुचरः । मद्रचरः । कुरुचरी । मद्रचरी । प्रत्ययान्तरकरणं ङीबर्थम् ॥

## भिक्षासेनादायेषु च ॥ १७ ॥

अनधिकरणार्थ आरम्भः । भिक्षा, सेना, आदाय इत्येतेषूपपदेषु चरेर्धातोष्टप्रत्ययो भवति । भिक्षाचरः । सेनाचरः । आदायचरः ॥

## पुरोऽग्रतोऽग्रेषु सर्त्तेः ॥ १८ ॥

पुरस्, अग्रतस्, अग्र इत्येतेषूपपदेषु सर्तेर्धातोष्टप्रत्ययो भवति । पुरः सरतीति पुरःसरः । अग्रतःसरः । अग्रेसरः ॥

## पूर्वे कर्त्तरि ॥ १९ ॥

पूर्वशब्दे कर्तृवाचिन्युपपदे सर्त्तेर्धातोष्टप्रत्ययो भवति । पूर्वः सरतीति पूर्वसरः । कर्त्तरीति किम् ? पूर्वं देशं सरतीति पूर्वसारः ॥

## कृञो हेतुताच्छील्यानुलोम्येषु ॥ २० ॥

कर्मण्युपपदे करोतेर्धातोष्टप्रत्ययो भवति हेतौ ताच्छील्ये आनुलोम्ये च गम्यमाने । हेतुरैकान्तिकं कारणम् । ताच्छील्यं तत्स्वभावता । आनुलोम्यमनुकूलता । हेतौ तावत्— शोककरी कन्या, यशस्करी विद्या, कुलकरं धनम् । ताच्छील्ये—श्राद्धकरः, अर्थकरः । आनुलोम्ये-प्रैषकरः, वचनकरः । एतेष्विति किम् ? कुम्भकारः, नागरकारः ॥

## दिवाविभानिशाप्रभाभास्करान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुःषु ॥ २१ ॥

कर्मणि, सुपीति च द्वयमप्यनुवर्त्तते, तत्र यथायोगं सम्बन्धः । दिवादिषूपपदेषु करोते-

---

**अधिकरणे**—अधिकरणोपपदक 'शीङ्' धातु से अच् प्रत्यय होता है ।

**पार्श्वादि**— पार्श्वाद्युपपदक 'शीङ्' धातु से भी अच् प्रत्यय समझना चाहिए ।

**दिग्ध**—दिग्धसहपूर्वक 'शीङ्' धातु से भी अच् प्रत्यय समझना चाहिए ।

**उत्तानादिषु**—कर्तृवाचक उत्तानादिपूर्वक 'शीङ्' धातु से भी अच् प्रत्यय समझना चाहिए ।

**गिरौ**—अधिकरणत्वविशिष्ट गिरिपूर्वक 'शीङ्' धातु से ड प्रत्यय होता है वेद में ।

**चरेष्टः**—अधिकरणत्वविशिष्ट सुबन्तोपपदक 'चर' धातु से ट प्रत्यय होता है ।

**भिक्षा**—भिक्षा, सेना तथा आदाय उपपदों से विशिष्ट 'चर' धातु से भी ट प्रत्यय होता है ।

**पुरोऽग्रतो**—पुरस्, अग्रतस् तथा अग्र के उपपद होने पर 'सृ' धातु से ट प्रत्यय होता है ।

**पूर्वे**—कर्तृवाचकपूर्वशब्दोपपदक 'सृ' धातु से ट प्रत्यय होता है ।

**कृञो**—कर्मोपपदक 'कृ' धातु से ट प्रत्यय होता है हेतु, ताच्छील्य तथा अनुकूलता के गम्यमान होने पर ।

**दिवाविभा**—दिवा, विभा आदि के उपपद होने पर 'कृ' धातु से ट प्रत्यय होता है ।

र्धातोष्टप्रत्ययो भवति । अहेत्वाद्यर्थ आरम्भः । दिवाशब्दोऽधिकरणवचनः सुपीत्यस्य विशेषणम्, दिवा करोति प्राणिनश्चेष्टायुक्तानिति दिवाकरः । विभां करोतीति विभाकरः । निशाकरः । प्रभाकरः । भास्करः; सकारस्य निपातनाद्विसर्जनीयजिह्वामूलीयौ न भवतः । कारकरः । अन्तकरः । अनन्तकरः । आदिकरः । बहुकरः । नान्दीकरः । किंकरः । लिपिकरः । लिबिकरः । बलिकरः । भक्तिकरः । कर्तृकरः । चित्रकरः । चेत्रकरः । संख्या-एककरः, द्विकरः, त्रिकरः । जङ्घाजरः । बाहुकरः । अहस्करः । यत्करः । तत्करः । धनुष्करः । अरुष्करः । ॐकियत्तद्बहुषु कृञोऽज्विधानम्ॐ । किंकरा । यत्करा । तत्करा । बहुकरा । अथ वाऽजादिषु पाठः(१) करिष्यते ॥

## कर्मणि भृतौ ॥ २२ ॥

कर्मणीति स्वरूपग्रहणम् । कर्मवाचिनि कर्मशब्द उपपदे करोतेष्टप्रत्ययो भवति भृतौ गम्यमानायाम् । भृतिर्वेतनम् । कर्म करोतीति कर्मकरः । भृतक इत्यर्थः । भृताविति किम् ? कर्मकारः ॥

## न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ॥ २३ ॥

शब्दादिषूपपदे करोतेष्टप्रत्ययो न भवति । हेत्वादिषु प्राप्तः प्रतिषिध्यते । शब्दकारः । श्लोककारः । कलहकारः । गाथाकारः । वैरकारः । चाटुकारः । सूत्रकारः । मन्त्रकारः । पदकारः ॥

## स्तम्बशकृतोरिन् ॥ २४ ॥

स्तम्ब, शकृत् इत्येतयोः कर्मणोरुपपदयोरिन् प्रत्ययो भवति । ॐव्रीहिवत्सयोरिति वक्तव्यम्ॐ । स्तम्बकरिर्व्रीहिः । शकृत्करिर्वत्सः । व्रीहिवत्सयोरिति किम् ? स्तम्बकारः । शकृत्कारः ॥

## हरतेर्दृतिनाथयोः पशौ ॥ २५ ॥

दृति, नाथ इत्येतयोः कर्मणोरुपपदयोः हरतेर्धातोः पशौ कर्तरि इन् प्रत्ययो भवति । दृतिं हरति दृतिहरिः पशुः । नाथहरिः पशुः । पशाविति किम् ? दृतिहारः, नाथहारः ॥

## फलेग्रहिरात्मम्भरिश्च ॥ २६ ॥

फलेग्रहिः, आत्मम्भरिः इत्येतौ शब्दौ निपात्येते । फलशब्दस्य उपपदस्यैकारान्तत्व-

---

**कियत्तद्**—किम्, यत्, तत् तथा बहु शब्दों के उपपद होने पर 'कृ' धातु से अच् प्रत्यय अवगन्तव्य है ।

**कर्मणि**—क्रियावाचक कर्मशब्द के उपपद होने पर 'कृ धातु से ट प्रत्यय होता है भृति( सेवा) के गम्यमान होने पर ।

**न शब्द**—शब्द, श्लोक आदि के उपपद होने पर 'कृ' धातु से ट प्रत्यय नहीं होता है ।

**स्तम्ब**—स्तम्ब तथा शकृत् के उपपद होने पर 'कृ' धातु से इन् प्रत्यय होता है ।

**व्रीहि**—क्रमशः व्रीहि तथा वत्स अर्थों में ही उक्त प्रत्यय अवगन्तव्य है ।

**हरतेः**—कर्मत्वविशिष्ट दृति तथा नाथ के उपपद होने पर 'हृ' धातु से इन् प्रत्यय होता है कर्तृत्वविशिष्ट पशु की वाच्यता में ।

**फलेग्रहि**—'फलेग्रहि' तथा 'आत्मम्भरि' आदि शब्द निपातित होते हैं ।

---

(१) तथा च अजादिगणपाठादेव स्त्रियां टापि सिद्धे पुनः टित्वप्रयुक्तङीबभावार्थम् टस्थानेऽज्विधानमनावश्यकम् एवेति भावः । ( श्रीना. )

मिन् प्रत्ययश्च ग्रहेर्निपात्यते—फलानि गृह्णातीति फलेग्रहिर्वृक्षः। आत्मन्शब्दस्य उपपदस्य मुमागम इन् प्रत्ययश्च भृञो निपात्यते—आत्मानं बिभर्ति आत्मम्भरिः। अनुक्तसमुच्चयार्थश्चकारः—कुक्षिम्भरिः, उदरम्भरिः॥

## छन्दसि वनसनरक्षिमथाम् ॥ २७ ॥

'वन षण संभक्तौ', रक्ष पालने', 'मथे विलोडने' इत्येतेभ्यः कर्मण्युपपदे छन्दसि विषये इन् प्रत्ययो भवति। ब्रह्मवनिं त्वा क्षत्रवनिम्। गोसनिं यौ पथिरक्षी श्वानौ। हविर्मथीनाम्॥

## एजेः खश्॥ २८ ॥

'एजृ कम्पने' इत्यस्माण्ण्यन्तात्कर्मण्युपपदे खश् प्रत्ययो भवति। खकारो मुमर्थः। शकारः सार्वधातुकसंज्ञार्थः। अङ्गमेजयति अङ्गमेजयः। जनमेजयः। ❁खश्प्रत्यये(१) वातशुनीतिलशर्द्धेष्वजधेट्तुदजहातीनामुपसंख्यानम्❁। वातमजा मृगाः। शुनिन्धयः। तिलन्तुदः। शर्द्धञ्जहा माषाः॥

## नासिकास्तनयोर्ध्माधेटोः॥ २९ ॥

नासिकास्तनयोः कर्मणोरुपपदयोर्ध्माधेटोर्धात्वोः खश्प्रत्ययो भवति। यथासंख्यमत्र नेष्यते। ❁स्तने धेटः❁। स्तनन्धयः। ❁नासिकायां तु ध्मश्च धेटश्च❁। नासिकन्धमः। नासिकंधयः। तच्चैतन्नासिकास्तनयोरिति लक्षणव्यभिचारचिह्नादल्पाच्तरस्यापूर्वनिपातनाल्लभ्यते। धेटष्टित्वात् स्त्रियां ङीप् प्रत्ययो भवति—स्तनन्धयी॥

## नाडीमुष्टयोश्च॥ ३० ॥

नाडी, मुष्टि इत्येतयोः कर्मणोरुपपदयोर्ध्माधेटोः खश् प्रत्ययो भवति। अत्रापि घ्यन्तस्यापूर्वनिपातो लक्षणव्यभिचारचिह्नम्, तेन संख्यातानुदेशो न भवति। नाडिन्धमः। मुष्टिन्धमः। नाडिन्धयः। मुष्टिन्धयः। अनुक्तसमुच्चयार्थश्चकारः—घटिन्धमः, घटिन्धयः; खारिन्धयः(२), खारिन्धमः; वातन्धमः पर्वतः, वातन्धयः॥

---

छन्दसि—कर्मोपपदक 'वन', 'सन', 'रक्ष्' तथा 'मथ्' धातुओं से इन् प्रत्यय होता है वेद में।

एजेः—कर्मोपपदक 'एज्' धातु से खश् प्रत्यय होता है।

खश्प्रत्यये—कर्मत्वविशिष्ट वात, शुनी, तिल तथा शर्द के उपपद होने पर क्रमशः 'अज', 'धेट्', 'तुद' तथा 'ओहाक्' धातुओं से खश् प्रत्यय का प्रतिपादन करना चाहिए।

नासिका—कर्मत्वविशिष्ट नासिका तथा स्तन के उपपद होने पर 'ध्मा' तथा 'धेट्' धातुओं से खश् प्रत्यय होता है।

स्तने—स्तन के उपपद होने पर 'धेट्' धातु से ही खश् प्रत्यय समझना चाहिए।

नासिकायाम्—नासिका के उपपद होने पर 'ध्मा' तथा 'धेट्' इन दोनों धातुओं से ही खश् प्रत्यय समझना चाहिए।

नाडी—कर्मत्वविशिष्ट नाडी तथा मुष्टि के उपपद होने पर 'ध्मा' तथा 'धेट्' धातुओं से खश् प्रत्यय होता है।

---

(१) खश्प्रकरणे इति क्वचित्।

(२) खरिन्धम इति क्वचित्।

## उदि कूले रुजिवहोः ॥ ३१ ॥

'रुजो भंगे', 'वह प्रापणे' इत्येताभ्यामुत्पूर्वाभ्यां कूले कर्मण्युपपदे खश् प्रत्ययो भवति। कूलमुद्रुजतीति कूलमुद्रुजो रथः। कूलमुद्वहः॥

## वहाभ्रे लिहः ॥ ३२ ॥

वह, अभ्र इत्येतयोः कर्मणोरुपपदयोः लिहेर्धातोः खश् प्रत्ययो भवति। वहं लेढीति वहंलिहो गौः। अभ्रंलिहो वायुः॥

## परिमाणे पचः ॥ ३३ ॥

परिमाणं प्रस्थादि, तस्मिन् कर्मण्युपपदे पचेः खश् प्रत्ययो भवति। प्रस्थं पचति प्रस्थंपचा स्थाली। द्रोणम्पचः। खारिम्पचः कटाहः॥

## मितनखे च ॥ ३४ ॥

मित, नख इत्येतयोः कर्मणोरुपपदयोः पचेः खशप्रत्ययो भवति। अपरिमाणार्थ आरम्भः। मितं पचति मितम्पचा ब्राह्मणी। नखम्पचा यवागूः॥

## विध्वरुषोस्तुदः ॥ ३५ ॥

विधु, अरुस् इत्येतयोः कर्मणोरुपपदयोः तुदेर्धातोः खशप्रत्ययो भवति। विधुन्तुदो राहुः। अरुन्तुदः॥

## असूर्यललाटयोर्दृशितपोः ॥ ३६ ॥

असूर्य, ललाट इत्येतयोः कर्मणोरुपपदयोः दृशितपोर्धात्वोः खशप्रत्ययो भवति। असूर्यम्पश्या राजदाराः। ललाटन्तप आदित्यः। असूर्य इति चासमर्थसमासोऽयम्, दृशिना नञः सम्बन्धात्। सूर्यं न पश्यन्तीति। गुप्तिपरं चैतत्—एवं नाम गुप्ता यदपरिहार्यदर्शनं सूर्यमपि न पश्यन्तीति॥

## उग्रम्पश्येरम्मदपाणिन्धमाश्च ॥ ३७ ॥

उग्रम्पश्य, इरम्मद, पाणिन्धम इत्येते शब्दा निपात्यन्ते। उग्रं पश्यतीत्युग्रम्पश्यः। इरया माद्यतीतीरम्मदः। पाणयो ध्मायन्ते एष्विति पाणिन्धमाः पन्थानः॥

## प्रियवशे वदः खच् ॥ ३८ ॥

प्रिय, वश इत्येतयोः कर्मणोरुपपदयोर्वदेर्धातोः खच् प्रत्ययो भवति। प्रियं वदतीति

---

**उदि कूले**—कर्मत्वविशिष्ट कूल के उपपद होने पर उत्पूर्वक 'रुज्' तथा 'वह' धातुओं से खश् प्रत्यय होता है।

**वहाभ्रे**—कर्मत्वविशिष्ट वह तथा अभ्र के उपपद होने पर 'लिह' धातु से खश् प्रत्यय होता है।

**परिमाणे**—कर्मत्वविशिष्ट परिमाणवाचक पदों के उपपद होने पर 'पच' धातु से खश् प्रत्यय होता है।

**मितनखे**—कर्मत्वविशिष्ट मित तथा नख के उपपद होने पर 'पच' धातु से खश् प्रत्यय होता है।

**विध्वरु**—कर्मत्वविशिष्ट विधु तथा अरुस् के उपपदत्व में 'तुद' धातु से खश् प्रत्यय होता है।

**असूर्य**—कर्मत्वविशिष्ट असूर्य तथा ललाट शब्दों के उपपद होने पर क्रमशः 'दृश' तथा 'तप' धातुओं से खश् प्रत्यय होता है।

**उग्रम्पश्ये**—'उग्रम्पश्य', 'इरम्मद' एवम् 'पाणिन्धम' शब्दों का निपातन है।

**प्रिय**—कर्मत्वविशिष्ट प्रिय तथा वश के उपपदत्व में 'वद' धातु से खश् प्रत्यय होता है।

प्रियंवदः । वशंवदः । चकारः "खचि ह्रस्वः" इति विशेषणार्थः । खकारो मुमर्थः । प्रत्ययान्तरकरणमुत्तरार्थम् ॥ ॐखच्प्रकरणे गमेः सुप्युपसंख्यानम्ॐ । मितंगमो हस्ती । मितंगमा हस्तिनी । ॐविहायसो विह च(१)ॐ । विहायसा गच्छति विहंगमः । ॐखच्च डिद्वा वक्तव्यःॐ । विहंगः । विहंगमः । ॐडे च विहायसो विहादेशो वक्तव्यःॐ । विहगः ॥

## द्विषत्परयोस्तापेः ॥ ३९ ॥

द्विषत्परयोः कर्मणोरुपपदयोस्तापेर्धातोः खच् प्रत्ययो भवति । 'तप दाहे' चुरादिः, 'तप सन्तापे' भ्वादिः, द्वयोरपि ग्रहणम् । द्विषन्तं तापयति द्विषन्तपः । परन्तपः । द्विषत्परयोरिति द्वितकारको निर्देशः, तेन स्त्रियां न भवति—द्विषतीं तापयति द्विषतीतापः ॥

## वाचि यमो व्रते ॥ ४० ॥

वाक्शब्दे कर्मण्युपपदे यमेर्धातोः खच् प्रत्ययो भवति व्रते गम्यमाने । व्रत इति शास्त्रतो नियम उच्यते । वाचंयम आस्ते । व्रत इति किम् ? वाग्यामः ॥

## पूःसर्वयोर्दारिसहोः ॥ ४१ ॥

पुर् , सर्व इत्येतयोः कर्मणोरुपपदयोर्यथासंख्यं दारिसहोर्धात्वोः खच प्रत्ययो भवति । पुरं दारयति पुरंदरः । सर्वंसहो राजा । ॐभगे च दारेरिति वक्तव्यम् । भगन्दरः ॥

## सर्वकूलाभ्रकरीषेषु कषः ॥ ४२ ॥

सर्व, कूल, अभ्र, करीष इत्येतेषु कर्मसूपपदेषु कषेर्धातोः खच् प्रत्ययो भवति । सर्वं कषति सर्वंकषः खलः । कूलंकषा नदी । अभ्रंकषो गिरिः । करीषंकषा वात्या ॥

---

**खच्प्रकरणे**—सुबन्तोपपदक 'गम्' धातु से भी खच् प्रत्यय समझना चाहिए ।

**विहायसो**—विहायस् उपपदक 'गम्' धातु से खच् प्रत्यय तथा विहायस् को विह आदेश भी समझना चाहिए ।

**खच्च**—विहायस्पूर्वक 'गम्' धातु से विहित खच् प्रत्यय को विकल्प से डित् भी समझना चाहिए ।

**डे च**—विहायस् उपपदक 'गम्' धातु से विहित ड प्रत्यय के परे भी विहायस् को विह आदेश होता है ।

**द्विषत्**—कर्मत्वविशिष्ट द्विषत् तथा पर शब्दों के उपपदत्व में 'तप' धातु से खच् प्रत्यय होता है ।

**वाचि**—कर्मत्वविशिष्ट वाक्शब्द के उपपदत्व में 'यम' धातु से व्रत के गम्यमान होने पर खच् प्रत्यय होता है ।

**पूःसर्वयोः**—कर्मत्वविशिष्ट पुर् तथा सर्व शब्दों के उपपदत्व में क्रमशः 'दारि' तथा 'सह' धातुओं के खच् प्रत्यय होता है ।

**भगे च**—कर्मत्वविशिष्ट भग शब्द के उपपदत्व में भी 'दारि' धातु से खच् प्रत्यय समझना चाहिए ।

**सर्व**—कर्मत्वविशिष्ट सर्व, कूल, अभ्र तथा करीष के उपपद होने पर 'कष' धातु से खच् प्रत्यय होता है ।

---

(१) विहश्च इति क्वचित् ।

## मेघर्त्तिभयेषु कृञः ॥ ४३ ॥

मेघ, ऋति, भय इत्येतेषु कर्मसूपपदेषु कृञः खच् प्रत्ययो भवति। मेघंकरः। ऋतिंकरः। भयंकरः। ॐउपपदविधौ भयादिग्रहणं तदन्तविधिं प्रयोजयतिॐ। अभयंकरः॥

## क्षेमप्रियमद्रेऽण् च ॥ ४४ ॥

क्षेम, प्रिय, मद्र इत्येतेषु करोतेरण् प्रत्ययो भवति चकारात्खच्च। क्षेमकारः। क्षेमंकरः। प्रियकारः। प्रियंकरः। मद्रकारः। मद्रंकरः। वेति वक्तव्ये पुनरणग्रहणं हेत्वादिषु टप्रतिषेधार्थम्॥

## आशिते भुवः करणभावयोः ॥ ४५ ॥

अत्र सुपीत्युपतिष्ठते। आशितशब्दे सुबन्ते उपपदे भवतेर्धातोः करणे भावे चार्थे खच् प्रत्ययो भवति। आशितो भवत्यनेन आशितभव ओदनः। भावे—आशितस्य भवनम् आशितंभवं वर्त्तते॥

## संज्ञायां भृतॄवृजिधारिसहितपिदमः ॥ ४६ ॥

कर्मणीति सुपीति च प्रकृतं संज्ञावशाद्यथासंभवं संबध्यते। भृ, तॄ, वृ, जि, धारि, सहि, तपि, दम इत्येतेभ्यो धातुभ्यः संज्ञायां विषये खच्प्रत्ययो भवति। विश्वंभरा वसुन्धरा। रथंतरं साम। पतिंवरा कन्या। शत्रुंजयो हस्ती। युगंधरः पर्वतः। शत्रुंसहः। शत्रुंतपः। अरिंदमः। संज्ञायामिति किम्? कुटुम्बं बिभर्त्तीति कुटुम्बभारः(१)॥

## गमश्च ॥ ४७ ॥

गमेर्धातोः सुप्युपपदे संज्ञायां विषये खच्प्रत्ययो भवति। सुतंगमो नाम, यस्य (२)पुत्त्रः सौतंगमिः। योगविभाग उत्तरार्थः॥

## अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ॥ ४८ ॥

संज्ञायामिति नानुवर्त्तते। अन्त, अत्यन्त, अध्वन्, दूर, पार, सर्व, अनन्त इत्येतेषु कर्मसूपपदेषु गमेर्डप्रत्ययो भवति। अन्तगः। अत्यन्तगः। अध्वगः। दूरगः। पारगः।

---

**मेघर्त्ति**—कर्मत्वविशिष्ट मेघ, ऋति तथा भय शब्दों के उपपदत्व में 'कृञ्' धातु से खच् प्रत्यय होता है।

**उपपद**—उपपदनिमित्तक विधि में भयादि उपपद में तदन्तविधि भी समझनी चाहिए।

**क्षेम**—कर्मत्वविशिष्ट क्षेम, प्रिय तथा मद्र के उपपदत्व में 'कृञ्' धातु से अण् प्रत्यय होता है।

**आशिते**—सुबन्त आशित शब्द के उपपद होने पर करण तथा भाव अर्थों में 'भू' धातु से खच प्रत्यय होता है।

**संज्ञायाम**—कर्मत्वविशिष्ट अथवा सुबन्तमात्र के उपपद होने पर 'भृ', 'तॄ', 'वृ', 'जि', 'धृ', 'सह', 'तप्' तथा 'दम' धातुओं से संज्ञाविषय में खच् प्रत्यय होता है।

**गमश्च**—सुबन्तोपपदक 'गम्' धातु से भी खच् प्रत्यय होता है।

**अन्तात्यन्ता**—कर्मत्वविशिष्ट अन्त, अत्यन्त, अध्वन्, दूर, पार, सर्व तथा अनन्त शब्दों के उपपदत्व में 'गम्' धातु से ड प्रत्यय होता है।

---

(१) कुद्दालं बिभर्ति कुद्दालभारः इत्यपि क्वचित्।

(२) न्यासे पुत्रशब्दस्य सौतंगमिशब्दानन्तरं पाठः। यथाश्रुतेऽपि पुत्रशब्दस्य तेनैव सम्बन्धः—यस्य पुत्रः सौतंगमिः स सुतंगमो नामेति।

सर्वगः। अनन्तगः। डकारष्टिलोपार्थः, डित्यभस्याप्यनुबन्धकरणसामर्थ्यादिति। ❀डप्रकरणे सर्वत्रपन्नयोरुपसंख्यानम्❀। सर्वत्रगः। पन्नगः। ❀उरसो लोपश्च❀। उरसा गच्छतीत्युरगः। ❀सुदुरोरधिकरणे❀। सुखेन गच्छत्यस्मिन्निति सुगः। दुर्गः। ❀निरो देशे❀। निर्गो देशः। अपर आह—❀डप्रकरणेऽन्येष्वपि(१)दृश्यत इति❀। स्त्र्यगारगः। ग्रामगः। गुरुतल्पगः॥

## आशिषि हनः॥ ४९॥

ड इति वर्त्तते। आशिषि गम्यमानायां हन्तेर्धातोः कर्मण्युपपदे डप्रत्ययो भवति। तिमिं वध्यात्तिमिहः। शत्रुहः। आशिषीति किम्? शत्रुघातः। ❀दारावाहनोऽणन्तस्य च टः संज्ञायाम्❀। दारावुपपदे आङ्पूर्वाद्धन्तेरण् प्रत्ययो भवति अन्तस्य च टकारादेशो भवति संज्ञायां विषये। दारु आहन्ति दार्वाघाटः। ❀चारौ वा❀। आङ्पूर्वाद्धन्तेश्चारावुपपदेऽण् अन्तस्य वा टकारादेशः। चार्वाघाटः। चार्वाघातः। ❀कर्मणि च❀। कर्मण्युपपदे संपूर्वाद्धन्तेरण्प्रत्ययोऽन्तस्य च वा टकारादेशः। वर्णान् संहन्ति वर्णसंघाटः, वर्णसंघातः। पदानि संहन्ति पदसंघाटः, पदसंघातः॥

## अपे क्लेशतमसोः॥ ५०॥

अपपूर्वाद्धन्तेः क्लेशतमसोः कर्मणोरुपपदयोर्डप्रत्ययो भवति। क्लेशापहः पुत्रः। तमोपहः सूर्यः। अनाशीरर्थ आरम्भः॥

## कुमारशीर्षयोर्णिनिः॥ ५१॥

हन इति वर्त्तते। कुमार, शीर्ष इत्येतयोरुपपदयोः हन्तेर्णिनिः प्रत्ययो भवति। कुमारघाती। शीर्षघाती। निपातनाच्छिरसः शीर्षभावः॥

---

**डप्रकरणे**—सर्वत्र तथा सुबन्त पन्न शब्दों के उपपदत्व में भी 'गम्' धातु से ड प्रत्यय समझना चाहिए।

**उरसो**—सुबन्त उरस् के उपपदत्व से 'गम्' धातु से ड प्रत्यय तथा उरस् के सकार का लोप भी समझना चाहिए।

**सुदुरोरधि**—सु तथा दुर् के उपपदत्व में 'गम्' धातु से अधिकरण के गम्यमान होने पर ड प्रत्यय होता है।

**निरो**—निर्‌के उपपदत्व में 'गम्' धातु से देश अर्थ में ड प्रत्यय होता है।

**डप्रकरणे**—अन्यान्य शब्दों के उपपदत्व में भी ड प्रत्यय देखा जाता है (ऐसा कुछ आचार्यों का मत है)।

**आशिषि**—कर्मत्वविशिष्टोपपदक 'हन्' धातु से आशीः अर्थ में ड प्रत्यय होता है।

**दारावाहनो**—दारु शब्द के उपपदत्व में आङ्पूर्वक 'हन्' धातु से अण् प्रत्यय तथा अन्त को ट आदेश हो जाता है संज्ञाविषय में।

**चारौ वा**—चारु शब्द के उपपदत्व में आङ्पूर्वक 'हन्' धातु से अण् प्रत्यय तथा टकार अन्तादेश हो जाता है।

**कर्मणि**—कर्मकारक के उपपदत्व में सम्पूर्वक 'हन्' धातु से अण् प्रत्यय तथा टकार अन्तादेश हो जाता है।

**अपे**—कर्मत्वविशिष्ट क्लेश तथा तमस् के उपपद होने पर अपिपूर्वक 'हन्' धातु से ड प्रत्यय होता है।

**कुमार**—कुमार तथा शीर्ष के उपपद होने पर 'हन्' धातु से णिनि प्रत्यय होता है।

---

(१) अन्यत्रापि इत्यपि पाठः।

## लक्षणे जायापत्योष्टक् ॥ ५२ ॥

हन्तेर्जायापत्योः कर्मणोरुपपदयोर्लक्षणवति कर्त्तरि टक् प्रत्ययो भवति। जायाघ्नो ब्राह्मणः। पतिघ्नी वृषली। अथ वा लक्षणे द्योत्ये टक्प्रत्ययः॥

## अमनुष्यकर्तृके च ॥ ५३ ॥

अमनुष्यकर्तृके वर्त्तमानाद्धन्तेर्धातोः कर्मण्युपपदे टक् प्रत्ययो भवति। जायाघ्नस्तिलकालकः। पतिघ्नी पाणिरेखा। श्लेष्मघ्नं मधु। पित्तघ्नं घृतम्। अमनुष्यकर्तृके इति किम्? आखुघातः शूद्रः। इह कस्मान्न भवति—चौरघातो हस्ती? "कृत्यल्युटो बहुलम्" इति बहुलवचनादण् भवति॥

## शक्तौ हस्तिकपाटयोः ॥ ५४ ॥

शक्तौ गम्यमानायां हस्तिकपाटयोः कर्मणोरुपपदयोर्हन्तेष्टक् प्रत्ययो भवति। मनुष्यकर्तृकार्थ आरम्भः। हस्तिनं हन्तुं शक्तः हस्तिघ्नो मनुष्यः। कपाटघ्नश्चोरः। शक्ताविति किम्? विषेण हस्तिनं हन्ति—हस्तिघातः॥

## पाणिघताडघौ शिल्पिनि ॥ ५५ ॥

पाणिघ, ताडघ इत्येतौ शब्दौ निपात्येते शिल्पिनि कर्तरि। पाणि, ताड इत्येतयोः कर्मणोरुपपदयोर्हन्तेर्धातो कः प्रत्ययो भवति, तस्मिंश्च परतो हन्तेष्टिलोपो घत्वं च निपात्यते(१)। पाणिघः। ताडघः। शिल्पनीति किम्? पाणिघातः, ताडघातः। ॐराजघ उपसंख्यानम्ॐ। राजानं हन्ति राजघः॥

## आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ॥ ५६ ॥

आढ्यादिषु कर्मसूपपदेषु च्व्यर्थेष्वच्व्यन्तेषु करोतेर्धातोः करणे कारके ख्युन्प्रत्ययो भवति। च्वेर्विकल्पेन विधानाद् द्विविधाश्च्व्यर्थाः—च्व्यन्ता अच्व्यन्ताश्च। तत्र च्व्यन्ताः पर्युदस्यन्ते। अनाढ्यमाढ्यं कुर्वन्त्यनेन आढ्यंकरणम्। सुभगंकरणम्। स्थूलंकरणम्। पलितंकरणम्। नग्नंकरणम्। अन्धंकरणम्। प्रियंकरणम्। च्व्यर्थेष्विति किम्? आढ्यं तैलेन कुर्वन्ति। अभ्यञ्जयन्तीत्यर्थः। प्रकृतेरविवक्षायामभूतप्रादुर्भावेऽपि प्रत्युदाहरणं

---

**लक्षणे**—कर्मत्वविशिष्ट जाया तथा पति शब्द के उपपद होने पर 'हन्' धातु से लक्षणवान् कर्त्ता अर्थ में टक् प्रत्यय होता है।

**अमनुष्य**—अमनुष्यकर्त्तृक अर्थ में वर्त्तमान 'हन्' धातु से कर्म के उपपद होने पर टक् प्रत्यय होता है।

**शक्तौ**—कर्मत्वविशिष्ट हस्तिन् तथा कपाट के उपपदत्व में 'हन्' धातु से शक्ति के गम्यमान होन पर टक् प्रत्यय होता है।

**पाणिघ**—कर्मत्वविशिष्ट पाणि तथा ताड शब्द के उपपदत्व में 'हन्' धातु से क प्रत्यय, 'हन्' धातु के टि का लोप तथा घत्व का निपातन है।

**राजघ**—'राजघ' शब्द का भी निपातन प्रतिपादनीय है।

**आढ्य**—च्व्यर्थ में वर्त्तमान परन्तु च्विप्रत्ययरहित कर्मत्वविशिष्ट आढ्य, सुभग, स्थूल, पतित, नग्न, अन्ध तथा प्रिय शब्दों के उपपदत्व में 'कृञ्' धातु से करण अर्थ में ख्युन् प्रत्यय होता है,

---

(१) पाणि, ताड इत्यादि निपात्यते इत्यन्तमन्यत्र नास्ति।

भवति। अच्वाविति किम्? आढ्यीकुर्वन्त्यनेन। ननु च ख्युना मुक्ते ल्युटा भवितव्यम्, न च ल्युटः ख्युनश्च विशेषोऽस्ति, तत्र किं प्रतिषेधेन? एवं तर्हि प्रतिषेधसामर्थ्यात् ख्युन्यसति ल्युडपि न भवति, तेन ल्लुटोऽप्ययमर्थतः प्रतिषेधः। उत्तरार्थश्च च्विप्रतिषेधः क्रियते॥

## कर्त्तरि भुवः खिष्णुच्खुकञौ ॥ ५७ ॥

आढ्यादिषु सुबन्तेषूपपदेषु च्व्यर्थेष्वच्व्यन्तेषु भवतेर्धातोः कर्तरि कारके खिष्णुच्, खुकञ् इत्येतौ प्रत्ययौ भवतः। अनाढ्य आढ्यो भवति आढ्यंभविष्णुः, आढ्यंभावुकः। सुभगंभविष्णुः, सुभगंभावुकः। स्थूलंभविष्णुः, स्थूलंभावुकः। पलितंभविष्णुः, पलितंभावुकः। नग्नंभविष्णुः, नग्नंभावुकः। अन्धंभविष्णुः, अन्धंभावुकः। प्रियंभविष्णुः, प्रियंभावुकः। कर्तरीति किम्? करणे मा भूत्। च्व्यर्थेष्वित्येव—आढ्यो भविता। अच्वाविल्येव—आढ्यीभविता॥

उदात्तत्वाद् भुवः सिद्धमिकारादित्वमिष्णुचः।
नञस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्यते॥

## स्पृशोऽनुदके क्विन् ॥ ५८ ॥

स्पृशेर्धातोरनुदके सुबन्त उपपदे क्विन्प्रत्ययो भवति। ननु सकर्मकत्वात्स्पृशेः कर्मैवोपपदं प्राप्नोति? नैष दोषः, कर्तरीति पूर्वसूत्रादनुवर्त्तते, तत्कर्तृप्रचयार्थं विज्ञायते—सुबन्तमात्रे चोपपदे कर्तृप्रचयो लभ्यते। घृतं स्पृशति घृतस्पृक्। मन्त्रेण स्पृशति मन्त्रस्पृक्। जलेन स्पृशति जलस्पृक्। अनुदकस्पर्शः। नकारः "क्विन्प्रत्ययस्य कुः" इति विशेषणार्थः।

## ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ॥ ५९ ॥

ऋत्विगादयः पञ्च शब्दाः क्विन्प्रत्ययान्ता निपात्यन्ते। अपरे त्रयो धातवो निर्दिश्यन्ते। ऋतुशब्द उपपदे यजेर्धातोः क्विन् प्रत्ययो निपात्यते—ऋतौ यजति, ऋतुं वा यजति, ऋतुप्रयुक्तो वा यजति ऋत्विक्। रूढिरेषा यथाकथंचिदनुगन्तव्या। धृषेः क्विन् प्रत्ययो द्विर्वचनमन्तोदात्तत्वं च निपात्यते-धृष्णोतीति दधृक्। सृजेः कर्मणि क्विन् अमागमश्च निपात्यते—सृजन्ति तामिति स्रक्। दिशेः कर्मणि क्विन्निपात्यते—दिशन्ति तामिति दिक्। उत्पूर्वात्स्निहेः क्विन्नुपसर्गान्तलोपः षत्वं च निपात्यते-उष्णिक्। अञ्चु, युजि, क्रुञ्च इत्येतेषां धातूनां क्विन् प्रत्ययो भवति। निपातनैः सह निर्देशादत्रापि किञ्चिदलाक्षणिकं कार्यमस्ति। अञ्चतेः सुबन्तमात्र उपपदे क्विन्प्रत्ययो भवति—प्राङ्, प्रत्यङ्, उदङ्। युजेः क्रुञ्चेश्च केवलादेव-युङ्, युञ्जौ, युञ्जः। सोपपदात्तु "सत्सूद्विष" इत्यादिना क्विप् भवति-अश्वयुक्, अश्वयुजौ, अश्वयुजः। क्रुङ्, क्रुञ्चौ, क्रुञ्चः। नलोपः कस्मान्न भवति? निपातनसाहचर्यात्॥

## त्यदादिषु दृशोऽनालोचने कञ् च ॥ ६० ॥

त्यदादिषूपपदेषु दृशेर्धातोरनालोचनेऽर्थे वर्तमानात् कञ् प्रत्ययो भवति चकारा-

---

कर्त्तरि—च्व्यर्थ में वर्त्तमान परन्तु च्विप्रत्ययरहित सुबन्त आढ्य आदि के उपपदत्व में 'भू' धातु से कर्त्ता में खिष्णुच् तथा खुकञ् प्रत्यय होते हैं।

स्पृशोऽनुदके—उदकभिन्न सुबन्त के उपपद होने पर 'स्पृश्' धातु से क्विन् प्रत्यय होता है।

ऋत्विग्दधृक्—ऋत्विक् आदि पाँच क्विन्प्रत्ययान्त शब्दों का निपातन तथा सुबन्तोपपदक 'अञ्चू', 'युज' तथा 'क्रुञ्च' धातुओं से क्विन् प्रत्यय होता है।

त्यदादिषु—त्यदादि के उपपदत्व में अनालोचन अर्थ में वर्त्तमान 'दृश्' धातु से कञ् तथा क्विन् प्रत्यय होते हैं।

क्विन् च । त्यादृक् । त्यादृशः । तादृक् । तादृशः । यादृक् । यादृशः । कञो (१)ञकारो विशेषणार्थः-"ठक् ठञ् कञ्" इति । अनालोचन इति किम् ? तं पश्यति तद्दर्शः । तादृगादयो (२)हि रूढिशब्दप्रकाराः, नैवात्र दर्शनक्रिया विद्यते । ॐसमानान्ययोश्चेति वक्तव्यम्ॐ। सदृक् । सदृशः । अन्यादृक् । अन्यादृशः । ॐदृशेः क्सश्च वक्तव्यःॐ । यादृक्षः । तादृक्षः । अन्यादृक्षः । कीदृक्षः ॥

## सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ॥६१॥

सुपीत्यनुवर्त्तते । कर्मग्रहणं तु "स्पृशोऽनुदके क्विन्" इत्यतः प्रभृति न व्याप्रियते। सदादिभ्यो धातुभ्यः सुबन्त उपपदे उपसर्गेऽप्यनुपसर्गेऽपि क्विप्प्रत्ययो भवति । उपसर्गग्रहणं ज्ञापनार्थम्-अन्यत्र सुब्ग्रहणे उपसर्गग्रहणं न भवतीति, "वदः सुपि क्यप् च" इति । 'सू' इति द्विषा साहचर्यात् सूतेरादादिकस्य ग्रहणं न सुवतेस्तौदादिकस्य । 'युजिर् योगे', 'युज समाधौ', द्वयोरपि ग्रहणम् । "विद ज्ञाने', 'विद सत्तायाम्', 'विद विचारणे', त्रयाणामपि ग्रहणम् , न लाभार्थस्य विदेः, अकारस्य विवक्षितत्वात् । सत्-शुचिषत् , अन्तरिक्षसत् , उपसत् । सू-अण्डसूः , शतसूः, प्रसूः । द्विष-मित्रद्विट् , प्रद्विट् । द्रुह-मित्रध्रुक् , प्रध्रुक् । दुह-गोधुक् , प्रधुक् । युज्-अश्वयुक् , प्रयुक् । विद-वेदवित् , प्रवित् , ब्रह्मवित् । भिद—काष्ठभित् , प्रभित । छिद्—रज्जुच्छिद् , प्रच्छिद् । जि-शत्रुजित् , प्रजित् । नी-सेनानीः, प्रणीः, ग्रामणीः, अग्रणीः । कथमत्र णत्वम् ? "स एषां ग्रामणीः" इति निपातनात् । नयतेः "पूर्वपदात् संज्ञायामगः" इति णत्वम् । राज-राट् , विराट् , सम्राट् । "मो राजि समः क्वौ" इति मत्वम् । "अन्येभ्योऽपि दृश्यते", "क्विप् च" इति सामान्येन वक्ष्यति, तस्यैवायं प्रपञ्चः ॥

## भजो ण्विः ॥ ६२ ॥

उपसर्गे सुपीति वर्त्तते । भजेर्धातोः सुबन्त उपपदे उपसर्गेऽप्यनुपसर्गेऽपि ण्विप्रत्ययो भवति । अर्धं भजते अर्द्धभाक् । उपसर्गेऽपि-प्रभाक् ॥

## छन्दसि सहः ॥ ६३ ॥

उपसर्गे सुपीत्येव । छन्दसि विषये सहेर्धातोः सुबन्त उपपदे ण्विप्रत्ययो भवति । (३)तुराषाट् । "सहेः साडः सः" इति षत्वम्, "अन्येषामपि दृश्यते" इति दीर्घत्वम् ॥

---

**समानान्य**—समान तथा अन्य शब्दों के उपपद होने पर भी उपर्युक्त दोनों प्रत्यय होते हैं—ऐसा समझना चाहिए ।

**दृशेः**—त्यदादि के उपपद होने पर 'दृश्' धातु से क्स प्रत्यय भी समझना चाहिए ।

**सत्सूद्विष**—उपसर्गात्मक अथवा अनुपसर्गात्मक सुबन्त के उपपद होने पर 'सद्', 'सू', 'द्विष', 'द्रुह', 'दुह', 'युज्', 'विद्', 'भिद्', 'छिद्', 'जि', 'नी' तथा 'राजृ' धातुओं से क्विप् प्रत्यय होता है ।

**भजो**—उपसर्गात्मक अथवा अनुपसर्गात्मक सुबन्त के उपपदत्व में 'भज' धातु से ण्वि प्रत्यय होता है ।

**छन्दसि**—वेद में सुबन्तोपपदक सह' धातु से ण्वि प्रत्यय होता है ।

---

(१) ञकारः (टिड्ढाणञ्-) इति विशेषणार्थः ।

(२) तादृशादयः इति पाठान्तरम् ।

(३) जलाषाट् । पृतनाषाट् । इत्यपि क्वचित् ।

## वहश्च ॥ ६४ ॥

वहेर्धातोश्छन्दसि विषये सुबन्त उपपदे ण्विप्रत्ययो भवति । प्रष्ठवाट् । दित्यवाट् । योगविभाग उत्तरार्थः ॥

## कव्यपुरीषपुरीष्येषु ञ्युट् ॥ ६५ ॥

कव्य, पुरीष, पुरीष्य इत्येतेषु उपपदेषु छन्दसि विषये वहेर्धातोर्ञ्युट् प्रत्ययो भवति । कव्यवाहनः पितॄणाम् । पुरीषवाहनः । पुरीष्यवाहनः ॥

## हव्येऽनन्तः पादम् ॥ ६६ ॥

हव्यशब्दे उपपदे छन्दसि विषये वहेर्धातोर्ञ्युट् प्रत्ययो भवति, अनन्तःपादं चेद्वहिर्वर्तते । अग्निश्च हव्यवाहनः । अनन्तःपादमिति किम् ? हव्यवाडग्निरजरः पिता नः ॥

## जनसनखनक्रमगमो विट् ॥ ६७ ॥

छन्दसि, उपसर्गे, सुपीत्यनुवर्त्तते । 'जन जनने', 'जनी प्रादुर्भावे' द्वयोरपि ग्रहणम् । तथा 'षणु दाने', 'वन षण संभक्तौ', द्वयोरपि ग्रहणम् । जनादिभ्यो धातुभ्यः सुबन्त उपपदे छन्दसि विषये विट् प्रत्ययो भवति । टकारः सामान्यग्रहणाविघातार्थः "वेरपृक्तस्य" इति, विशेषणार्थश्च "विड्वनोरनुनासिकस्यात्" इति । अब्जाः । गोजाः । सन–गोषा इन्द्रो नृषा असि । खन–विसखाः(१), कूपखाः । क्रम–दधिक्राः । गम–अग्रेगा उन्नेतॄणाम् ॥

## अदोऽनन्ने ॥ ६८ ॥

छन्दसीति निवृत्तम् । अदेर्धातोरन्ने सुप्युपपदे विट् प्रत्ययो भवति । आममत्ति आमात् । सस्यात् । अनन्न इति किम् ? अन्नादः ॥

## क्रव्ये च ॥ ६९ ॥

क्रव्यशब्द उपपदे अदेर्धातोर्विट् प्रत्ययो भवति । क्रव्यमत्ति क्रव्यात् । पूर्वेणैव सिद्धे वचनमसरूपबाधनार्थम्, तेनाण्न भवति । कथं तर्हि क्रव्यादः ? कृत्तविकृत्तशब्दे उपपदेऽण्, तस्य च पृषोदरादिपाठात् क्रव्यभावः । कृत्तविकृत्तपक्वमांसभक्षः क्रव्याद उच्यते । आममांसभक्षः क्रव्यादिति ॥

## दुहः कब् घश्च ॥ ७० ॥

दुहेर्धातोः सुप्युपपदे कप्प्रत्ययो भवति घकारश्चान्तादेशः । कामदुघा धेनुः(२) । अर्थदुघा ॥

---

**वहश्च**—'वह' धातु से भी वेद में ण्वि प्रत्यय होता है ।

**कव्यपुरीष**—कव्य, पुरीष एवम् पुरीष्य के उपपद होने पर 'वह' धातु से वेद में ञ्युट् प्रत्यय होता है ।

**हव्ये**—हव्य शब्द के उपपद होने पर ऋक्पादमध्य में वर्त्तमान 'वह' धातु से वेद में ञ्युट प्रत्यय होता है ।

**जनसन**—सुबन्तोपपदक 'जन' आदि धातुओं से वेद में विट् प्रत्यय होता है ।

**अदोऽनन्ने**—अन्नशब्दभिन्नसुबन्तोपपदक 'अद्' धातु से विट् प्रत्यय होता है ।

**क्रव्ये च**—क्रव्योपपदक 'अद्' धातु से भी विट् प्रत्यय होता है ।

**दुहः**—सुबन्तोपपदक 'दुह' धातु से कप् प्रत्यय तथा प्रकृति को घकारान्तादेश हो जाता है ।

---

(१) विलखा इति क्वचित् ।

(२) धर्मदुघा धेनुः इति पुस्तकान्तरे । न्यासेप्ययं पाठ उपलभ्यते । अर्थदुघेत्यत्र अर्घदुघेति पदमञ्जरी ।

## मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ॥ ७१ ॥

श्वेतवह, उक्थशस्, पुरोडाश इत्येतेभ्यो ण्विन् प्रत्ययो भवति मन्त्रे विषये। धातूपपदसमुदाया निपात्यन्ते अलाक्षणिककार्यसिद्ध्यर्थम्, प्रत्ययस्तु विधीयत एव। श्वेतशब्दे कर्तृवाचिन्युपपदे वहेर्धातोः कर्मणि कारके ण्विन् प्रत्ययो भवति—श्वेता एनं वहन्ति श्वेतवा इन्द्रः। उक्थशब्दे कर्मणि कारणे वा उपपदे शंसतेर्धातोर्ण्विन् प्रत्ययो भवति, नलोपश्च निपात्यते—उक्थानि शंसति, उक्थैर्वा संसति उक्थशा यजमानः। 'दाशृ दाने' इत्येतस्य पुरःपूर्वस्य डत्वम्, कर्मणि च प्रत्ययः—पुरो दाशन्त एनं पुरोडाः। *श्वेतवहादीनां डस् पदस्येति वक्तव्यम्*। श्वेतवोभ्याम्। श्वेतवोभिः। पदस्येति किम्? श्वेतवाहौ, श्वेतवाहः॥

## अवे यजः ॥ ७२ ॥

अवे उपपदे यजेर्धातोर्ण्विन् प्रत्ययो भवति मन्त्रे विषये। त्वं यज्ञे वरुणस्यावया असि। योगविभाग उत्तरार्थः॥

## विजुपे छन्दसि ॥ ७३ ॥

उप उपपदे यजेश्छन्दसि विषये विच् प्रत्ययो भवति। उपयड् भीरूर्ध्वं वहन्ति(१)। उपयड्भ्याम्। छन्दोग्रहणं ब्राह्मणार्थम्। चित्करणं सामान्यग्रहणाविघातार्थम्—"वेरपृक्तस्य" इति। किमर्थमिदमुच्यते, यावता "अन्येभ्योऽपि दृश्यते" इति यजेरपि विच् सिद्ध एव? यजेर्नियमार्थमेतत्—उपयजेश्छन्दस्येव, न भाषायामिति॥

## आतो मनिन्क्वनिब्वनिपश्च ॥ ७४ ॥

छन्दसीति वर्त्तते, सुपि, उपसर्गेऽपीति च। अकारान्तेभ्यो धातुभ्यः सुप्युपपदे छन्दसि विषये मनिन्, क्वनिप्, वनिप् इत्येते प्रत्यया भवन्ति चकाराद्विच् भवति। सुदामा। अश्वत्थामा। क्वनिप्—सुधीवा, सुपीवा। वनिप्—भूरिदावा, घृतपावा। विच् खल्वपि—कीलालपाः, शुभयाः, रामस्योपदाः॥

## अन्येभ्योऽपि दृश्यन्ते ॥ ७५ ॥

छन्दसीति निवृत्तम्। अन्येभ्योऽपि धातुभ्योऽनाकारान्तेभ्यो मनिन्, क्वनिप्, वनिप् इत्येते प्रत्यया दृश्यन्ते विच्च। सुशर्मा। क्वनिप्—प्रातरित्वा, प्रातरित्वानौ। वनिप्—विजावा, अग्रेगावा। विच् खल्वपि—रेडशि पर्णं नयेः। अपिशब्दः सर्वोपाधिव्यभिचारार्थः। निरुपपदादपि भवति—धीवा, पीवा। दृशिग्रहणं प्रयोगानुसरणार्थम्॥

---

मन्त्रे—मन्त्रविषय में श्वेतोपपदक 'वह', उक्थोपपदक 'शंस्' तथा पुरउपपदक 'दाश्' धातुओं से ण्विन् प्रत्यय (तथा अन्यान्य अन्यथाऽप्राप्त कार्यों का निपातन भी) होता है।

श्वेतवहादीनाम्—'श्वेतवह' आदि से पदसंज्ञा के विषय में ण्विन् के स्थान में डस् प्रत्यय समझना चाहिए।

अवे—अवोपपदक 'यज' धातु से मन्त्रविषय में ण्विन् प्रत्यय होता है।

विजुपे—उपोपपदक 'यज' धातु से वेद में विच् प्रत्यय होता है।

आतो—सुबन्त तथा उपसर्ग के उपपदत्व में आकारान्त धातु से मनिन्, क्वनिप् तथा वनिप् प्रत्यय होते हैं वेद-विषय में।

अन्येभ्योऽपि—अन्य धातुओं से भी मनिन् आदि प्रत्यय देखे जाते हैं।

---

(१) उपयट् त्वम् इत्युदाहरणमधिकं न्यासे।

## क्विप् च ॥ ७६ ॥

सर्वधातुभ्यः सोपपदेभ्यो निरुपपदेभ्यश्च छन्दसि भाषायां च क्विप् प्रत्ययो भवति। उखायाः स्रंसते उखास्रत्। पर्णध्वत्। वाहाद् भ्रश्यति वाहाभ्रट्। "अन्येषामपि दृश्यते" इति दीर्घः॥

## स्थः क च ॥ ७७ ॥

सुप्युपसर्गेऽपीति च वर्तते। 'स्था' इत्येतस्माद्धातोः सुप्युपपदे कप्रत्ययो भवति, क्विप् च। किमर्थमिदमुच्यते, यावता "सुपि स्थः" इति कः सिद्ध एव? "अन्येभ्योऽपि दृश्यते" इति क्विप्, बाधकबाधनार्थं पुनर्वचनम्। शमि धातोः संज्ञायामचं बाधते—शंस्थः, शंस्थाः॥

## सुप्यजातौ णिनिस्ताच्छील्ये ॥ ७८ ॥

अजातिवाचिनि सुबन्त उपपदे ताच्छील्ये गम्यमाने धातोर्णिनिप्रत्ययो भवति। उष्णभोजी। शीतभोजी। अजाताविति किम्? ब्राह्मणानामन्त्रयिता। ताच्छील्य इति किम्? उष्णं भुङ्क्ते कदाचित्। सुपीति वर्त्तमाने पुनः सुब्ग्रहणमुपसर्गनिवृत्त्यर्थम्। ॐउत्प्रतिभ्यामाङि सर्त्तेरुपसंख्यानम्ॐ। उदासारिण्यः। प्रत्यासारिण्यः॥ ॐसाधुकारिणि चॐ। साधुकारी। साधुदायी। ॐब्रह्मणि वदःॐ। ब्रह्मवादिनो वदन्ति॥

## कर्त्तर्युपमाने ॥ ७९ ॥

कर्तृवाचिनि उपमान उपपदे धातोर्णिनिप्रत्ययो भवति। उपपदकर्त्ता प्रत्ययार्थस्य कर्त्तुरुपमानम्। उष्ट्र इव क्रोशति उष्ट्रक्रोशी। ध्वाङ्क्षरावी। अताच्छील्यार्थ आरम्भः, जात्यर्थो वा। कर्त्तरीति किम्? अपूपानिव भक्षयति माषान्। उपमान इति किम्? उष्ट्रः क्रोशति॥

## व्रते ॥ ८० ॥

व्रत इति शास्त्रतो नियम उच्यते। व्रते गम्यमाने सुबन्त उपपदे धातोर्णिनिः प्रत्ययो भवति। समुदायोपाधिश्चायम्, धातूपपदप्रत्ययसमुदायेन व्रतं गम्यते। स्थण्डिलशायी। अश्राद्धभोजी। कामचारप्राप्तौ नियमः—सति शयने स्थण्डिल एव शेते नान्यत्र, सति भोजने अश्राद्धमेव भुङ्क्ते न श्राद्धमिति। व्रते इति किम्? स्थण्डिले शेते देवदत्तः। अताच्छील्यार्थ आरम्भः, जात्यर्थो वा॥

## बहुलमाभीक्ष्ण्ये ॥ ८१ ॥

आभीक्ष्ण्ये गम्यमाने धातोर्बहुलं णिनिः प्रत्ययो भवति। आभीक्ष्ण्यं पौनःपुन्यम्,

---

**क्विप् च**—सोपपद तथा निरूपपद सभी धातुओं से लोक तथा वेद में क्विप् प्रत्यय होता है।

**स्थः क**—सुबन्तोपपदक तथा उपसर्गोपपदक 'स्था' धातु से क प्रत्यय होता है और क्विप् भी।

**सुप्यजातौ**—अजातिवाचक सुबन्त के उपपद होने पर धातु से ताच्छील्य अर्थ में णिनि प्रत्यय होता है।

**उत्प्रतिभ्यामाङि**—उदुपपक तथा प्रत्युपपदक आङ्पूर्वक 'सृ' धातु से भी णिनि प्रत्यय का प्रतिपादन करना चाहिए।

**साधु**—साधुपूर्वक 'कृ' धातु से अताच्छील्य में भी णिनि प्रत्यय समझना चाहिए।

**ब्रह्मणि**—ब्रह्मन्नुपपदक 'वद' धातु से णिनि प्रत्यय अवगन्तव्य है।

**कर्त्तर्युपमाने**—कर्तृवाचक उपमानोपपदक धातु से णिनि प्रत्यय होता है।

**व्रते**—सुबन्तोपपदक धातु से व्रत के गम्यमान होने पर णिनि प्रत्यय होता है।

**बहुलम्**—आभीक्ष्ण्य अर्थ में धातु से बहुल करके णिनि प्रत्यय होता है।

तात्पर्यमासेवा, ताच्छील्यादन्यत्। कषायपायिणो गान्धाराः । क्षीरपायिण उशीनराः। सौवीरपायिणो बाह्लीकाः। बहुलग्रहणात् कुल्माषखाद इत्यत्र न भवति ॥

## मनः ॥ ८२ ॥

सुपीति वर्त्तते। मन्यतेः सुबन्त उपपदे णिनिप्रत्ययो भवति। दर्शनीयमानी। शोभनमानी। बहुलग्रहणानुवृत्तेर्मन्यतेर्ग्रहणं न मनुतेः, उत्तरसूत्रे हि खश्प्रत्यये विकरणकृतो विशेषः स्यात् ॥

## आत्ममाने खश्च ॥ ८३ ॥

(१)आत्मनो मननमात्ममानः। आत्ममाने वर्त्तमानान्मन्यतेः सुप्युपपदे खश्प्रत्ययो भवति, चकाराण्णिनिश्च। यदा प्रत्ययार्थः कर्ताऽऽत्मानमेव दर्शनीयत्वादिना धर्मेण युक्तं(२) मन्यते तदाऽयं विधिः। दर्शनीयमात्मानं मन्यते दर्शनीयमानी देवदत्तस्य यज्ञदत्तः। अतः सार्वकालिका विधयो वेदितव्याः ॥

## भूते ॥ ८४ ॥

भूत इत्यधिकारो "वर्त्तमाने लट्" इति यावत्। यदित ऊर्द्ध्वमनुक्रमिष्यामो भूत इत्येव तद्वेदितव्यम्। धात्वधिकाराच्च धात्वर्थे भूत इति विज्ञायते। वक्ष्यति– "करणे यजः"। अग्निष्टोमेनेष्टवान् अग्निष्टोमयाजी। भूत इति किम्? अग्निष्टोमेन यजते ॥

## करणे यजः ॥ ८५ ॥

णिनिरनुवर्त्तते न खश्। यजतेर्द्धातोः करण उपपदे णिनिप्रत्ययो भवति भूते। अग्निष्टोमयाजी। अग्निष्टोमः फलभावनायां करणं भवति ॥

## कर्मणि हनः ॥ ८६ ॥

कर्मणि उपपदे हन्तेर्धातोर्णिनिप्रत्ययो भवति भूते काले। पितृव्यघाती। मातुलघाती। कुत्सितग्रहणं कर्त्तव्यम्, इह मा भूत–चोरं हतवान् ॥

## ब्रह्मभ्रूणवृत्रेषु क्विप् ॥ ८७ ॥

कर्मणीति वर्त्तते। ब्रह्मादिषु कर्मसूपपदेषु हन्तेर्द्धातोः क्विप् प्रत्ययो भवति भूते। ब्रह्महा। भ्रूणहा। वृत्रहा। किमर्थमिदमुच्यते, यावता सार्वधातुभ्यः क्विब्विहित एव? ब्रह्मादिषु हन्तेः क्विब्वचनं नियमार्थम्; चतुर्विधश्चात्र नियम इष्यते–ब्रह्मादिष्वेव हन्ते-

---

**मनः**– सुबन्तोपपदक 'मन' धातु से णिनि प्रत्यय होता है।

**आत्ममाने**—आत्ममननार्थक 'मन' धातु से सुबन्त के उपपद होने पर खश् तथा णिनि प्रत्यय होते हैं।

**भूते**—यहां से लेकर 'वर्त्तमाने लट्' सूत्र से पहले तक विहित कार्य भूतकाल में होते हैं।

**करणे**—करणस्थानीय सुबन्त के उपपद होने पर 'यज' धातु से भूतकाल में णिनि प्रत्यय होता है।

**कर्मणि**—कर्मकारक के उपपदत्व में 'हन्' धातु से भूतकाल में णिनि प्रत्यय होता है।

**ब्रह्म**—कर्मत्वविशिष्ट ब्रह्म, भ्रूण तथा वृत्र के उपपदत्व में 'हन्' धातु से भूतकाल में क्विप् प्रत्यय होता है।

---

(१) न्यासपदमंजरीसंवादात् आत्मनो मननमात्ममानः इति मूलपाठो न प्रतीयते।

(२) पदमंजरीसंवादात् युक्तमिति मूलपाठो भाति। तत्र विशिष्टमित्यस्याध्याहारः।

नान्यस्मिन्नुपपदे-पुरुषं हतवानिति; ब्रह्मादिषु हन्तेरेव नान्यस्मात्स्यात्-ब्रह्माधीतवानिति; ब्रह्मादिषु हन्तेर्भूतकाले क्विबेव नान्यः प्रत्ययः; तथा भूतकाल एव नान्यस्मिन्-ब्रह्माणं हन्ति, हनिष्यति वेति । तदेतद्वक्ष्यमाणबहुलग्रहणस्य पुरस्तादपकर्षणाल्लभ्यते ॥

## बहुलं छन्दसि ॥ ८८ ॥

पूर्वेण नियमादप्राप्तः क्विब्विधीयते । छन्दसि विषये उपपदान्तरेऽपि हन्तेर्बहुलं क्विप्प्रत्ययो भवति । मातृहा सप्तमं नरकं प्रविशेत् । पितृहा । न च भवति-पितृघातः, मातृघातः ॥

## सुकर्मपापमन्त्रपुण्येषु कृञः ॥ ८९ ॥

कर्मणीति वर्त्तते, तदसम्भवात् सुशब्दं वर्जयित्वा परिशिष्टानां विशेषणं भवति । स्वादिषु कर्मसूपपदेषु करोतेर्धातोः क्विप् प्रत्ययो भवति । सुकृत् । कर्मकृत् । पापकृत् । मन्त्रकृत् । पुण्यकृत् । अयमपि नियमार्थ आरम्भः, त्रिविधश्चात्र नियम इष्यते-धातुनियमं वर्जयित्वा कालोपपदप्रत्ययनियमाः(१) । धातोरनियतत्वादन्यस्मिन्नप्युपपदे भवति-शास्त्रकृत्, भाष्यकृत् ॥

## सोमे सुञः ॥ ९० ॥

कर्मणीति वर्त्तते । सोमे कर्मण्युपपदे सुनोतेर्धातोः क्विप् प्रत्ययो भवति । सोमसुत् । सोमसुतौ । सोमसुतः । अयमपि नियमार्थ आरम्भः, चतुर्विधश्चात्र नियम इष्यते-धातुकालोपपदप्रत्ययविषयः(२) ॥

## अग्नौ चेः ॥ ९१ ॥

कर्मणीत्येव । अग्नौ कर्मण्युपपदे चिनोतेर्धातोः क्विप् प्रत्ययो भवति । अग्निचित् । अग्निचितौ । अग्निचितः । अत्रापि पूर्ववच्चतुर्विधो नियम इष्यते ॥

## कर्मण्यग्न्याख्यायाम् ॥ ९२ ॥

चेः, कर्मणीति वर्त्तते । कर्मण्युपपदे चिनोतेः कर्मण्येव कारके क्विप् प्रत्ययो भवति अग्न्याख्यायाम् धातूपपदप्रत्ययसमुदायेन चेदग्न्याख्या गम्यते । श्येन इव चीयते श्येनचित् । कङ्कचित् । आख्याग्रहणं रूढिसंप्रत्ययार्थम्—अग्न्यर्थो हीष्टकाचय उच्यते श्येनचिदिति ॥

---

**बहुलम्**—वेद में अन्योपपदक 'हन्' धातु से भी बहुल करके क्विप् प्रत्यय होता है ।

**सुकर्म**—सु तथा कर्मत्वविशिष्ट कर्मन्, पाप, मन्त्र तथा पुण्य शब्दों के उपपद होने पर 'कृञ्' धातु से क्विप् प्रत्यय होता है ।

**सोमे**—कर्मत्वविशिष्ट सोमशब्द के उपपदत्व में 'सुञ्' धातु से क्विप् प्रत्यय होता है ।

**अग्नौ**—कर्मत्वविशिष्ट अग्नि शब्द के उपपद होने पर 'चि' धातु से क्विप् प्रत्यय होता है ।

**कर्मण्यग्न्याख्या**—कर्मत्वविशिष्ट शब्द के उपपद होने पर 'चि' धातु से कर्मकारक में ही क्विप् प्रत्यय होता है यदि उपपदविशिष्टप्रत्ययान्त का वाच्य अग्नि ही हो ।

(१) भूतकाले एवेति कालनियमः, कर्मण्युपपदे एवेति उपपदनियमः, क्विप्प्रत्यय एवेति प्रत्ययनियमः । (श्रीना०)

(२) अग्रे नियमाकाराः ब्रह्मभ्रूणेत्यादिसूत्रवदुन्नेयाः । (श्रीना०)

## कर्मणीनिर्विक्रियः ॥ ९३ ॥

कर्मण्युपपदे विपूर्वात्क्रीणातेर्धातोरिनिप्रत्ययो भवति। कर्मणीति वर्त्तमाने पुनः कर्मग्रहणं कर्तुः कुत्सानिमित्ते कर्मणि यथा स्यात्, कर्ममात्रे मा भूत्—सोमविक्रयी, रसविक्रयी। इह न भवति-धान्यविक्रायः॥

## दृशेः क्वनिप् ॥ ९४ ॥

कर्मणीत्येव। दृशेर्धातोः कर्मण्युपपदे क्वनिप् प्रत्ययो भवति। मेरुदृश्वा। परलोकदृश्वा। "अन्येऽभ्योऽपि दृश्यते" इति क्वनिपि सिद्धे पुनर्वचनं प्रत्ययान्तरनिवृत्त्यर्थम्॥

## राजनि युधिकृञः ॥ ९५ ॥

कर्मणीत्येव। राजन्शब्दे कर्मण्युपपदे युध्यतेः करोतेश्च क्वनिप् प्रत्ययो भवति। ननु च युधिरकर्मकः? अन्तर्भावितण्यर्थः सकर्मको भवति। राजयुध्वा। राजानं योधितवानित्यर्थः। राजकृत्वा॥

## सहे च ॥ ९६ ॥

सहशब्दे चोपपदे युधिकृञोर्धात्वोः क्वनिप्प्रत्ययो भवति। असत्त्व(१)वाचित्वान्नोपपदं कर्मणा विशेष्यते। सहयुध्वा। सहकृत्वा॥

## सप्तम्यां जनेर्डः ॥ ९७ ॥

सप्तम्यन्त उपपदे जनेर्धातोर्डः प्रत्ययो भवति। उपसरे जातः उपसरजः। मन्दुरजः॥

## पञ्चम्यामजातौ ॥ ९८ ॥

पञ्चम्यन्त उपपदे जातिवर्जिते जनेर्डः प्रत्ययो भवति। बुद्धिजः। संस्कारजः दुःखजः(२)। अजाताविति किम्? हस्तिनो जातः, अश्वाज्जातः॥

## उपसर्गे च संज्ञायाम् ॥ ९९ ॥

उपसर्गे चोपपदे जनेर्डः प्रत्ययो भवति संज्ञायां विषये। समुदायोपाधिः संज्ञा। अथेमा मानवीः प्रजाः॥

## अनौ कर्मणि ॥ १०० ॥

अनुपूर्वाद् जनेः कर्मण्युपपदे डः प्रत्ययो भवति। पुमांसमनुजातः पुमनुजः। स्त्र्यनुजः॥

---

**कर्मणी**—कर्मत्वविशिष्ट के उपपद होने पर विपूर्वक 'क्री' धातु से इनि प्रत्यय होता है।

**दृशेः**—कर्मत्वविशिष्ट के उपपदत्व में 'दृश्' धातु से क्वनिप् प्रत्यय होता है।

**राजनि**—कर्मत्वविशिष्ट राजन् शब्द के उपपदत्व में 'युध' तथा 'कृञ्' धातुओं से क्वनिप् प्रत्यय होता है।

**सहे**—सहशब्दोपपदक 'युध' तथा 'कृञ्' धातु से भी क्वनिप् प्रत्यय होता है।

**सप्तम्याम्**—सप्तम्यन्तोपपदक 'जन' धातु से ड प्रत्यय होता है।

**पञ्चम्याम्**—जातिवाचकशब्दभिन्न पञ्चम्यन्त पद के उपपदत्व में 'जन्' धातु से ड प्रत्यय होता है।

**उपसर्गे**—उपसर्ग के उपपद होने पर भी 'जन्' धातु से ड प्रत्यय होता है यदि प्रत्ययान्त संज्ञात्मक हो।

**अनौ**—कर्मत्वविशिष्ट के उपपद होने पर अनुपूर्वक 'जन्' धातु से ड प्रत्यय होता है।

---

(१) वचनत्वादिति पाठान्तरम्।

(२) पदमञ्जरीपर्यालोचनया खेदजः इत्यप्युदाहरणं प्रतिभाति।

## समि युद्रुदुवः ॥ २३ ॥

समि उपपदे यु, द्रु, दु इत्येतेभ्यो धातुभ्यो घञ् प्रत्ययो भवति । संयावः(१) । संद्रावः । संदावः । समीति किम् ? प्रयवः ॥

## श्रिणीभुवोऽनुपसर्गे ॥ २४ ॥

श्रि, णी, भू इत्येतेभ्यो धातुभ्योऽनुपसर्गेभ्यो घञ् प्रत्ययो भवति । अजपोरपवादः । श्रायः । नायः । भावः । अनुपसर्गे इति किम् ? प्रश्रयः, प्रणयः, प्रभवः । कथं प्रभावो राज्ञः ? प्रकृष्टो भाव इति प्रादिसमासो भविष्यति । कथं च नयो राज्ञः ? "कृत्यल्युटो बहुलम्" इत्यज् भविष्यति ॥

## वौ क्षुश्रुवः ॥ २५ ॥

वावुपपदे क्षु, श्रु इत्येताभ्यां धातुभ्यां घञ् प्रत्ययो भवति । अपोऽपवादः । विक्षावः । विश्रावः । वाविति किम् ? क्षवः, श्रवः ॥

## अवोदोर्नियः ॥ २६ ॥

अव, उत् इत्येतयोरुपपदयोर्नयतेर्धातोर्घञ् प्रत्ययो भवति । अवनायः(२) । उन्नायः । कथमुन्नयः पदार्थानाम् ? "कृत्यल्युटो बहुलम्" इत्यज् भविष्यति ॥

## प्रे द्रुस्तुस्रुवः ॥ २७ ॥

प्रशब्द उपपदे द्रु, स्तु, स्रु इत्येतेभ्यो धातुभ्यो घञ् प्रत्ययो भवति । प्रद्रावः । प्रस्तावः । प्रस्रावः । प्र इति किम् ? द्रवः, स्तवः, स्रवः ॥

## निरभ्योः पूल्वोः ॥ २८ ॥

पू इति पूङ्पूञोः सामान्येन ग्रहणम्, 'लूञ् छेदने' । यथासंख्यमुपसर्गसंबन्धः । निरभिपूर्वयोः पूल्वोर्धात्वोर्घञ् प्रत्ययो भवति । निष्पावः(३) । अभिलावः । निरभ्योरिति किम् ? पवः, लवः ॥

## उन्न्योर्ग्रः ॥ २९ ॥

'गॄ शब्दे', 'गॄ निगरणे' द्वयोरपि ग्रहणम् । उन्न्योरुपपदयोः गॄ इत्येतस्माद्धातोर्घञ् प्रत्ययो भवति । उद्गारः(४)समुद्रस्य । निगारो देवदत्तस्य । उन्न्योरिति किम् ? गरः ॥

---

**समि**—समुपपदक 'यु', 'द्रु' तथा 'दु' धातुओं से घञ् प्रत्यय होता है ।

**श्रिणी**—अनुपसर्गक 'श्रि', 'नी' तथा 'भू' धातुओं से घञ् प्रत्यय होता है ।

**वौ क्षुश्रुवः**—वि के उपपद होने पर 'क्षु' तथा 'श्रु' धातुओं से घञ् प्रत्यय होता है ।

**अवो**—अव तथा उत् के उपपद होने पर 'नी' धातु से घञ् प्रत्यय होता है ।

**प्रे**—प्र शब्द के उपपद होने पर 'द्रु', 'स्तु' तथा 'स्रु' धातुओं से घञ् प्रत्यय होता है ।

**निरभ्योः**—निपूर्वक 'पूङ्' तथा 'पू' धातुओं से और अभिपूर्वक 'लूञ्' धातु से घञ् प्रत्यय होता है ।

**उन्न्योर्ग्रः**—उत्पूर्वक तथा निपूर्वक 'गॄ' धातु से घञ् प्रत्यय होता है ।

---

(१) संयावः पिष्टविकारोऽपूपविशेषः, संयूयते मिश्रीक्रियते गुडजीरकादिभिरिति कृत्वा इति पदमञ्जरी ।

(२) अधो नयनमवनायः, ऊर्ध्वनयनमुन्नायः, उन्नयस्तूत्प्रेक्षा इति पदमञ्जरी ।

(३) निष्पावः, कोशीधान्यविशेषः, निष्पूयते शूर्पादिभिरिति कृत्वा इति पदमञ्जरी ।

(४) उद्गारोऽतिप्रवृद्धः शब्दः, निगारो भक्षणम् इति पदमञ्जरी ।

## कॄ धान्ये ॥ ३० ॥

उन्न्योरिति वर्त्तते। कॄ इत्येतस्माद्धातोरुन्न्योरुपपदयोर्घञ् प्रत्ययो भवति धान्यविषयश्चेद्धात्वर्थो भवति। विक्षेपार्थस्य किरतेर्ग्रहणं न हिंसार्थस्य, (१)अनभिधानात्। उत्कारो धान्यस्य। निकारो धान्यस्य। धान्य इति किम्? भैक्षयोत्करः, पुष्पनिकरः॥

## यज्ञे समि स्तुवः ॥ ३१ ॥

यज्ञविषये प्रयोगे संपूर्वात् स्तौतेर्घञ्प्रत्ययो भवति। संस्तावश्छन्दोगानाम्। समेत्य स्तुवन्ति यस्मिन् देशे छन्दोगाः स देशः संस्ताव इत्युच्यते। यज्ञ इति किम्? संस्तवश्छात्रयोः॥

## प्रे स्त्रोऽयज्ञे ॥ ३२ ॥

'स्तृञ् आच्छादने', अस्माद्धातोः प्रशब्दे उपपदे घञ् प्रत्ययो भवति, न चेद्यज्ञविषयः प्रयोगो भवति। शङ्खप्रस्तारः(२)। अयज्ञ इति किम्? बर्हिष्प्रस्तरः(३)॥

## प्रथने वावशब्दे ॥ ३३ ॥

'स्तृञ् आच्छादने', अस्माद्धातोर्विशब्द उपपदे घञ प्रत्ययो भवति प्रथने गम्यमाने, तच्चेत् प्रथनं शब्दविषयं न भवति। प्रथनं विस्तीर्णता। पटस्य विस्तारः(४)। प्रथन इति किम्? तृणविस्तरः। अशब्द इति किम्? विस्तरो वचसाम्॥

## छन्दोनाम्नि च ॥ ३४ ॥

वो स्त्र इति वर्त्तते। विपूर्वात्स्तृणातेश्छन्दोनाम्नि घञ् प्रत्ययो भवति। (५)वृत्तमत्र छन्दो गृह्यते, यस्य गायत्र्यादयो विशेषाः, न मन्त्रब्राह्मणम्, नामग्रहणात्। विष्टारपंक्तिश्छन्दः। विष्टारबृहतीच्छन्दः। विष्टारपंक्तिशब्दोऽत्र छन्दोनाम, न घञन्तं शब्दरूपम्, तत्र त्ववयवत्वेन तद्वर्तते। छन्दोनाम्नीत्यधिकरणसप्तम्येषा॥

## उदि ग्रहः ॥ ३५ ॥

उद्युपपदे ग्रहेर्धातोर्घञ्प्रत्ययो भवति। अपोऽपवादः। उद्ग्राहः। छन्दसि निपूर्वा-

---

**कॄ धान्ये**—उत्पूर्वक 'कॄ' धातु से घञ् प्रत्यय होता है यदि धात्वर्थ का सम्बन्ध धान्य से हो।

**यज्ञे**—यज्ञविषयक प्रयोग में सम्पूर्वक 'स्तु' धातु से घञ् प्रत्यय होता है।

**प्रे**—यदि यज्ञविषयक प्रयोग न हो तो 'स्तृञ्' धातु से घञ् प्रत्यय होता है।

**प्रथने**—विपूर्वक 'स्तृञ्' धातु से घञ् प्रत्यय होता है यदि उससे शब्दातिरिक्तविषयक प्रथन (विस्तार) की प्रतीति हो।

**छन्दो**—निपूर्वक 'स्तृञ्' धातु से घञ् प्रत्यय होता है यदि समुदाय से छन्दोविशेष (=वृत्त) का अभिधान होता हो।

**उदि**—उत्पूर्वक 'ग्रह' धातु से घञ् प्रत्यय होता है।

**छन्दसि**—स्रुगात्मक आहुतिप्रदानसाधनीभूत पदार्थविशेष के उन्नमन तथा उसके अवनमन अर्थों में निपूर्वक 'ग्रह' धातु से भी वेद-विषय में घञ् प्रत्यय का विधान अवगन्तव्य है।

---

(१) अनभिधानात् = शब्दशक्तिस्वाभाव्यात्।

(२) मणिप्रस्तार इत्यप्युदाहरणं क्वचित्।

(३) प्रस्तरो मुष्टिविशेषः, बर्हिर्विकारः प्रस्तरो बर्हिष्प्रस्तरः।

(४) विस्तारस्तिर्यगायतिः।

(५) अक्षरसंख्यादत्तभरस्वरूपं छन्दो वृत्तम्। तदुक्तम्—'वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत्' इति। (श्रीना०)

दपीष्यते स्रुगुद्यमननिपातनयोः॥ । हकारस्य भकारः । उदग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् ॥

## समि मुष्टौ ॥ ३६ ॥

ग्रह इत्येव । सम्युपपदे ग्रहेर्धातोर्घञ् भवति, मुष्टिविषयश्चेद्धात्वर्थो भवति । मुष्टिरङ्गुलिसन्निवेशः । अहो मल्लस्य संग्राहः । अहो मुष्टिकस्य संग्राहः । दृढमुष्टितास्ख्यायते । मुष्टाविति किम् ? संग्रहो धान्यस्य ॥

## परिन्योर्नीणोर्द्यूताभ्रेषयोः ॥ ३७ ॥

परिशब्दे निशब्दे चोपपदे यथासंख्यं निय इणश्च धातोर्घञ् प्रत्ययो भवति । अचोऽपवादः । द्यूताभ्रेषयोः(१) अत्रापि यथासंख्यमेव सम्बन्धः । द्यूतविषयश्चेन्नयतेरर्थः, अभ्रेषविषयश्चेदिणर्थः । पदार्थानामनपचारो यथाप्राप्तकरणमभ्रेषः । द्यूते तावत्—परिणायेन शारान् हन्ति । समन्तान्नयनेन । अभ्रेषे—एषोऽत्र न्यायः । द्यूताभ्रेषयोरिति किम् ? परिणयः, न्ययं गतः पापः ॥

## परावनुपात्यय इणः ॥ ३८ ॥

परिशब्द उपपदे इणो धातोर्घञ्प्रत्ययो भवति अनुपात्यये गम्यमाने । क्रमप्राप्तस्यानतिपातोऽनुपात्ययः, परिपाटी । तव पर्यायः । मम पर्यायः । अनुपात्यय इति किम् ? कालस्य पर्ययः । अतिपात इत्यर्थः ॥

## व्युपयोः शेतेः पर्याये ॥ ३९ ॥

वि, उप इत्येतयोरुपपदयोः शेतेर्धातोर्घञ् भवति पर्याये गम्यमाने । तव विशायः । मम विशायः । तव राजोपशायः । तव राजानमुपशयितुं पर्याय इत्यर्थः । पर्याय इति किम् ? विशयः(२), उपशयः ॥

## हस्तादाने चेरस्तेये ॥ ४० ॥

हस्तादाने गम्यमाने चिनोतेर्धातोर्घञ् प्रत्ययो भवति, न चेत्स्तेयं चौर्यं भवति । हस्तादानग्रहणेन प्रत्यासत्तिरादेयस्य लक्ष्यते । पुष्पप्रचायः । फलप्रचायः । हस्तादान इति

---

**समि**—समुपसर्गक 'ग्रह' धातु से मुष्टि अर्थ में घञ् प्रत्यय होता है ।

**परि**—परिपूर्वक 'नी' धातु तथा निपूर्वक 'इण्' धातु से घञ् प्रत्यय होता है यदि प्रत्ययान्तों द्वारा क्रमशः द्यूत तथा अभ्रेष अर्थों की प्रतीति हो ।

**परावनु**—परिपूर्वक 'इण्' धातु से घञ् प्रत्यय होता है अनुपात्यय ( परिपाटी ) अर्थ में ।

**व्युपयोः**—पर्याय अर्थ में विपूर्वक तथा उपपूर्वक 'शीङ्' धातु से घञ् प्रत्यय होता है ।

**हस्तादाने**—'चि' धातु से घञ् प्रत्यय होता है यदि प्रत्ययान्त से स्तेयभिन्न हस्तकरणक ग्रहण की प्रतीति होती हो ।

---

( १ ) अक्षादिभिः क्रीडनं द्यूतम्, भ्रेष चलने भ्रेषणम् , भ्रेषश्चलनमभ्रेषोऽचलनम् । कुत्सितश्चारोऽपचारः, तस्मादन्यः प्रशस्तश्चारोऽनपचारः । हन्ति=बाधते । एषोऽत्र न्यायः—एतदत्र यथाप्राप्तमित्यर्थः । न्ययो नाशः इति पदमञ्जरी ।

( २ ) विशयः = संशयः । उपशयः = समीपशयनम् । उपशयो गर्तः, यथा माघे–'हन्ति नोपशयस्थोऽपि शयालुर्मृगयुर्मृगान्' इति ।

किम् ? वृक्षशिखरे फलप्रचयं करोति । अस्तेय इति किम् ? पुष्पप्रचयश्चौर्येण । ॐउच्चयस्य प्रतिषेधो वक्तव्यःॐ(१) ॥

## निवासचितिशरीरोपसमाधानेष्वादेश्च कः ॥ ४१ ॥

चेरित्येव । निवसन्त्यस्मिन्निति निवासः, चीयतेऽसौ चितिः, पाण्यादिसमुदायः शरीरम् , राशीकरणमुपसमाधानम् , इत्येतेष्वर्थेषु चिनोतेर्घञ् प्रत्ययो भवति, धातोरादेश्च ककार आदेशः । निवासे तावत्—चिखल्लिनिकायः(२) । चितौ—आकायमग्निं चिन्वीत । शरीरे—अनित्यकायः । उपसमाधाने—महागोमयनिकायः । एतेष्विति किम् ? चयः । इह कस्मान्न भवति—महान् काष्ठनिचयः ? बहुत्वमत्र विवक्षितं नोपसमाधानम् ॥

## संघे चानौत्तराधर्ये ॥ ४२ ॥

चेरित्येव । प्राणिनां समुदायः संघः । स च द्वाभ्यां प्रकाराभ्यां भवति—एकधर्मसमावेशेन, औत्तराधर्येण वा । तत्र औत्तराधर्यपर्युदासादितरो गृह्यते । संघे वाच्ये चिनोतेर्धातोर्घञ् प्रत्ययो भवति आदेश्च कः । भिक्षुकनिकायः । ब्राह्मणनिकायः । वैयाकरणनिकायः । अनौत्तराधर्ये इति किम् ? सूकरनिचयः । प्राणिविषयत्वात् संघस्येह न भवति—कृताकृतसमुच्चयः, प्रमाणसमुच्चयः ॥

## कर्मव्यतिहारे णच् स्त्रियाम् ॥ ४३ ॥

कर्म क्रिया, व्यतिहारः परस्परं करणम् । कर्मव्यतिहारे गम्यमाने धातोर्णच्प्रत्ययो भवति स्त्रीलिङ्गे भावे वाच्ये । चकारो विशेषणार्थः, "णचः स्त्रियामञ्" इति । व्यावक्रोशी, व्यावलेखी, व्यावहासी वर्त्तते । स्त्रियामिति किम् ? व्यतिपाको वर्त्तते । बाधविषयेऽपि क्वचिदिष्यते—व्यवचोरी, व्यावचर्ची । इह न भवति—व्यतीक्षा, व्यतीहा वर्त्तते, व्यात्युक्षी भवति । तदेतद्वैचित्र्यं कथं लभ्यते ? "कृत्यल्युटो बहुलम्" इति भवति ॥

## अभिविधौ भाव इनुण् ॥ ४४ ॥

अभिविधिरभिव्याप्तिः, क्रियागुणाभ्यां कार्त्स्न्येन सम्बन्धः । अभिविधौ गम्यमाने धातोर्भाव इनुण् भवति । सांकूटिनम्(३), सांराविणम्, सान्द्राविणं वर्त्तते । अभिविधाविति किम् ? संकोटः, संरावः, (४)संद्रावः । भाव इति वर्त्तमाने पुनर्भावग्रहणं वासरूप-

---

**उच्चयस्य**—उत्पूर्वक 'चि' धातु से उक्त अर्थ में भी घञ् प्रत्यय का प्रतिषेध समझना चाहिए ।

**निवास**—निवास, चिति, शरीर तथा राशीकरण अर्थों में 'चि' धातु से घञ् प्रत्यय होता है और धात्वादि चकार को ककारादेश भी ।

**संघे**—औत्तराधर्यातिरिक्त संध अर्थ में 'चि' धातु से घञ् प्रत्यय होता है ।

**कर्मव्यतिहारे**—स्त्रीत्वविवक्षा में भाव अर्थ में धातु से क्रिया-विनिमय के गम्यमान होने पर णच् प्रत्यय होता है ।

**अभिविधौ**—अभिविधि अर्थ के गम्यमान होने पर धातु से इनुण् प्रत्यय होता है ।

---

(१) क्वचिद्वार्तिकमिदं नास्ति ।

(२) चिखल्लिर्जनपदविशेषः, तत्सम्बन्धी ग्रामादिर्निवासो देशः, चीयन्तेऽस्मिन्नरथ्यादीनि इति कायः । गोमयनिकायः-प्रकीर्णानां गोमयानामेकत्र राशीकरणम् ।

(३) सांकूटिनन् = समन्ताद्दाहः ।

(४) संरावः इत्यनन्तरं संद्राव इति:प्रत्युदाहरणं त्वयुक्तम्, समि युद्रुदुवः इत्यस्यानवकाशत्वादिति पदमञ्जरी ।

निरासार्थम्, तेन घञ् न भवति। ल्युटा तु समावेश इष्यते—संकूटनं वर्त्तते। तत्कथम्? "कृत्यल्युटो बहुलम्" इति॥

## आक्रोशेऽवन्योर्ग्रहः॥ ४५॥

दृष्टानुवृत्तिसामर्थ्याद्(१) घञनुवर्त्तते, नानन्तर इनुण्। अव, नि इत्येतयोरुपपदयोर्ग्रहेर्धातोर्घञ् प्रत्ययो भवति आक्रोशे गम्यमाने। आक्रोशः शपनम्(२)। अवग्राहो हन्त ते वृषल भूयात्। निग्राहो हन्त ते वृषल भूयात्। आक्रोश इति किम्? अवग्रहः पदस्य, निग्रहश्चोरस्य॥

## प्रे लिप्सायाम्॥ ४६॥

ग्रह इत्येव। प्रशब्द उपपदे ग्रहेर्धातोर्घञ् प्रत्ययो भवति लिप्सायां गम्यमानायाम्। पात्रप्रग्राहेण(३) चरति भिक्षुः पिण्डार्थी(४)। स्रुवप्रग्राहेण चरति द्विजो दक्षिणार्थी। लिप्सायामिति किम्? प्रग्रहो देवदत्तस्य॥

## परौ यज्ञे॥ ४७॥

परिशब्द उपपदे ग्रहेर्घञ् प्रत्ययो भवति. यज्ञविषयश्चेत्प्रत्ययान्ताभिधेयः स्यात्। उत्तरपरिग्राहः। अधरपरिग्राहः। यज्ञ इति किम्? परिग्रहो देवदत्तस्य॥

## नौ वृ धान्ये॥ ४८॥

वृ इति वृङ्वृञोः सामान्येन ग्रहणम्। निशब्द उपपदे वृ इत्येतस्माद्धातोर्धान्यविशेषेऽभिधेये घञ् प्रत्ययो भवति। अपोऽपवादः। नीवारा नाम व्रीहयः(५)। धान्य इति किम्? निवरा कन्या॥

## उदि श्रयतियौतिपूद्रुवः॥ ४९॥

उच्छब्द उपपदे श्रयत्यादिभ्यो घञ् प्रत्ययो भवति। अजपोरपवादः। उच्छ्रायः। उद्यावः। उत्पावः। उद्द्रावः। कथं "पतनान्ताः समुच्छ्रयाः" इति? वक्ष्यमाणं विभाषाग्रहणमिह सिंहावलोकितन्यायेन संबध्यते॥

---

**आक्रोशे**—अवपूर्वक तथा निपूर्वक 'ग्रह' धातु से घञ् प्रत्यय होता है, प्रत्ययान्त से आक्रोश (अनिष्टकामना) की प्रतीति होने पर।

**प्रे**—प्रपूर्वक 'ग्रह' धातु से लिप्सा अर्थ के गम्यमान होने पर घञ् प्रत्यय होता है।

**परौ**—परिपूर्वक 'ग्रह' धातु से घञ् प्रत्यय होता है प्रत्ययान्त से यज्ञविषयक अर्थ की प्रतीति होने पर।

**नौ**—निपूर्वक 'वृङ्' तथा 'वृञ्' धातुओं से घञ् प्रत्यय होता है प्रत्ययान्त के द्वारा धान्यविशेष के अभिधान होने पर।

**उदि**—उत्पूर्वक 'श्रि', 'यु', 'पू' तथा 'द्रु' धातुओं से घञ् प्रत्यय होता है।

---

(१) दृष्टेति—दृष्टमनुवृत्तिसामर्थ्यमधिकृतस्य यत्र तत् दृष्टानुवृत्तिसामर्थ्यम्। तत् पुनः स्वरितत्वम्, ततो हि शास्त्रेऽधिकृतस्य शब्दस्यानुवृत्तौ सामर्थ्यं दृश्यते। तदेतदुक्तं भवति—घञ एव स्वरितत्वं प्रतिज्ञायते, नेनुणः।

(२) शपनमनिष्टाशंसनम्। अवग्रहोऽभिभवः, निग्रहो बाधः।

(३) पात्रप्रग्राहेण-भिक्षापात्रोपादानेन, गृहीतपात्र इति यावत्। प्रग्रहो मदः, प्रकृष्टो वाऽभिनिवेशः।

(४) पिण्डपातार्थी इति क्वचित्।

(५) भवन्ति इत्यधिकः पाठः।

## विभाषाऽऽङि रुप्लुवोः ॥ ५० ॥

आङि उपपदे रौतेः प्लवतेश्च विभाषा घञ् प्रत्ययो भवति । आरावः, आरवः । आप्लावः, आप्लवः ॥

## अवे ग्रहो वर्षप्रतिबन्धे ॥ ५१ ॥

विभाषेति वर्त्तते । अव उपपदे ग्रहेर्धातोर्घञ् प्रत्ययो भवति विभाषा वर्षप्रतिबन्धेऽभिधेये । प्राप्तकालस्य वर्षस्य कुतश्चिन्निमित्तादभावो वर्षप्रतिबन्धः । अवग्राहो देवस्य(१), अवग्रहो देवस्य । वर्षप्रतिबन्ध इति किम् ? अवग्राहः पदस्य ॥

## प्रे वणिजाम् ॥ ५२ ॥

ग्रह इति वर्त्तते । विभाषेत्येव । प्रशब्द उपपदे ग्रहेर्धातोर्विभाषा घञ् प्रत्ययो भवति, प्रत्ययान्तवाच्यश्चेद्वणिजां संबन्धी भवति । वणिक्संबन्धेन च तुलासूत्रं लक्ष्यते, न तु वणिजस्तन्त्रम् । तुला प्रगृह्यते येन सूत्रेण स शब्दार्थः । तुलाप्रग्राहेण चरति, तुलाप्रग्रहेण चरति वणिगन्यो वा । वणिजामिति किम् ? प्रग्रहो देवदत्तस्य ॥

## रश्मौ च ॥ ५३ ॥

ग्रहो विभाषा प्र इति वर्त्तते । प्रशब्द उपपदे ग्रहेर्धातोर्विभाषा घञ् प्रत्ययो भवति रश्मिश्चेत् प्रत्ययान्तेनाभिधीयते । रथादियुक्तानामश्वादीनां संयमनार्था रज्जू रश्मिरिह गृह्यते । प्रग्रहः, प्रग्राहः ॥

## वृणोतेराच्छादने ॥ ५४ ॥

विभाषा, प्र इति वर्तते । प्रशब्द उपपदे वृणोतेर्धातोर्विभाषा घञ् प्रत्ययो भवति, प्रत्ययान्तेन चेदाच्छादनविशेष उच्यते । प्रावारः, प्रवरः । आच्छादन इति किम् ? प्रवरा गौः ॥

## परौ भुवोऽवज्ञाने ॥ ५५ ॥

विभाषेत्येव । परिशब्दे उपपदे भवतेधातोर्विभाषा घञ् प्रत्ययो भवति अवज्ञाने गम्यमाने । अवज्ञानमसत्कारः । परिभावः, परिभवः । अवज्ञान इति किम् ? सर्वतो भवनं परिभवः ॥

---

**विभाषा**—आङ् के उपपद होने पर 'रु' तथा 'प्लु' धातुओं के विकल्प से घञ् प्रत्यय होता है ।

**अवे**—अवपूर्वक 'ग्रह' धातु से विकल्प से घञ् प्रत्यय होता है यदि प्रत्ययान्त का वाच्य वर्षाप्रतिबन्ध हो ।

**प्रे**—प्र शब्द के उपपदत्व में 'ग्रह' धातु से विकल्प से घञ् प्रत्यय होदा है यदि प्रत्ययान्त का वाच्य वणिक्सम्बन्धी पदार्थ हो ।

**रश्मौ**—प्रशब्दोपपदक 'ग्रह' धातु से विकल्प से घञ् प्रत्यय होता है यदि प्रत्ययान्त का वाच्य रश्मि ( लगाम ) हो ।

**वृणोतेः**—प्रपूर्वक 'वृ' धातु से विकल्प से घञ् प्रत्यय होता है यदि प्रत्ययान्त से आच्छादन अर्थ की प्रतीति होती हो ।

**परौ**—परिपूर्वक 'भू' धातु से विकल्प से घञ् प्रत्यय होता है यदि प्रत्ययान्त का वाच्य तिरस्कार हो ।

---

( १ ) अवग्राहो देवस्य-देवकर्तृको वर्षाभावः ।

## एरच् ॥ ५६ ॥

भावे अकर्त्तरि च कारके इति प्रकृतमनुवर्त्तते यावत् "कृत्यल्युटो बहुलम्" इति। इवर्णान्ताद्धातोर्भावे अकर्त्तरि च कारके संज्ञायामच् प्रत्ययो भवति। घञोऽपवादः। चकारो विशेषणार्थः—"अन्तः" "थाथघञ्क्ताजबित्रकाणाम्" इति। चयः। अयः। जयः। क्षयः। ❀अज्विधौ भयादीनामुपसंख्यानम्❀। नपुंसके क्तादिनिवृत्त्यर्थम्। भयम्। वर्षम्। ❀जवसवौ छन्दसि वक्तव्यौ❀। ऊर्वोरस्तुमे जवः। पञ्चौदनसवः(१)॥

## ऋदोरप् ॥ ५७ ॥

ऋकारान्तेभ्य उवर्णान्तेभ्यश्च अप् प्रत्ययो भवति। घञोऽपवादः। पित्करणं स्वरार्थम्। करः। गरः। शरः। उवर्णान्तेभ्यः-यवः, स्तवः, लवः, पवः। दकारो मुखसुखार्थः। मा भूत्तादपि परस्तपरः॥

## ग्रहवृदृनिश्चिगमश्च ॥ ५८ ॥

ग्रहादिभ्यो धातुभ्योऽप् प्रत्ययो भवति। घञोऽपवादः। निश्चिनोतेस्त्वचोऽपवादः। ग्रहः। वरः। दरः। निश्चयः। गमः। निश्चिग्रहणं स्वरार्थम्। ❀वशिरण्योरुपसंख्यानम्❀। वशः। रणः। ❀घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्। प्रतिष्ठन्तेऽस्मिन्निति प्रस्थः(२) पर्वतस्य। प्रस्नात्यस्मिन्प्रस्नः। प्रपिबत्यस्यामिति प्रपा। आविध्यन्ति तेनेत्याविधः। विहन्यन्तेऽस्मिन्निति विघ्नः। आयुध्यतेऽनेनेत्यायुधम्॥

## उपसर्गेऽदः ॥ ५९ ॥

अबित्येव। उपसर्ग उपपदेऽद्धातोरप् प्रत्ययो भवति। विघसः(३)। प्रघसः। उपसर्ग इति किम्? घासः॥

## नौ ण च ॥ ६० ॥

निशब्द उपपदे अदेर्धातोर्णः प्रत्ययो भवति, चकारादप् च। न्यादः। निघसः॥

---

**एरच्**—इवर्णान्त धातुओं से भाव और कर्तृभिन्न कारक में अच् प्रत्यय होता है प्रत्ययान्त से संज्ञा के गम्यमान होने पर।

**अज्विधौ**—'भय' आदि अच्प्रत्ययान्त शब्दों का भी साधुत्व अवगन्तव्य है।

**जवसवौ**—छन्दोविषय में अच्प्रत्ययान्त 'जव तथा 'सव' शब्दों का भी साधुत्व समझना चाहिए।

**ऋदोरप्**—ऋकारान्त तथा उवर्णान्त धातुओं से अप् प्रत्यय होता है।

**ग्रह**—'ग्रह', 'वृ', 'दृ', निस्-पूर्वक 'चि' तथा 'गम्' धातुओं से भी अप् प्रत्यय होता है।

**वशि**—'वश' तथा 'रण' धातुओं से भी अप् प्रत्यय समझना चाहिए।

**घञर्थे**—'स्था', 'स्ना', 'पा', 'व्यध्', 'हन्' तथा 'युध' धातुओं से घञर्थ में क प्रत्यय का विधान अवगन्तव्य है।

**उपसर्गेऽदः**—उपसर्गोपपदक 'अद्' धातु से अप् प्रत्यय होता है।

**नौ**—निपूर्वक 'अद्' धातु से ण तथा अप् प्रत्यय होते हैं।

---

(१) पिण्डौदनसव इति क्वचित्।

(२) प्रस्थः = सानुः, प्रस्नः = कटाहः, प्रपा = पानीयशालकी। आविधः = आयुधम्।

(३) विघसः = वैश्वदेवविशिष्टमन्नम्।

## व्यधजपोरनुपसर्गे ॥ ६१ ॥

व्यध, जप इत्येतयोरनुपसर्गयोरप् प्रत्ययो भवति । घञोऽपवादः । व्यधः । जपः । अनुपसर्ग इति किम् ? आव्याधा, उपजापः ॥

## स्वनहसोर्वा ॥ ६२ ॥

अनुपसर्ग इत्येव । स्वनहसोरनुपसर्गयोर्वा अप् प्रत्ययो भवति । स्वनः, स्वानः । हसः, हासः । अनुपसर्ग इति इति किम् ? प्रस्वानः, प्रहासः ॥

## यमः समुपनिविषु च ॥ ६३ ॥

अनुपसर्गे, वा, इति वर्त्तते । सम्, उप, नि, वि इत्येतेषूपपदेषु अनुपसर्गेऽपि यमेर्वा अप् प्रत्ययो भवति । घञोऽपवादः । संयमः, संयामः । उपयमः, उपयामः । नियमः, नियामः । वियमः, वियामः । अनुपसर्गात् खल्वपि–यमः, यामः ॥

## नौ गदनदपठस्वनः ॥ ६४ ॥

अबित्येव । निशब्द उपपदे गद, नद, पठ, स्वन इत्येतेभ्यो धातुभ्यो वा अप् प्रत्ययो भवति । घञोऽपवादः । निगदः, निगादः । निनदः, निनादः । निपठः, निपाठः । निस्वनः, निस्वानः ॥

## क्वणो वीणायां च ॥ ६५ ॥

नौ, वाऽनुपसर्ग इति वर्त्तते । क्वणतेर्धातोर्निपूर्वादनुपसर्गाच्च वीणायां वा अप् प्रत्ययो भवति । घञोऽपवादः । सोपसर्गार्थं वीणाया ग्रहणम् । निक्वणः, निक्वाणः । अनुपसर्गात्–क्वणः, क्वाणः । वीणायां खल्वपि–कल्याणप्रक्वणा वीणा । एतेष्विति किम् ? अतिक्वाणो वर्त्तते ॥

## नित्यं पणः परिमाणे ॥ ६६ ॥

'पण व्यवहारे स्तुतौ च ।' अस्माद्धातोर्नित्यमप् प्रत्ययो भवति परिमाणे गम्यमाने । नित्यग्रहणं विकल्पनिवृत्त्यर्थम् । मूलकपणः । शाकपणः । संव्यवहाराय मूलकादीनां यः परिमितो मुष्टिर्बध्यते तस्येदमभिधानम् । परिमाण इति किम् ? पाणः ॥

## मदोऽनुपसर्गे ॥ ६७ ॥

मदेर्धातोरनुपसर्गादप् प्रत्ययो भवति । घञोऽपवादः । विद्यामदः । धनमदः । कुलमदः । अनुपसर्ग इति किम् ? उन्मादः, प्रमादः ॥

---

**व्यध**—अनुपसर्गक 'व्यध' तता 'जप' धातुओं से अप् प्रत्यय होता है ।

**स्वन**—अनुपसर्गक 'स्वन' तथा 'हस' धातुओं से भी विकल्प से अप् प्रत्यय होता है ।

**यमः**—सम्, उप, नि तथा वि उपसर्गों के उपपद होने पर 'यम' धातु से विकल्प से अप् प्रत्यय होता है ।

**नौ**—निपूर्वक 'गद', 'नद', 'पठ' तथा 'स्वन' धातुओं से विकल्प से अप् प्रत्यय होता है ।

**क्वणो**—निपूर्वक तथा अनुपसर्गक 'क्वण' धातु से भी वीणा अर्थ में अप् प्रत्यय विकल्प से होता है ।

**नित्यम्**—परिमाण यदि प्रत्ययान्त का वाच्य हो तो 'पण' धातु से नित्य अप् प्रत्यय होता है ।

**मदो**—अनुपसर्गक 'मद' धातु से अप् प्रत्यय होता है ।

## प्रमदसंमदौ हर्षे ॥ ६८ ॥

प्रमद, सम्मद इत्येतौ शब्दौ निपात्येते हर्षेऽभिधेये। कन्यानां प्रमदः। कोकिलानां सम्मदः। हर्ष इति किम्? प्रमादः, सम्मादः। प्रसम्भ्यामिति नोक्तम्, निपातनं रूढ्यर्थम् ॥

## समुदोरजः पशुषु ॥ ६९ ॥

समुदोरुपपदयोरजतेर्धातोः पशुविषये धात्वर्थे अप् प्रत्ययो भवति। घञोऽपवादः। 'अज गतिक्षेपणयोः' इति पठ्यते, स सम्पूर्वः समुदाये वर्त्तते, उत्पूर्वश्च प्रेरणे। समजः पशूनाम्, समुदाय इत्यर्थः। उदजः पशूनाम्, प्रेरणमित्यर्थः। पशुष्विति किम्? समाजो ब्राह्मणानाम्, उदाजः क्षत्रियाणाम् ॥

## अक्षेषु ग्लहः ॥ ७० ॥

ग्लह इति निपात्यते अक्षविषयश्चेद्धात्वर्थो भवति। ग्रहेरप् सिद्ध एव, लत्वार्थं निपातनम्। अक्षस्य ग्लहः। अक्षेष्विति किम्? ग्रहः पादस्य। अन्ये ग्लहिं प्रकृत्यन्तरमाहुः, ते घञं प्रत्युदाहरन्ति—ग्लाह इति ॥

## प्रजने सर्त्तेः ॥ ७१ ॥

सर्त्तेर्धातोः प्रजने विषये अप् प्रत्ययो भवति। घञोऽपवादः। प्रजनं प्रथमं गर्भग्रहणम्। गवामुपसरः। पशूनामुपसरः। स्त्रीगवीषु पुंगवानां गर्भाधानाय प्रथममुपसरणमुच्यते ॥

## ह्वः सम्प्रसारणं च न्यभ्युपविषु ॥ ७२ ॥

नि, अभि, उप, वि इत्येतेषु उपपदेषु ह्वयतेर्धातोः सम्प्रसारणमप् प्रत्ययश्च भवति। घञोऽपवादः। निहवः। अभिहवः। उपहवः। विहवः। एतेष्विति किम्? प्रह्वायः ॥

## आङि युद्धे ॥ ७३ ॥

आङि उपपदे ह्वयतेर्धातोः सम्प्रसारणमप् प्रत्ययश्च भवति युद्धेऽभिधेये। आहूयन्तेऽस्मिन्नित्याहवः। युद्ध इति किम्? आह्वायः ॥

## निपानमाहावः ॥ ७४ ॥

आङ्पूर्वस्य ह्वयतेर्धातोः सम्प्रसारणमप् प्रत्ययो वृद्धिश्च निपात्यते निपानं चेदभिधेयं भवति। निपिबन्त्यस्मिन्निति निपानमुदकाधार उच्यते। आहावः पशूनाम्।

---

**प्रमद**—हर्ष अर्थ में 'प्रमद' तथा 'सम्मद' शब्दों का निपातन है।

**समुदो**—सम् तथा उत् उपसर्गों से विशिष्ट 'अज' धातु से पशु-विषय में अप् प्रत्यय होता है।

**अक्षेषु**—अक्षविषयक धात्वर्थ होने पर 'ग्रह' धातु से अप् प्रत्यय के साथ-साथ रकार के स्थान में लकारादेश का भी निपातन है।

**प्रजने**—प्रजन अर्थ में 'सृ' धातु से अप् प्रत्यय होता है।

**ह्वः**—नि, अभि, उप तथा वि के उपपद होने पर 'ह्वेञ्' धातु से अप् प्रत्यय तथा वि को सम्प्रसारण भी हो जाता है।

**आङि**—आङ्पूर्वक 'ह्वेञ्' धातु से भी अप प्रत्यय तथा व को सम्प्रसारण हो जाता है यदि प्रत्ययान्त का वाच्य युद्ध हो।

**निपान**—आङ्पूर्वक 'ह्वेञ्' धातु से अप् प्रत्यय, प्रकृति को सम्प्रसारण तथा उसे वृद्धि का निपातन किया जाता है।

कूपोपसरेषु य उदकाधारस्तत्र हि पानाय पशव आहूयन्ते । निपानमिति किम् ? आह्वायः ॥

## भावेऽनुपसर्गस्य ॥ ७५ ॥

अनुपसर्गस्य ह्वयतेः सम्प्रसारणमप् प्रत्ययश्च भवति भावेऽभिधेये । हवः । हवे हवे सुहवं शूरमिन्द्रम् । अनुपसर्गस्येति किम् ? आह्वायः । भावग्रहणम् "अकर्तरि च कारके संज्ञायाम्" इत्यस्य निरासार्थम् ॥

## हनश्च वधः ॥ ७६ ॥

भावेऽनुपसर्गस्येति वर्त्तते । हन्तेर्धातोरनुपसर्गे भावे अप् प्रत्ययो भवति, तत्सन्नियोगेन च वधादेशः, स चान्तोदात्तः । तत्रोदात्तनिवृत्तिस्वरेणाप उदात्तत्वं भवति । वधश्चोराणाम् । वधो दस्यूनाम् । भाव इत्येव—घातः । अनुपसर्गस्येत्येव—प्रघातः, विघातः । चकारो भिन्नक्रमत्वान्नादेशेन सम्बध्यते, किं तर्हि प्रकृतेन प्रत्ययेन, अप् च, यश्चापरः प्राप्नोति । तेन घञपि भवति-घातो वर्त्तते ॥

## मूर्तौ घनः ॥ ७७ ॥

हन इत्येव । मूर्तिः काठिन्यम् । मूर्तावभिधेयायां हन्तेरप् भवति घनश्चादेशः । अभ्रघनः । दधिघनः । कथं घनं दर्धाति ? धर्मशब्देन धर्मी भण्यते ॥

## अन्तर्घनो देशे ॥ ७८ ॥

अन्तःपूर्वाद्धन्तेरप् प्रत्ययो घनादेशश्च भवति देशेऽभिधेये । अन्तर्घनः । संज्ञीभूतो वाहीकेषु देशविशेष उच्यते । अन्ये णकारं पठन्ति-अन्तर्घणो देश इति, तदपि ग्राह्यमेव । देश इति किम् ? अन्तर्घातोऽन्यः ॥

## अगारैकदेशे प्रघणः प्रघाणश्च ॥ ७९ ॥

प्रपूर्वस्य हन्तेः प्रघण, प्रघाण इत्येतौ शब्दौ निपात्येते अगारैकदेशे वाच्ये । प्रघणः, प्रघाणः । द्वारप्रकोष्ठो बाह्य उच्यते । अगारैकदेश इति किम् ? प्रघातोऽन्यः ॥

## उद्घनोऽत्याधानम् ॥ ८० ॥

उत्पूर्वस्य हन्तेरुद्घन इति निपात्यतेऽत्याधानं चेद्भवति । उद्घनः, यस्मिन् काष्ठे स्थापयित्वा अन्यानि काष्ठानि तक्ष्यन्ते तदभिधीयते । उद्घातोऽन्यः ॥

## अपघनोऽङ्गम् ॥ ८१ ॥

अपपूर्वस्य हन्तेरपघन इति निपात्यते अङ्गं चेत्तद्भवति । अपघनोऽङ्गम् । अवयव

---

**भावे**—भाव के वाच्य होने पर अनुपसर्गक 'ह्वेञ्' धातु से अप् प्रत्यय तथा प्रकृति को सम्प्रसारण हो जाता है ।

**हनश्च**—अनुपसर्गक 'हन्' धातु से भावार्थ में अप् प्रत्यय और अप् प्रत्यय होने पर हन् को वध आदेश हो जाता है और वह वधादेश अन्तोदात्त भी हो जाता है ।

**मूर्तौ**—'हन्' धातु से अप् प्रत्यय तथा प्रकृति को घन आदेश हो जाता है यदि प्रत्ययान्त का वाच्य काठिन्य हो ।

**अन्त**—अन्तःपूर्वक 'हन्' धातु से अप् प्रत्यय तथा हन् को घन आदेश हो जाता है यदि प्रत्ययान्त का वाच्य देश हो ।

**अगारैक**—प्रपूर्वक 'हन्' धातु से गृहैकदेश के वाच्य होने पर प्रघण तथा प्रघाण शब्दों का निपातन होता है ।

**उद्घनो**—उत्पूर्वक 'हन्' धातु से उद्घन शब्द का अत्याधान अर्थ में निपातन होता है ।

**अपघनो**—अपपूर्वक 'हन्' धातु से अङ्ग अर्थ में अपघन शब्द का निपातन होता है ।

एकदेशो न सर्वः, किं तर्हि पाणिः पादश्चाभिधीयते। अपघातोऽन्यः॥

## करणेऽयोविद्रुषु ॥ ८२ ॥

हन इति वर्त्तते। अयस्, वि, द्रु इत्येतेषूपपदेषु हन्तेर्धातोः करणे कारकेऽप् प्रत्ययो भवति घनादेशश्च। अयो हन्यतेऽनेनेत्ययोघनः। विघनः। द्रुघनः। द्रुघण इति केचिदुदाहरन्ति। कथं णत्वम्? अरीहणादिषु पाठात्, "पूर्वपदात्संज्ञायामगः" इति वा॥

## स्तम्बे क च॥ ८३॥

करणे, हन इति वर्त्तते। स्तम्बशब्द उपपदे करणे कारके हन्तेः कः प्रत्ययो भवति। चकारादप्, तत्र घनादेशः। स्तम्बघ्नः। स्तम्बघनः। ॐस्त्रियां स्तम्बघ्ना, स्तम्बघना इति इष्यतेॐ। करण इत्येव—स्तम्बघातः॥

## परौ घः॥ ८४ ॥

करणे हन इत्येव। परिशब्द उपपदे हन्तेर्धातोरप् प्रत्ययो भवति करणे कारके घशब्दश्चादेशः। परिहन्यतेऽनेनेति परिघः। पलिघः॥

## उपघ्न आश्रये॥ ८५ ॥

उपपूर्वस्य हन्तेरप् प्रत्यय उपधालोपश्च निपात्यते। आश्रयशब्दः सामीप्यं प्रत्यासत्तिं लक्षयति। पर्वतोपघ्नः। ग्रामोपघ्नः। आश्रय इति किम्? पर्वतोपघात एवान्यः॥

## संघोद्घौ गणप्रशंसयोः ॥ ८६ ॥

समुदोरुपपदयोर्हन्तेर्धातोरप् प्रत्ययो भवति टिलोपो घत्वं च निपात्यते यथासंख्यं गणेऽभिधेये प्रशंसायां गम्यमानायाम्। संघः पशूनाम्। उद्घो मनुष्याणाम्। गणप्रशंसयोरिति किम्? संघातः॥

## निघो निमितम्॥ ८७॥

निघ इति निपूर्वाद्धन्तेरप् प्रत्ययष्टिलोपो घत्वं च निपात्यते निमितं चेदभिधेयं भवति। समन्तान्मितं निमितम्। समारोहपरिणाहम्। निघा वृक्षाः। निघाः शालयः। निमितमिति किम्? निघातः॥

---

**करणे**—अयस्, वि एवम् द्रु के उपपद होने पर 'हन्' धातु से करण कारक में अप् प्रत्यय होता है और हन् को घन आदेश भी।

**स्तम्बे**—स्तम्ब शब्द के उपपद होने पर 'हन्' धातु से करणकारक में क प्रत्यय और अप् प्रत्यय होते हैं।

**स्त्रियाम्**—स्त्रीलिङ्ग में 'स्तम्बघ्ना' तथा 'स्तम्बघना' शब्दों का निपातन होता है।

**परौ**—परिपूर्वक 'हन्' धातु से करणकारक में अप् प्रत्यय होता है और हन् को घ आदेश हो जाता है।

**उपघ्नः**—उपपूर्वक 'हन्' धातु से आश्रय अर्थ में अप् प्रत्यय तथा उपधालोप का निपातन किया जाता है।

**सङ्घोद्घौ**—गण के अभिधेय होने पर सम्पूर्वक 'हन्' धातु से और प्रशंसा के गम्यमान होने पर उत्पूर्वक 'हन्' धातु से अप् प्रत्यय, टिलोप तथा घत्व का निपातन है।

**निघो**—निमित के अभिधेय होने पर निपूर्वक 'हन्' धातु से अप् प्रत्यय, टिलोप तथा घत्व का निपातन है।

## ड्वितः क्त्रिः ॥ ८८ ॥

भावेऽकर्त्तरि च कारक इति वर्त्तते। डु इद्यस्य तस्माद् ड्वितो धातोः क्त्रिः प्रत्ययो भवति। "क्त्रेर्मम्नित्यम्" इति वचनात् केवलो न प्रयुज्यते। 'डुपचष् पाके'–पाकेन निर्वृत्तम् पक्त्रिमम्। डुवप्–उप्त्रिमम्। डुकृञ्–कृत्रिमम्॥

## ट्वितोऽथुच् ॥ ८९ ॥

टु इद्यस्य तस्मात् ट्वितो धातोरथुच् प्रत्ययो भवति भावादौ। टुवेपृ–वेपथुः। टुओश्वि–श्वयथुः। टुक्षु–क्षवथुः(१)॥

## यजयाचयतविच्छप्रच्छरक्षो नङ् ॥ ९० ॥

भावेऽकर्त्तरि च कारक इति वर्त्तते। यजादिभ्यो धातुभ्यो नङ् प्रत्ययो भवति। ङकारो गुणप्रतिषेधार्थः। यज्ञः। याच्ञा। यत्नः। विश्नः। रक्ष्णः। प्रच्छेरसंप्रसारणं ज्ञापकात् "प्रश्ने चासन्नकाले" इति॥

## स्वपो नन् ॥ ९१ ॥

स्वपेर्द्धातोर्नन् प्रत्ययो भवति। नकारः स्वरार्थः। स्वप्नः॥

## उपसर्गे घोः किः ॥ ९२ ॥

भावेऽकर्त्तरि च कारक इति वर्त्तते। उपसर्गे उपपदे घुसंज्ञकेभ्यो धातुभ्यः किः प्रत्ययो भवति। कित्करणमातो लोपार्थम्। प्रदिः। प्रधिः। अन्तर्द्धिः॥

## कर्मण्यधिकरणे च ॥ ९३ ॥

घोरित्येव। कर्मण्युपपदे घुसंज्ञकेभ्यो धातुभ्यः किः प्रत्ययो भवति अधिकरणे कारके। जलं धीयतेऽस्मिन्निति जलधिः। शरधिः। अधिकरणग्रहणमर्थान्तरनिरासार्थम्। चकारः प्रत्ययानुकर्षणार्थः॥

## स्त्रियां क्तिन् ॥ ९४ ॥

भावेऽकर्त्तरि च कारक इति वर्त्तते। स्त्रीलिङ्गे भावादौ धातोः क्तिन् प्रत्ययो भवति। घञजपामपवादः। कृतिः। चितिः। मतिः। ॐक्तिन्नाबादिभ्यश्च वक्तव्यःॐ। आबादयः प्रयोगतोऽनुसर्त्तव्याः। आप्तिः। राद्धिः। दीप्तिः। स्रस्तिः। ध्वस्तिः। आस्तिः। लब्धिः। ॐश्रुयजिस्तुभ्यः करणेॐ। श्रूयतेऽनयेति श्रुतिः। इष्टिः। स्तुतिः। ॐग्लाम्लाज्याहाभ्यो

---

ड्वितः—डु की इत्संज्ञा होती हो जिस धातु में उससे भाव तथा कर्तृभिन्न कारक में क्त्रि प्रत्यय होता है।

ट्वितो—ट्वित धातु से भाव तथा कर्तृभिन्न कारक में अथुच् प्रत्यय होता है।

यजयाच—भाव तथा कर्तृभिन्न कारक में 'यज', 'याच्', 'यत', 'विच्छ', 'प्रच्छ' तथा 'रक्ष' धातुओं से नङ् प्रत्यय होता है।

स्वपो—'स्वप्' धातु से नङ् प्रत्यय होता है।

उपसर्गे—भाव तथा कर्तृभिन्न कारक मे सोपसर्गक घुसंज्ञक धातु से कि प्रत्यय होता है।

कर्म—कर्मकारक के उपपद होने पर घुसंज्ञक धातु से अधिकरण में कि प्रत्यय होता है।

स्त्रियाम्—भाव तथा कर्तृभिन्न कारक में धातु से स्त्रीलिङ्ग में क्तिन् प्रत्यय होता है।

क्तिन्—'आप्' आदि धातुओं से भी क्तिन् प्रत्यय समझना चाहिए।

श्रुयजि—'श्रु' तथा 'यज' धातुओं से करणकारक में क्तिन् प्रत्यय समझना चाहिए।

ग्लाम्ला—'ग्लै', 'म्लै', 'ज्या' तथा 'हा' धातुओं से नि प्रत्यय समझना चाहिए।

---

(१) टुदु, दवथु इत्यपि क्वचित्।

निः॥ । ग्लानिः । म्लानिः । ज्यानिः । हानिः । ॥ऋकारल्वादिभ्यः क्तिन्निष्ठावद्भवति इति वक्तव्यम्॥ । कीर्णिः । गीर्णिः । जीर्णिः । शीर्णिः । लूनिः । पूनिः । ॥संपदादिभ्यः क्विप्॥ । संपत् । विपत् । प्रतिपत् । ॥क्तिन्नपीष्यते॥ । संपत्तिः । विपत्तिः ॥

## स्थागापापचो भावे ॥ ९५ ॥

स्त्रियामिति वर्तते । स्थादिभ्यो धातुभ्यः स्त्रीलिङ्गे भावे क्तिन् प्रत्ययो भवति । अङोऽपवादस्य बाधकः । प्रस्थितिः । उद्गीतिः । संगीतिः । प्रपीतिः । संगीतिः । पक्तिः । भावग्रहणमर्थान्तरनिरासार्थम् । कथमवस्था, संस्थेति ? "व्यवस्थायामसंज्ञायाम्" इति ज्ञापकात् नात्यन्ताय बाधा भवतीति ॥

## मन्त्रे वृषेषपचमनविद्भूवीरा उदात्तः ॥ ९६ ॥

भावे, स्त्रियामिति वर्तते । मन्त्रे विषये वृषादिभ्यो धातुभ्यः क्तिन् प्रत्ययो भवति उदात्तः । प्रकृतिप्रत्ययोर्विभक्तिविपरिणामेन संबन्धः । कस्मादेवं कृतम् ? वैचित्र्यार्थम् । वृष्टिः । इष्टिः । पक्तिः । मतिः । वित्तिः । भूतिः । वीतिः । रातिः । सर्वत्र सर्वधातुभ्यः सामान्येन विहित एव क्तिन् , उदात्तार्थं वचनम् । इषेस्तु "इच्छा" इति निपातनं वक्ष्यति, ततः क्तिन्नपि विधीयते, मन्त्रादन्यत्रादिरुदात्तः ॥

## ऊतियूतिजूतिसातिहेतिकीर्तयश्च ॥ ९७ ॥

मन्त्र इति नानुवर्तते । ऊत्यादयः शब्दा निपात्यन्ते । उदात्त इति वर्तते । अवतेः "ज्वरत्वरस्रिव्यविमवामुपधायाश्च" इति ऊठ् । ऊतिः । स्वरार्थं वचनम् । यौतेर्जवतेश्च दीर्घत्वं निपात्यते । यूतिः । जूतिः । सातिः, स्यतेरित्वाभावो निपात्यते, सनोतेर्वा "जनसनखनाम्" इत्यात्वे कृते स्वरार्थं निपातनम् । हन्तेर्हिनोतेर्वा—हेतिः । कीर्तयतेः—कीर्त्तिः ॥

## व्रजयजोर्भावे क्यप् ॥ ९८ ॥

उदात्त इत्येव । व्रजयजोर्धात्वोः स्त्रीलिंगे भावे क्यप् प्रत्ययो भवति उदात्तः । क्तिनोऽपवादः । व्रज्या । इज्या । पित्करणमुत्तरत्र तुगर्थम् ॥

## संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः ॥ ९९ ॥

भाव इति न स्वर्यते । पूर्व एवात्रार्थाधिकारः । समजादिभ्यो धातुभ्यः स्त्रियां क्यप् प्रत्ययो भवति उदात्तः संज्ञायां विषये । समजन्त्यस्यामिति समज्या । निषद्या । निपत्या ।

**ऋकार**—ऋकारान्त तथा 'लू' आदि धातुओं से विहित क्तिन् प्रत्यय निष्ठा प्रत्ययों की तरह कार्यभागी होता है—ऐसा समझना चाहिए।

**सम्पदादिभ्यः**—सम् आदि पूर्वक 'पद' धातु से क्विप् प्रत्यय समझना चाहिए।

**क्तिन्नपि**—सम् आदि से विशिष्ट 'पद' धातु से क्तिन् प्रत्यय भी समझना चाहिए।

**स्थागा**—भाव अर्थ में 'स्था', 'गा', 'पा' तथा 'पच' धातुओं से स्त्रीलिङ्ग में क्तिन् प्रत्यय होता है।

**मन्त्रे**—मन्त्रविषय में भाव अर्थ में 'वृष', 'इष', पच', 'मन', 'भू', 'वी' तथा 'रा' धातुओं से क्तिन् प्रत्यय होता है और वह उदात्त भी हो जाता है।

**ऊतियूति**—'ऊति', 'यूति,' 'जूति', 'साति', 'हेति' तथा 'कीर्त्ति' शब्दों का निपातन है।

**व्रज**—भाव अर्थ में 'व्रज' तथा 'यज' धातुओं से स्त्रीलिङ्ग में उदात्त क्यप् प्रत्यय होता है।

**संज्ञायाम्**—संज्ञा-विषय मे सम्पूर्वक 'अज', निपूर्वक 'सद्', निपूर्वक 'पत', 'मन', 'विद्', 'षुञ्', 'शीङ्', 'भृञ्' तथा 'इण्' धातुओं से स्त्रीत्वार्थक उदात्त क्यप् प्रत्यय होता है।

मन्या(१)। विद्या। सुत्या। शय्या। भृत्या। इत्या। कथं तदुक्तम्—'स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिद्ध्यति' इति ? भावाधिकारो भावव्यापारो वाच्यत्वेन विवक्षितो न तु शास्त्रीयोऽधिकारः॥

## कृञः श च॥ १००॥

करोतेर्धातोः स्त्रियां शः प्रत्ययो भवति चकारात् क्यप् च। योगविभागोऽत्र कर्त्तव्यः, क्तिन्नपि यथा स्यात्। क्रिया। कृत्या। कृतिः॥

## इच्छा॥ १०१॥

इषेर्धातोः शः प्रत्ययो यगभावश्च निपात्यते। इच्छा। ॐपरिचर्यापरिसर्यामृगयाऽटाट्यानामुपसंख्यानम्ॐ। परिचर्या। परिसर्या। मृगया। अटाट्या। ॐजागर्तेरकारो वाॐ। जागरा। जागर्या॥

## अ प्रत्ययात्॥ १०२॥

प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारः प्रत्ययो भवति। क्तिनोऽपवादः। चिकीर्षा। जिहीर्षा। पुत्त्रीया। पुत्त्रकाम्या। लोलूया। कण्डूया॥

## गुरोश्च हलः॥ १०३॥

हलन्तो यो धातुर्गुरुमान् ततः स्त्रियामकारः प्रत्ययो भवति। क्तिनोऽपवादः। कुण्डा। हुण्डा। ईहा। ऊहा। गुरोरिति किम् ? भक्तिः। हल इति किम् ? नीतिः॥

## षिद्भिदादिभ्योऽङ्॥ १०४॥

षिद्भ्यो भिदादिभ्यश्च स्त्रियामङ् प्रत्ययो भवति। गणपठितेषु भिदादिषु निष्कृष्य प्रकृतयो गृह्यन्ते। जॄष्–जरा। त्रपूष्–त्रपा। भिदादिभ्यः खल्वपि–भिदा, छिदा, विदा, क्षिपा। गुहागिर्योषध्योः। श्रद्धा। मेधा। गोधा। आरा। हारा। कारा। क्षिया। तारा। धारा। लेखा। रेखा। चूडा। पीडा। वपा। वसा। सृजा। ॐक्रपेः सम्प्रसारणं चॐ। कृपा। भिदा विदारणे। भित्तिरन्या। छिदा द्वैधीकरणे। छित्तिरन्या॥ आरा शस्त्र्याम्। आर्त्तिरन्या। धारा प्रपाते। धृतिरन्या॥

## चिन्तिपूजिकथिकुम्बिचर्चश्च॥ १०५॥

'चिति स्मृत्याम्', 'पूज पूजायाम्', 'कथ वाक्यप्रबन्धे', 'कुबि आच्छादने', 'चर्च

---

कृञः—'कृञ्' धातु से स्त्रीत्वार्थक क्यप् तथा श प्रत्यय होते हैं।

इच्छा—'इष्' धातु से स्त्रीत्वार्थक श प्रत्यय तथा यक् के अभाव का निपातन है।

परि—शप्रत्ययान्त 'परिचर्या', 'परिसर्या', 'मृगया' तथा 'अटाट्या' शब्दों का भी निपातन करना चाहिए।

जागर्त्तेः—'जागृ' धातु से विकल्प से अ प्रत्यय तथा श प्रत्यय होते हैं—ऐसा समझना चाहिए।

अ प्रत्यात्—प्रत्ययान्त धातुओं से स्त्रीत्वार्थक अ प्रत्यय होता है।

गुरोश्च—हलन्त गुरुमान् धातु से भी स्त्रीलिङ्ग में अ प्रत्यय होता है।

षिद्—षित् तथा 'भिद' आदि धातुओं से स्त्रीलिङ्ग में अङ् प्रत्यय होता है।

क्रपेः—'क्रप' धातु से अङ् प्रत्यय तथा प्रकृति को सम्प्रसारण हो जाता है।

चिन्ति—'चिति', 'पूज', 'कथ', 'कुबि' तथा 'चर्च' धातुओं से स्त्रीलिङ्ग में अङ् प्रत्यय होता है।

---

(१) मत्या इति न्याससम्मतः पाठः।

अध्ययने, चुरादिः, इत्येतेभ्यो धातुभ्यो युचि प्राप्ते स्त्रियामङ् प्रत्ययो भवति। चिन्ता। पूजा। कथा। कुम्बा। चर्चा। चकाराद्युजपि भवति—चिन्तना(१)॥

## आतश्चोपसर्गे॥ १०६॥

आकारान्तेभ्य उपसर्गे उपपदे स्त्रियामङ् प्रत्ययो भवति। क्तिनोऽपवादः। प्रदा। उपदा। प्रधा। उपधा। ॐश्रदन्तरोरुपसर्गवद्वृत्तिःॐ। श्रद्धा। अन्तर्द्धा॥

## ण्यासश्रन्थो युच्॥ १०७॥

ण्यन्तेभ्यो धातुभ्य आस, श्रन्थ इत्येताभ्यां च स्त्रियां युच्प्रत्ययो भवति। अकारस्यापवादः। कारणा। हारणा। आसना। श्रन्थना। कथमास्या? ऋहलोर्ण्यदिति भविष्यति। वासरूपप्रतिषेधश्च स्त्रीप्रकरणविषयस्यैवोत्सर्गापवादस्य। श्रन्थिः क्र्यादिर्गृह्यते 'श्रन्थ विमोचनप्रतिहर्षयोः' इति। न चुरादिः 'श्रन्थ ग्रन्थ संदर्भे' इति, ण्यन्तत्वेनैव सिद्धत्वात्। ॐघट्टिवन्दिविदिभ्य उपसंख्यानम्ॐ। घट्टना। वन्दना। वेदना। घट्टेस्तौदादिकस्य ग्रहणम्—'घट्ट चलने' इति। चौरादिकस्य 'घट्ट संवरणे' इत्यस्य न ग्रहणम्, तस्य णेरित्येव सिद्धत्वात्। ॐइषेरनिच्छार्थस्य युज् वक्तव्यःॐ। अध्येषणा। अन्वेषणा। ॐपरेर्वाॐ। पर्येषणा, परीष्टिः॥

## रोगाख्यायां ण्वुल् बहुलम्॥ १०८॥

रोगाख्यायां गम्यमानायां धातोर्बहुलं ण्वुल् प्रत्ययो भवति। क्तिन्नादीनामपवादः। आख्याग्रहणं रोगस्य चेत् प्रत्ययान्तेन संज्ञा भवति। बहुलग्रहणं व्यभिचारार्थम्। प्रच्छर्दिका। प्रवाहिका। (२)विचर्चिका। न च भवति—शिरोर्त्तिः। ॐधात्वर्थनिर्देशे ण्वुल् वक्तव्यःॐ। आशिका, शायिका वर्त्तते। ॐइक्श्तिपौ धातुनिर्देशे इति वक्तव्यम्ॐ। भिदिः। छिदिः। पचतिः। पठतिः। ॐवर्णात्कारःॐ। निर्देश इति प्रकृतम्। अकारः। इकारः। ॐरादिफःॐ। रेफः। ॐमत्वर्थाच्छःॐ। अकारलोपश्च(३)। मत्वर्थीयः। ॐइणजादिभ्यःॐ।

---

**आतः**—उपसर्गविशिष्ट आकारान्त धातुओं से भी स्त्रीलिङ्ग में अङ् प्रत्यय होता है।

**श्रदन्तरोः**—श्रत् तथा अन्तर् शब्दों से विशिष्ट धातुओं से भी उपसर्गोपपदक धातु के समान कार्य समझना चाहिए।

**ण्यास**—ण्यन्त तथा 'आस' एवं 'श्रन्थ' धातुओं से स्त्रीलिङ्ग में युच् प्रत्यय होता है।

**घट्टि**—'घट्टि', 'वन्दि' तथा 'विदि' धातुओं से भी युच् प्रत्यय समझना चाहिए।

**इषेः**—अनिच्छार्थक 'इष्' धातु से भी युच् प्रत्यय समझना चाहिए।

**परेर्वा**—परिपूर्वक 'इष्' धातु से विकल्प से युच् प्रत्यय समझना चाहिए।

**रोगाख्यायाम्**—धातुमात्र से बहुल करके ण्वुल् प्रत्यय होता है यदि प्रत्ययान्त रोगवाचक हो।

**धात्वर्थ**—धात्वर्थ निर्देश में धातुओं से ण्वुल् प्रत्यय समझना चाहिए।

**इक्**—धातु के निर्देश के लिए धातु से इक् तथा श्तिप् प्रत्यय अवगन्तव्य हैं।

**वर्णात्**—वर्णवाचक शब्दों से कार प्रत्यय अवगन्तव्य है।

**रादिफः**—र शब्द से इफ प्रत्यय भी समझना चाहिए।

**मत्वर्थाच्छः**—मत्वर्थ शब्द से छ प्रत्यय समझना चाहिए।

**इणजादिभ्यः**—'अज' आदि धातुओं से इण् प्रत्यय समझना चाहिए।

---

(१) चकाराद्युजपि भवति—चिन्तना इत्यधिकम्, टीकाविरोधात्।

(२) प्रचर्चिका इति न्यासपाठः।

(३) न्यासपदमंजरीपर्यालोचनया नायं मूलपाठ इति प्रतीयते।

आजिः । आतिः । आदिः । ॐइक् कृष्यादिभ्यःॐ । कृषिः । किरिः ॥

## संज्ञायाम् ॥ १०९ ॥

संज्ञायां विषये धातोर्ण्वुल् प्रत्ययो भवति । उद्दालकपुष्पभञ्जिका । वरणपुष्पप्रवाहिका(१) । अभ्यूषखादिका । आचोषखादिका । शालभञ्जिका । तालभञ्जिका ॥

## विभाषाख्यानपरिप्रश्नयोरिञ् च ॥ ११० ॥

पूर्वं परिप्रश्नः, पश्चादाख्यानम् । सूत्रेऽल्पाच्तरस्य पूर्वनिपातः । परिप्रश्न आख्याने च गम्यमाने धातोरिञ् प्रत्ययो भवति चकाराद् ण्वुलपि । विभाषाग्रहणात् परोऽपि यः प्राप्नोति सोऽपि भवति । कां त्वं कारिमकार्षीः ?कां कारिकामकार्षीः ? कां क्रियामकार्षीः ? कां कृत्यामकार्षीः ? कां कृतिमकार्षीः ? सर्वां कारिमकार्षम् । सर्वां कारिकामकार्षम् । सर्वां क्रियामकार्षम् । सर्वां कृत्यामकार्षम् । सर्वां कृतिमकार्षम् । कां गणिमजीगणः ? कां गणिकामजीगणः ? कां गणनामजीगणः ? सर्वां गणिमजीगणम् । सर्वां गणिकाम् । सर्वां गणनाम् । एवम्—कां याजिम्, कां याजिकाम्; कां याचिम्, कां याचिकाम्, कां पाचिम्, कां पाचिकाम्; कां पक्तिम्, कां पाठिम्, कां पाठिकाम्, कां पठितिम् इति द्रष्टव्यम् । आख्यानपरिप्रश्नयोरिति किम् ? कृतिः, हृतिः ॥

## पर्यायार्हर्णोत्पत्तिषु ण्वुच् ॥ १११ ॥

पर्यायः परिपाटी क्रमः, अर्हणमर्हः, तद्योग्यता, ऋणं तद् यत्परस्य(२)धार्यते, उत्पत्तिर्जन्म , इत्येतेष्वर्थेषु धातोर्ण्वुच् प्रत्ययो भवति । क्तिन्नादीनामपवादः । पर्याये तावत्-भवतः शायिका, भवतोऽग्रग्रासिका(३) । अर्हे-अर्हति भवानिक्षुभक्षिकाम्(४) । ऋणे-इक्षुभक्षिकां मे धारयसि, ओदनभोजिकाम्, पयः पायिकाम् । उत्पत्तौ-इक्षुभक्षिका मे उदपादि , ओदनभोजिका, पयः पायिका । विभाषेत्येव—चिकीर्षोत्पद्यते । ण्वुलि प्रकृते प्रत्ययान्तरकरणं स्वरार्थम् ॥

## आक्रोशे नञ्यनिः ॥ ११२ ॥

विभाषेति निवृत्तम् । आक्रोशः शपनम् । आक्रोशे गम्यमाने नञ्युपपदे धातोरनिः प्रत्ययो भवति । क्तिन्नादीनामपवादः । अकरणिस्ते वृषल भूयात् । आक्रोश इति किम् ? अकृतिस्तस्य कटस्य । नञीति किम् ? मृतिस्ते वृषल भूयात् ॥

## कृत्यल्युटो बहुलम् ॥ ११३ ॥

भावेऽकर्तरि च कारक इति निवृत्तम् । कृत्यसंज्ञकाः प्रत्यया ल्युट् च बहुलमर्थेषु

---

**इक्**—'कृष्' आदि धातुओं से इक् प्रत्यय अवगन्तव्य है ।

**संज्ञायाम्**—संज्ञा-विषय में धातु से ण्वुल् प्रत्यय होता है ।

**विभाषा**—धातु से विकल्प से ण्वुल् तथा इञ् प्रत्यय होते हैं यदि प्रत्ययान्त के द्वारा परिप्रश्न तथा आख्यान की प्रतीति होती हो ।

**पर्याया**—पर्याय, योग्यता, ऋण तथा जन्म अर्थों में धातु से ण्वुच् प्रत्यय होता है ।

**आक्रोशे**—नञुपपदक धातु से आक्रोश के गम्यमान होने पर अनि प्रत्यय होता है ।

**कृत्य**—कृत्यसंज्ञक प्रत्यय तथा ल्युट् प्रत्यय उक्त अर्थ से भिन्न अर्थों में भी होते हैं ।

---

(१) वरणपुष्पप्रचायिका इति पाठन्तरम् ।

(२) परस्मै इति पाठान्तरम् ।

(३) ग्रामगामिका इति पाठान्तरम् ।

(४) पयः पायिकाम् इति क्वचिदधिकम् ।

भवन्ति, यत्र विहितास्ततोऽन्यत्रापि भवन्ति। भावकर्मणोः कृत्या विहिताः कारकान्तरेऽपि भवन्ति—स्नानीयं चूर्णम्, दानीयो ब्राह्मणः। करणाधिकरणयोर्भावे च ल्युट्, अन्यत्रापि भवति-अपसेचनम्, अवस्रावणम्, राजभोजनाः शालयः, राजाच्छादनानि वासांसि, प्रस्कन्दनम्, प्रपतनम्। बहुलग्रहणादन्येऽपि कृतो यथाप्राप्तमभिधेयं व्यभिचरन्ति-पादाभ्यां ह्रियते पादहारकः, गले चोप्यते गलेचोपकः॥

## नपुंसके भावे क्तः॥ ११४॥

नपुंसकलिङ्गे भावे धातोः क्तः प्रत्ययो भवति। हसितम्। सहितम्। जल्पितम्(१)॥

## ल्युट् च॥ ११५॥

नपुंसकलिंगे भावे धातोर्ल्युट् प्रत्ययो भवति। हसनं छात्रस्य। शोभनम्। जल्पनम्। शयनम्। आसनम्। योगविभाग उत्तरार्थः॥

## कर्मणि च येन संस्पर्शात्कर्त्तुः शरीरसुखम्॥ ११६॥

येन कर्मणा संस्पृश्यमानस्य कर्त्तुः शरीरसुखमुत्पद्यते तस्मिन् कर्मण्युपपदे धातोर्नपुंसकलिङ्गे भावे ल्युट् प्रत्ययो भवति। पूर्वेणैव सिद्धे प्रत्यये नित्यसमासार्थं वचनम्, उपपदसमासो हि नित्यः समासः। पयःपानं सुखम्। ओदनभोजनं सुखम्। कर्मणीति किम्? तूलिकाया उत्थानं सुखम्। संस्पर्शादिति किम्? अग्निकुण्डस्योपासनं सुखम्। कर्त्तुरिति किम्? गुरोः स्नापनं सुखम्। स्नापयतेर्न गुरुः कर्त्ता, किं तर्हि कर्म। शरीरग्रहणं किम्? पुत्रस्य परिष्वञ्जनं सुखम्। सुखं मानसी प्रीतिः। सुखमिति किम्? कण्टकानां मर्दनं दुःखम्। सर्वत्रासमासः प्रत्युदाह्रियते॥

## करणाधिकरणयोश्च॥ ११७॥

करणेऽधिकरणे च कारके धातोर्ल्युट् प्रत्ययो भवति। इध्मप्रव्रश्चनः। पलाशशातनः। अधिकरणे-गोदोहनी, सक्तुधानी॥

## पुंसि संज्ञायां घः प्रायेण॥ ११८॥

करणाधिकरणयोरित्येव। पुंलिङ्गयोः करणाधिकरणयोरभिधेययोर्धातोर्घः प्रत्ययो भवति समुदायेन चेत् संज्ञा गम्यते। प्रायग्रहणमकार्त्स्न्यार्थम्। दन्तच्छदः(२)। उरश्छदः। घटः। अधिकरणे खल्वपि-एत्य तस्मिन् कुर्वन्तीत्याकरः, आलयः।

---

**नपुंसके**—भाव अर्थ में धातु से क्त प्रत्यय होता है और वह क्तान्त शब्द नपुंसकलिङ्ग हो जाता है।

**ल्युट्**—धातु से भाव अर्थ में ल्युट् प्रत्यय भी होता है और ल्युडन्त शब्द का नपुंसकलिङ्गत्व भी।

**कर्मणि**—जिस कर्मकारक के संस्पर्श से कर्त्ता के शरीर में सुख की अनुभूति हो उस कर्मकारक के उपपद होने पर धातु से भावार्थ में ल्युट् प्रत्यय होता है और ल्युडन्त शब्द का नपुंसकत्व भी।

**कारणाधिकरणयोः**—करण तथा अधिकरण कारकों के अभिधेय होने पर धातु से ल्युट् प्रत्यय होता है।

**पुंसि**—पुंस्त्वविशिष्ट कर्म तथा अधिकरण कारकों के अभिधेय होने पर धातु से घ प्रत्यय होता है यदि समुदाय से संज्ञा की प्रतीति होती हो।

---

(१) शयितम्, भुक्तम्, आसितम् इति क्वचिदधिकम्।

(२) दन्तच्छदो इति पदमञ्जरी।

पुंसीति किम् ? प्रसाधनम् । संज्ञायामिति किम् ? प्रहरणो दण्डः । घकारः "छादेर्घः" इति विशेषणार्थः ॥

### गोचरसंचरवहव्रजव्यजापणनिगमाश्च ॥ ११९ ॥

गोचरादयः शब्दा घप्रत्ययान्ता निपात्यन्ते पूर्वस्मिन्नेवार्थे । "हलश्च" इति घञ् वक्ष्यति, तस्यायमपवादः । गावश्चरन्त्यस्मिन्निति गोचरः । संचरन्तेऽनेनेति संचरः । वहन्ति तेन वहः । व्रजन्ति तेन व्रजः । व्यजन्ति तेन व्यजः । निपातनात् "अजेर्व्यघञपोः" इति वीभावो न भवति । एत्य तस्मिन्नापणन्त इत्यापणः । निगच्छन्ति तस्मिन्निति निगमः । चकारोऽनुक्तसमुच्चयार्थः—कषः, निकषः ॥

### अवे तॄस्त्रोर्घञ् ॥ १२० ॥

अव उपपदे तरतेस्तृणातेश्च धातोः करणाधिकरणयोः संज्ञायां घञ् प्रत्ययो भवति । घस्यापवादः । ञकारो वृद्ध्यर्थः, स्वरार्थश्च । घकार उत्तरत्र कुत्वार्थः । अवतारः । अवस्तारः । कथमवतारो नद्याः ? न हीयं संज्ञा । प्रायानुवृत्तेरसंज्ञायामपि भवति ॥

### हलश्च ॥ १२१ ॥

पुंसि संज्ञायाम्, करणाधिकरणयोश्चेति सर्वमनुवर्त्तते । हलन्ताद्धातोः करणाधिकरणयोर्घञ् प्रत्ययो भवति । घस्यापवादः । लेखः । वेदः । वेष्टः । बन्धः । मार्गः । अपामार्गः । वीमार्गः ॥

### अध्यायन्यायोद्यावसंहाराधारावायाश्च ॥ १२२ ॥

अध्यायादयः शब्दा घञन्ता निपात्यन्ते । पुंसि संज्ञायां घे प्राप्ते घञ् विधीयते । अहलन्तार्थ आरम्भः । अधीयतेऽस्मिन्नित्यध्यायः । नीयतेऽनेनेति न्यायः । उद्युवन्ति अस्मिन्नित्युद्यावः । संह्रियन्तेऽनेनेति संहारः । आध्रियतेऽस्मिन्नित्याधारः । आवयन्त्यस्मिन्नित्यावायः । चकारोऽनुक्तसमुच्चयार्थः-अवहारः ॥

### उदङ्कोऽनुदके ॥ १२३ ॥

उदङ्क इति निपात्यते अनुदकविषयश्चेद्धात्वर्थो भवति । उत्पूर्वादञ्चतेर्घञ् निपात्यते । ननु च "हलश्च" इति सिद्ध एव घञ् ? उदके प्रतिषेधार्थमिदं वचनम्—तैलोदङ्कः । अनुदक इति किम् ? उदकोदञ्चनः । घः कस्मान्न प्रत्युदाह्रियते ? विशेषाभावात् । घञ्यपि थाथादिस्वरेणान्तोदात्त एव ॥

### जालमानायः ॥ १२४ ॥

आनाय इति निपात्यते जालं चेत्तद्भवति । आङ्पूर्वान्नयतेः करणे घञ् निपात्यते ।

**गोचर**—पूर्वसूत्रोक्त अर्थ में हीं घप्रत्ययान्त 'गोचर', 'सञ्चर' आदि शब्दों का निपातन होता है ।

**अवे**—अव के उपपद होने पर 'तॄ' तथा 'स्तॄ' धातुओं से पुंस्त्वविशिष्ट करण तथा अधिकरण कारकों के अर्थ में घञ् प्रत्यय होता है यदि प्रत्ययान्त शब्द से संज्ञा की प्रतीति होती हो ।

**हलश्च**—पुंस्त्वविशिष्ट करण तथा अधिकरण अर्थों में हलन्त धातुओं से घञ् प्रत्यय होता है प्रत्ययान्त से संज्ञा की प्रतीति होने पर ।

**अध्याय**—पूर्वोक्त अर्थ में घञ्प्रत्ययान्त 'अध्याय' आदि शब्दों का निपातन होता है ।

**उदङ्को**—उदकभिन्न धात्वर्थ में घञ्प्रत्ययान्त 'उदङ्क' शब्द का निपातन होता है ।

**जालम्**—जाल अर्थ में घञ्प्रत्ययान्त 'आनाय' शब्द का निपातन होता है ।

आनायो मत्स्यानाम् । आनायो मृगाणाम्(१) ॥

## खनो घ च ॥ १२५ ॥

खनतेर्धातोः करणाधिकरणयोर्घः प्रत्ययो भवति, चकाराद् घञ् च। आखनः। आखानः। ॐडो वक्तव्यःॐ। आखः। ॐडरो वक्तव्यःॐ। आखरः। ॐइको वक्तव्यःॐ। आखनिकः। ॐइकवको वक्तव्यःॐ। आखनिकवकः(२) ॥

## ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥ १२६ ॥

करणाधिकरणयोरिति निवृत्तम्। ईषत्, दुस्, सु इत्येतेषूपपदेषु कृच्छ्राकृच्छ्रार्थेषु धातोः खल् प्रत्ययो भवति। कृच्छ्रं दुःखम्, तद् दुरो विशेषणम्। अकृच्छ्रं सुखम्, तदितरयोर्विशेषणम्, सम्भवात्। ईषत्करो भवता कटः। दुष्करः। सुकरः। ईषद्भोजः। दुर्भोजः। सुभोजः। ईषदादिष्विति किम्? कृच्छ्रेण कार्यः कटः। कृच्छ्राकृच्छ्रार्थेष्विति किम्? ईषत्कार्यः। लकारः स्वरार्थः। खित्करणमुत्तरत्र मुमर्थम् ॥

## कर्तृकर्मणोश्च भूकृञोः ॥ १२७ ॥

भवतेः करोतेश्च धातोर्यथासंख्यं कर्त्तरि कर्मणि चोपपदे चकारादीषदादिषु च खल् प्रत्ययो भवति। ईषदाढ्यम्भवं भवता। दुराढ्यम्भवम्। स्वाढ्यंकरो देवदत्तो भवता। ॐकर्तृकर्मणोश्च्व्यर्थयोरिति वक्तव्यम्ॐ। इह मा भूत्–आढ्येन सुभूयते(३) ॥

## आतो युच् ॥ १२८ ॥

ईषदादयोऽनुवर्त्तन्ते। कर्तृकर्मणोरिति न स्वर्यते। कृच्छ्राकृच्छ्रार्थेषु ईषदादिषूपपदेषु आकारान्तेभ्यो धातुभ्यो युच् प्रत्ययो भवति। खलोऽपवादः। ईषत्पानः सोमो भवता। दुष्पानः। सुपानः। ईषद्दानो गौर्भवता। दुर्दानः। सुदानः ॥

---

**खनो**—करण तथा अधिकरण अर्थों में 'खन' धातु से घ तथा घञ् प्रत्यय होते हैं।

**डो**—'खन' धातु से ड प्रत्यय भी समझना चाहिए।

**डरो**—'खन' धातु से डर प्रत्यय भी अवगन्तव्य है।

**इको**—'खन' धातु से इक प्रत्यय भी समझना चाहिए।

**इकवको**—'खन' धातु से इकवक प्रत्यय भी अवगन्तव्य है।

**ईषद्**—ईषत्, दुस् अथवा सु के उपपद होने पर (यथासम्भव) दुःख तथा सुख अर्थों में धातु से खल् प्रत्यय होता है।

**कर्तृ**—कर्त्ता के उपपद होने पर 'भू' धातु से तथा कर्म के उपपद होने पर 'कृञ्' धातु से और ईषत् आदि के उपपद होने पर 'भू' तथा 'कृञ्' धातुओं से खल् प्रत्यय होता है।

**कर्तृकर्मणोः**—अभूततद्भावार्थक कर्त्ता तथा कर्म के उपपद होने पर भी क्रमशः 'भू' तथा 'कृञ्' धातुओं से खल् प्रत्यय अवगन्तव्य है।

**आतो**—ईषत्, दुस् अथवा सु के उपपद होने पर आदन्त धातु से सुख तथा दुःख अर्थों में युच् प्रत्यय होता है।

---

(१) जालमिति किम्? आनयः इति क्वचित्।

(२) खलो भगः पदं चेति वक्तव्यम् इति कुत्रचित्पठ्यते, तन्न युक्तम्, पदमञ्जरीविरोधात्।

(३) स्वाढ्य न भूयते इति पाठो न योग्यः, पदमञ्जरीविरोधात्।

## छन्दसि गत्यर्थेभ्यः ॥ १२९ ॥

ईषदादिषु कृच्छ्राकृच्छ्रार्थेषूपपदेषु गत्यर्थेभ्यो धातुभ्यश्छन्दसि विषये युच्प्रत्ययो भवति । खलोऽपवादः । सूपसदनोऽग्निः । सूपसदनमन्तरिक्षम् ॥

## अन्येभ्योऽपि दृश्यते ॥ १३० ॥

अन्येभ्योऽपि धातुभ्योऽगत्यर्थेभ्यश्छन्दसि विषये युच्प्रत्ययो दृश्यते । सुदोहनामकृणोद् ब्रह्मणे गाम् । सुवेदनामकृणोद् ब्रह्मणे गाम् । *भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज् वक्तव्यः* । दुःशासनः । दुर्योधनः । दुर्दर्शनः । दुर्द्धर्षणः । दुर्मर्षणः ॥

## वर्त्तमानसामीप्ये वर्त्तमानवद्वा ॥ १३१ ॥

समीपमेव सामीप्यम् । ष्यञः स्वार्थिकत्वं ज्ञाप्यते चातुर्वर्ण्यादिसिद्धयर्थम् । वर्त्तमानसमीपे भूते भविष्यति च वर्त्तमानाद् धातोर्वर्त्तमानवत् प्रत्यया वा भवन्ति । "वर्त्तमाने लट्"इत्यारभ्य "उणादयो बहुलम्" इति यावद् वर्त्तमाने ये प्रत्यया उक्तास्ते भूतभविष्यतोर्विधीयन्ते । कदा देवदत्त आगतोऽसि ? अयमागच्छामि । आगच्छन्तमेव मां विद्धि । अयमागमम् । एषोऽस्म्यागतः । कदा देवदत्त गमिष्यसि ? एष गच्छामि । गच्छन्तमेव मां विद्धि । एष गमिष्यामि । गन्तास्मि । वत्करणं सर्वसादृश्यार्थम् । येन विशेषणेन वर्त्तमाने प्रत्यया विहिताः प्रकृत्युपपदोपाधिना तथैवात्र भवन्ति । पवमानः । यजमानः । अलंकरिष्णुः । सामीप्यग्रहणं किम् ? विप्रकर्षविवक्षायां मा भूत्—परुदगच्छत्पाटलिपुत्रम् ? वर्षेण गमिष्यति । यो मन्यते गच्छामीति पदं वर्त्तमाने काल एव वर्त्तते, कालान्तरावगतिस्तु वाक्याद्भवति, न च वाक्यगम्यः कालः पदसंस्कारवेलायामुपयुज्यत इति; तादृशं वाक्यार्थप्रतिपत्तारं प्रति प्रकरणमिदं नारभ्यते । तथाच श्वः करिष्यति, वर्षेण गमिष्यतीति सर्वमुपपद्यते ॥

## आशंसायां भूतवच्च ॥ १३२ ॥

वेत्येव । वर्त्तमानसमीप्य इति नानुवर्त्तते । आशंसनमाशंसा, अप्राप्तस्य प्रियार्थस्य प्राप्तुमिच्छा । तस्याश्च भविष्यत्कालो विषयः । तत्र भविष्यति काले आशंसायां गम्यमानायां धातोर्वा भूतवत्प्रत्यया भवन्ति, चकाराद्वर्त्तमानवच्च । उपाध्यायश्चेदागमत्, आगतः, आगच्छति, आगमिष्यति, एते व्याकरणमध्यगीष्महि, एते व्याकरणमधीतवन्तः, अधीमहे, अध्येष्यामहे । सामान्यातिदेशे विशेषानतिदेशाल्लङ्लिटौ न भवतः । आशंसायामिति किम् ? आगमिष्यति ॥

---

**छन्दसि**—ईषत् आदि के उपपद होने पर गत्यर्थक धातुओं से दुःख तथा सुख अर्थों में वेद में युच् प्रत्यय होता है ।

**अन्येभ्योऽपि**—अगत्यर्थक धातुओं से भी वेद में उपर्युक्त अर्थों में युच् प्रत्यय देखा जाता है ।

**भाषायाम्**—'शास्', 'युध्', 'दृश्', 'धृष' तथा 'मृष' धातुओं से भाषा में भी युच् प्रत्यय समझना चाहिए ।

**वर्त्तमान**—वर्त्तमानसमीपवर्त्ती भूत तथा भविष्यत् काल में भी धातुओं से वर्त्तमानकालिक प्रत्ययों की तरह विकल्प से प्रत्यय होते हैं ।

**आशंसायाम्**—अप्राप्तप्राप्तीच्छा के गम्यमान होने पर भविष्यत् काल में भी धातु से विकल्प से भूतकाल तथा वर्त्तमान काल की तरह प्रत्यय होते हैं ।

## क्षिप्रवचने लृट् ॥ १३३ ॥

आशंसायामित्येव। क्षिप्रवचन उपपदे आशंसायां गम्यमानायां धातोर्लृट् प्रत्ययो भवति। भूतवच्चेत्यस्यापादः। उपाध्यायश्चेत् क्षिप्रमागमिष्यति क्षिप्रं व्याकरणमध्येष्यामहे। नेति वक्तव्ये लृड्ग्रहणं लुटोऽपि विषये यथा स्यात्—श्वः क्षिप्रमध्येष्यामहे॥

## आशंसावचने लिङ् ॥ १३४ ॥

आशंसा येनोच्यते तदाशंसावचनम्, तस्मिन्नुपपदे धातोर्लिङ् प्रत्ययो भवति। भूतवच्चेत्यस्यायमपवादः। उपाध्यायश्चेदागच्छेत् आशंसे युक्तोऽधीयीय, अवकल्पये युक्तोऽधीयीय, आशंसे क्षिप्रमधीयीय॥

## नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः ॥ १३५ ॥

भूतानद्यतने भविष्यदनद्यतने च लुङ्लुटौ विहितौ, तयोरयं प्रतिषेधः। अनद्यतनवत् प्रत्ययविधिर्न भवति क्रियाप्रबन्धे सामीप्ये च गम्यमाने। क्रियाणां प्रबन्धः सातत्येनानुष्ठानम्। सामीप्यं कालानां तुल्यजातीयेनाव्यवधानम्। यावज्जीवं भृशमन्नमदात्, भृशमन्नं दास्यति। यावज्जीवं पुत्रोऽध्यापिपत्, यावज्जीवमध्यापयिष्यति। सामीप्ये खल्वपि–येयं पौर्णमास्यतिक्रान्ता एतस्यामुपाध्यायोऽग्नीनाधित, सोमेनायष्ट, गामदित। येयममावास्याऽऽगामिनी एतस्यामुपाध्यायोऽग्नीनाधास्यते, सोमेन यक्ष्यते, स गां दास्यते। द्वौ प्रतिषेधौ यथाप्राप्तस्याभ्यनुज्ञापनाय॥

## भविष्यति मर्यादावचनेऽवरस्मिन् ॥ १३६ ॥

नानद्यतनवदिति वर्त्तते। अक्रियाप्रबन्धार्थमसामीप्यार्थं च वचनम्। भविष्यति काले मर्यादावचनेऽवरस्मिन् प्रविभागेऽनद्यतनवत्प्रत्ययविधिर्न भवति। योऽयमध्वा गन्तव्य आपाटलिपुत्त्रात् तस्य यदवरं कौशाम्ब्यास्तत्र द्विरोदनं भोक्ष्यामहे, तत्र सक्तून् पास्यामः। भविष्यतीति किम्? योऽयमध्वा गत आपाटलिपुत्त्रात् तस्य यदवरं कौशाम्ब्यास्तत्र युक्ता अध्यैमहि, तत्र द्विरोदनम् अभुञ्ज्महि, तत्र सक्तूनपिबाम। मर्यादावचन इति किम्? योऽयमध्वा निरवधिको गन्तव्यस्तस्य यदवरं कौशाम्ब्यास्तत्र द्विरोदनं भोक्तास्महे, सक्तून् पातास्मः। अवरस्मिन्निति किम्? योऽयमध्वा गन्तव्य आपाटलिपुत्त्रात् तस्य यत्परं कौशाम्ब्यास्तत्र द्विरोदनं भोक्तास्महे, तत्र सक्तून् पातास्मः। इह सूत्रे देशकृता मर्यादा, उत्तरत्र कालकृता। तत्र च विशेषं वक्ष्यति॥

## कालविभागे चानहोरात्राणाम् ॥ १३७ ॥

भविष्यति मर्यादावचनेऽवरस्मिन्निति वर्त्तते। कालमर्यादाविभागे सत्यवरस्मिन्

---

**क्षिप्र**—क्षिप्रवाचक शब्द के उपपदत्व में आशंसा के गम्यमान होने पर भविष्यत्काल में धातु से लट् लकार होता है।

**आशंसा**—आशंसावाचक शब्द के उपपदत्व में धातु से लिङ् प्रत्यय होता है।

**नानद्यतन**—क्रियाप्रबन्ध तथा क्रियासामीप्य के गम्यमान होने पर अनद्यतनकालिक प्रत्यय का विधान नहीं होता है।

**भविष्यति**—पूर्ववर्त्ती भाग को लेकर यदि सीमा का अभिधान कर्त्तव्य हो तो भविष्यत् काल में धातु से अनद्यतनवत् प्रत्यय का विधान नहीं होता है।

**काल**—कालकृत सीमा से पूर्वभाग का यदि अभिधान करना हो तो भविष्यत् काल में अनद्यतनवत् प्रत्यय नहीं होता है यदि वह कालिक सीमा दिन-रात्रि-सम्बन्धी न हो।

प्रविभागे भविष्यति कालेऽनद्यतनवत्प्रत्ययविधिर्न भवति, न चेदहोरात्रसंबन्धी विभागः, तेषां विभागे प्रतिषेधः। पूर्वेणैव सिद्धे वचनमिदमहोरात्रनिषेधार्थम्। योगविभाग उत्तरार्थः। योऽयं संवत्सर आगामी तत्र यदवरमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे, तत्रौदनं भोक्ष्यामहे। भविष्यतीत्येव-योऽयं वत्सरोऽतीतस्तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्यैमहि, तत्रौदनमभुञ्ज्महि। मर्यादावचन इत्येव-योऽयं निरवधिकः काल आगामी तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्येतास्महे, तत्रौदनं भोक्तास्महे। अवरस्मिन्नित्येव। परस्मिन् विभाषां वक्ष्यति। अनहोरात्राणामिति किम्? त्रिविधमुदाहरणम्-योऽयं मास आगामी तस्य योऽवरः पञ्चदशरात्रः, योऽयं त्रिंशद्रात्र आगामी तस्य योऽवरोऽर्द्धमासः, योऽयं त्रिंशदहोरात्र आगामी तस्य योऽवरः पञ्चदशरात्रस्तत्र युक्ता अध्येतास्महे, तत्र सक्तून् पातास्मः। सर्वथाऽहोरात्रस्पर्शे प्रतिषेधः॥

## परस्मिन् विभाषा॥ १३८॥

भविष्यति मर्यादावचने, कालविभागे चानहोरात्राणामिति सर्वमनुवर्त्तते। काल मर्यादाविभागे सति भविष्यति काले परस्मिन् प्रविभागे विभाषाऽनद्यतनवत्प्रत्ययविधिर्न भवति, न चेदहोरात्रसम्बन्धी प्रविभागः। अवरस्मिन्वर्जं पूर्वमनुवर्त्तते। अवरस्मिन् पूर्वेण प्रतिषेध उक्तः, संप्रति परस्मिन्नप्राप्त एव विकल्प उच्यते। योऽयं संवत्सर आगामी तस्य यः परः पञ्चदशरात्रस्तत्र युक्ता अध्येतास्महे, तत्र सक्तून् पातास्मः। भविष्यतीत्येव-योऽयं संवत्सरोऽतीतस्तस्य यत्परमाग्रहायण्यास्तत्र युक्ता अध्यैमहि, तत्रौदनमभुञ्ज्महि। मर्यादावचन इत्येव-योऽयं संवत्सरो निरवधिकः काल आगामी तस्य यत्परमाग्रहायण्यास्तत्र युक्ता अध्येतास्महे, तत्र सक्तून् पातास्मः। कालविभाग इत्येव-योऽयमध्वा गन्तव्य आपाटलिपुत्रात् तस्य यत्परं कौशाम्ब्यास्तत्र युक्ता अध्येतास्महे, ओदनं भोक्तास्महे। इति सर्वत्रानद्यतनवत् प्रत्यया उदाहार्याः॥

## लिङ्निमित्ते लृङ् क्रियातिपत्तौ॥ १३९॥

भविष्यतीत्यनुवर्त्तते। हेतुहेतुमतोर्लिङित्येवमादिकं लिङो निमित्तम्, तत्र लिङ्निमित्ते भविष्यति काले लृङ् प्रत्ययो भवति क्रियातिपत्तौ सत्याम्। कुतश्चिद्वैगुण्यादनभिनिर्वृत्तिः क्रियायाः क्रियातिपत्तिः। दक्षिणेन चेदायास्यन्न शकटं पर्याभविष्यत्। यदि कमलकमाह्वास्यन्न शकटं पर्याभविष्यत्। अभोक्ष्यत भवान् घृतेन यदि मत्समीपमागमिष्यत्। भविष्यत्कालविषयमेतद्वचनम्। भविष्यदपर्याभवनं च हेतुमत्, तत्रहेतुभूतं च कमलकाह्वानम्। लिङ्गिलिङ्गे बुद्ध्वा तदतिपत्तिं च प्रमाणान्तरादवगम्य वक्ता वाक्यं प्रयुङ्क्ते— यदि कमलकमाह्वास्यन्न शकटं पर्याभविष्यदिति, हेतुहेतुमतोराह्वानापर्याभवनयोर्भविष्यत्कालविषययोरतिपत्तिरतो वाक्यादवगम्यते॥

## भूते च॥ १४०॥

लिङ्निमित्ते लृङ् क्रियातिपत्ताविति सर्वमनुवर्त्तते। पूर्वेण भविष्यति विहितः, सम्प्रति भूते विधीयते। भूते च काले लिङ्निमित्ते क्रियातिपत्तौ सत्यां लृङ्प्रत्ययो भवति। "उता-

---

**परस्मिन्**—यदि कालकृत सीमा से उत्तरवर्ती भाग का अभिधान करना हो तो भविष्यत काल में अनद्यतनवत् प्रत्यय विकल्प से नहीं होता है।

**लिङ्**—लिङ् के निमित्त हेतुहेतुमद्भाव के वर्त्तमान होने पर धातु से भविष्यत् काल में लृङ् लकार हो जाता है यदि किसी कारण से क्रिया की सिद्धि न होनेवाली हो।

**भूते**—लिङ् के निमित्त के वर्त्तमान होने पर धातु से भूतकाल में लृङ् प्रत्यय होता है यदि किसी कारण से क्रिया की सिद्धि न हुई हो।

प्योः" इत्यारभ्य लिङ्निमित्तेषु विधानमेतत्, प्राक् ततो विकल्पं वक्ष्यति। दृष्टो मया भवत्पुत्रोऽन्नार्थी चङ्क्रम्यमाणः, अपरश्च द्विजो ब्राह्मणार्थी, यदि स तेनादृष्टोऽभविष्यत्(१) तदाऽभोक्ष्यत, न तु भुक्तवान्, अन्येन पथा स गतः॥

## वोताप्योः॥ १४१॥

भूते लिङ्निमित्ते लृङ् क्रियातिपत्ताविति सर्वमनुवर्त्तते। वा आ उताप्योः। मर्यादायामयमाङ् नाभिविधौ। "उताप्योः समर्थयोर्लिङ्" इति वक्ष्यति, प्रागेतस्मात् सूत्रावधेर्यदित ऊर्ध्वमनुक्रमिष्यामः, तत्र भूते लिङ्निमित्ते क्रियातिपत्तौ लृङ् वा भवतीत्येतदधिकृतं वेदितव्यम्। वक्ष्यति—"विभाषा कथमि लिङ् च"। कथं नाम तत्र भवान् वृषलमयाजयिष्यत्। यथाप्राप्तं च—याजयेत्॥

## गर्हायां लडपिजात्वोः॥ १४२॥

गर्हा कुत्सेत्यनर्थान्तरम्। गर्हायां गम्यमानायाम् अपिजात्वोरुपपदयोर्धातोर्लट् प्रत्ययो भवति। वर्त्तमाने लडुक्तः कालसामान्ये न प्राप्नोतीति विधीयते। कालविशेषविहितांश्चापि प्रत्ययानयं परत्वादस्मिन् विषये बाधते। अपि तत्र भवान् वृषलं याजयति, जातु तत्र भवान् वृषलं याजयति? गर्हामहे, अहो अन्याय्यमेतत्। लिङ्निमित्ताभावादिह क्रियातिपत्तौ लृङ् न भवति॥

## विभाषा कथमि लिङ् च॥ १४३॥

गर्हायामिति वर्त्तते। कथंशब्द उपपदे गर्हायां गम्यमानायां धातोर्लिङ् प्रत्ययो भवति चकाराल्लट् च। विभाषाग्रहणं यथास्वं कालविषये विहितानामबाधनार्थम्। कथं नाम तत्र भवान् वृषलं याजयेत्? कथं नाम तत्र भवान् वृषलं याजयति? कथं नाम तत्र भवान् वृषलं याजयिष्यति? कथं नाम तत्र भवान् वृषलं याजयिता? कथं नाम तत्र भवान् वृषलं याजयेत्? कथं नाम तत्र भवान् वृषलमयाजयत्? कथं नाम तत्र भवात् वृषलं याजयाञ्चकार? अत्र लिङ्निमित्तमस्तीति भूतविवक्षायां क्रियातिपत्तौ वा लृङ्। भविष्यद्विवक्षायां सर्वत्र नित्येनैव लृङा भवितव्यम्॥

## किंवृत्ते लिङ्लटौ॥ १४४॥

गर्हायामित्येव। विभाषा न स्वर्यते। किंवृत्त उपपदे गर्हायां गम्यमानायां धातोर्लिङ्लृटौ प्रत्ययौ भवतः। सर्वलकाराणामपवादः। लिङ्ग्रहणं लटोऽपरिग्रहार्थम्—को नाम वृषलो यं तत्र भवान् याजयेत्, यं तत्र भवान् वृषलं याजयिष्यति? कतरो

---

**वोताप्योः**—'उताप्योः समर्थयोः' सूत्र से पूर्व जितने सूत्रों से लकारों का विधान किया जायगा उन सूत्रों से विहित लकार-विशेष के साथ-साथ लिङ्निमित्त की वर्तमानता में धातु से भूतकाल में विकल्प से लङ् प्रत्यय भी समझना चाहिए यदि किसी कारण से क्रिया की सिद्धि न होती हो।

**गर्हायाम्**—'अपि' तथा 'जातु' के उपपद होने पर धातु से लट् प्रत्यय होता है निन्दा के गम्यमान होने पर।

**विभाषा**—'कथम्' शब्द के उपपद होने पर धातु से विकल्प से लिङ् तथा गर्हा के गम्यमान होने पर लट् प्रत्यय होते हैं।

**किम्वृत्ते**—किंशब्दनिष्पन्न शब्द के उपपद होने पर धातु से लिङ् तथा गर्हा के गम्यमान होने पर लट् प्रत्यय होते हैं।

(१) अत्र तेन दृष्टोऽभविष्यद् इति पाठो युक्तः, पदमञ्जरीस्वारस्यात्।

नाम वृषलो यं तत्र भवान् वृषलं याजयेत्, याजयिष्यति? भूते क्रियातिपत्तौ वा लृङ्, भविष्यति तु नित्यम्—को नाम वृषलो यं तत्र भवानयाजयिष्यत्॥

## अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि ॥ १४५ ॥

गर्हायामिति निवृत्तम्। अनवक्लृप्तिरसंभावना। अमर्षोऽक्षमा। किंवृत्तेऽकिंवृत्ते चोपपदेऽनवक्लृप्त्यमर्षयोर्धातोर्लिङ्लृटौ प्रत्ययौ भवतः। सर्वलकाराणामपवादः। बह्वचः पूर्वनिपातो लक्षणव्यभिचारचिह्नम्। तेन यथासंख्यं न भवति। अनवक्लृप्तौ तावत्—नावकल्पयामि, न संभावयामि, न श्रद्दधे, तत्र भवान्नाम वृषलं याजयेत्? तत्र भवान्नाम वृषलं याजयिष्यति? को नाम वृषलो यं तत्र भवान् वृषलं याजयेत्? को नाम वृषलो यं तत्र भवान् वृषलं याजयिष्यति? अमर्षे—न मर्षयामि तत्र भवान् वृषलं याजयेत्, याजयिष्यति? को नाम वृषलो यं तत्र भवान् याजयेत्, याजयिष्यति? भूतविवक्षायां तु क्रियातिपत्तौ वा लृङ् भवति। भविष्यति नित्यम्—नावकल्पयामि तत्र भवान्नाम वृषलमयाजयिष्यत्॥

## किंकिलास्त्यर्थेषु लृट् ॥ १४६ ॥

अनवक्लृप्त्यमर्षयोरिति वर्त्तते। किंकिलशब्दः समुदाय उपपदम्। अस्त्यर्था अस्तिभवतिविद्यतयः। किंकिलास्त्यर्थेषूपपदेषु अनवक्लृप्त्यमर्षयोर्धातोर्लृट् प्रत्ययो भवति। लिङोऽपवादः। किंकिल नाम तत्र भवान् वृषलं याजयिष्यति? अस्ति नाम तत्र भवान् वृषलं याजयिष्यति? भवति नाम तत्र भवान् वृषलं याजयिष्यति? विद्यते नाम तत्र भवान् वृषलं याजयिष्यति? न श्रद्दधे, न मर्षयामि। लिङ्निमित्तमिह नास्ति, तेन लृङ् न भवति॥

## जातुयदोर्लिङ् ॥ १४७ ॥

अनवक्लृप्त्यमर्षयोरित्येव। जातु, यदित्येतयोरुपपदयोरनवक्लृप्त्यमर्षयोर्गम्यमानयोर्धातोर्लिङ् प्रत्ययो भवति। लृटोऽपवादः। जातु तत्र भवान् वृषलं याजयेत्? यन्नाम तत्र भवान् वृषलं याजयेत्? न श्रद्दधे, न मर्षयामि। ॐजातुयदोर्लिङ्विधाने यदायद्योरुपसंख्यानम्ॐ॥ यदा भवद्विधः क्षत्रियं याजयेत्? यदि भवद्विधः क्षत्रियं याजयेत्? न न श्रद्दधे, न मर्षयामि। क्रियातिपत्तौ भूते वा लृङ्, भविष्यति नित्यम्॥

## यच्चयत्रयोः ॥ १४८ ॥

अनवक्लृप्त्यमर्षयोरित्येव। यच्च, यत्र इत्येतयोरुपपदयोरनवक्लृप्त्यमर्षयोर्गम्यमानयोर्धातोर्लिङ् प्रत्ययो भवति। लृटोऽपवादः। योगविभाग उत्तरार्थः। यथासंख्यं नेष्यते। यच्च तत्र भवान् वृषलं याजयेत्? यत्र तत्र भवान् वृषलं याजयेत? क्रियात्तिपत्तौ यथायथं लृङ् भवति॥

---

अनव—असम्भावना तथा अक्षमा के गम्यमान होने पर किसी भी शब्द के उपपदत्व में धातु से लिङ् तथा लट् प्रत्यय होते हैं।

किंकिला—'कि किल' तथा 'अस्ति', 'भवति' एवम् 'विद्यते' के उपपद होने पर असम्भावना तथा अक्षमा अर्थों में धातु से लट् प्रत्यय होता है।

जातु—'जातु' तथा 'यत्' के उपपद होने पर धातु से असम्भावना तथा अक्षमा अर्थों में लिङ् लकार होता है।

जातुयदोः—'जातु' तथा 'यत्' के साथ-साथ 'यदा' तथा 'यदि' शब्दों के उपपदत्व में भी लिङ् प्रत्यय के विधान का प्रतिपादन करना चाहिए।

यच्च—'यच्च' तथा 'यत्र' के उपपद होने पर धातु से असम्भावना तथा अक्षमा अर्थों में लिङ् प्रत्यय होता है।

## गर्हायां च ॥ १४९ ॥

अनवक्लृप्त्यमर्षयोरिति निवृत्तम्। गर्हा निन्दा कुत्सेत्यनर्थान्तरम्। यच्च, तत्र इत्येतयोरुपपदयोर्धातोर्लिङ् प्रत्ययो भवति गर्हायां गम्यमानायाम्। सर्वलकाराणामपवादः। यच्च तत्र भवान् वृषलं याजयेत्, यत्र तत्र भवान् वृषलं याजयेद्, ऋद्धो वृद्धः सन् ब्राह्मणः, गर्हामहे, अहो अन्याय्यमेतत्? क्रियातिपत्तौ यथायथं लृङ् भवति॥

## चित्रीकरणे च ॥ १५० ॥

यच्चयत्रयोरित्येव। चित्रीकरणमाश्चर्यमद्भुतं विस्मयनीयम्। यच्चयत्रयोरुपपदयोश्चित्रीकरणे गम्यमाने धातोर्लिङ् प्रत्ययो भवति। सर्वलकाराणामपवादः। यच्च तत्र भवान् वृषलं याजयेत्। यत्र तत्र भवान् वृषलं याजयेत्, आश्चर्यमेतत्? क्रियातिपत्तौ यथायथं लृङ् भवति॥

## शेषे लृडयदौ ॥ १५१ ॥

यच्चयत्राभ्यामन्यत्र चित्रीकरणं शेषः। शेषे उपपदे चित्रीकरणे गम्यमाने धातोर्लृट् प्रत्ययो भवति, यदिशब्दश्चेन्न प्रयुज्यते। सर्वलकाराणामपवादः। आश्चर्यं चित्रमद्भुतम् अन्धो नाम पर्वतमारोक्ष्यति, बधिरो नाम व्याकरणमध्येष्यते? अयदाविति किम्? आश्चर्यं यदि स भुञ्जीत, यदि सोऽधीयीत? लिङ्निमित्ताभावादिह लृङ् न भवति॥

## उताप्योः समर्थयोर्लिङ् ॥ १५२ ॥

उत, अपि इत्येतयोः समर्थयोरुपपदयोर्द्धातोर्लिङ् प्रत्ययो भवति। सर्वलकाराणामपवादः। बाढमित्यस्मिन्नर्थे समानार्थत्वमनयोः। उत कुर्यात्। अपि कुर्यात्। उताधीयीत। अप्यधीयीत। बाढमध्येष्यत इत्यर्थः। समर्थयोरिति किम्? उत दण्डः पतिष्यति, अपि द्वारं धास्यति। प्रश्नः प्रच्छादनं च गम्यते। "वोताप्योः" इति विकल्पो निवृत्तः। इतः प्रभृति भूतेऽपि लिङ्निमित्ते क्रियातिपत्तौ नित्यं लृङ्, भविष्यति तु सर्वत्रैव नित्यः॥

## कामप्रवेदनेऽकच्चिति ॥ १५३ ॥

स्वाभिप्रायाविष्करणं कामप्रवेदनम्। काम इच्छाऽभिलाष इत्यनर्थान्तरम्। तस्य प्रवेदनं प्रकाशनम्। तस्मिन् गम्यमानेऽकच्चित्युपपदे धातोर्लिङ् प्रत्ययो भवति। सर्वलकाराणामपवादः। कामो मे भुञ्जीत भवान्। अभिलाषो मे भुञ्जीत भवान्। अकच्चितीति किम्?

**गर्हायाम्**—'यच्च' तथा 'यत्र' के उपपद होने पर धातु से गर्हा (निन्दा) अर्थ में भी लिङ् प्रत्यय होता है।

**चित्रीकरणे**—'यच्च' तथा 'यत्र' के उपपद होने पर धातु से चित्रीकरण (आश्चर्यजनकता) अर्थ में भी लिङ् प्रत्यय होता है।

**शेषे**—'यच्च' तथा 'यत्र' से भिन्न शब्दों के उपपदत्व में धातु से चित्रीकरण अर्थ में लृट् लकार होता है 'यदि' शब्द का प्रयोग यदि न हुआ हो।

**उताप्योः**—समानार्थक 'उत' तथा 'अपि' शब्दों के उपपद होने पर धातु से लिङ प्रत्यय होता है।

**काम**—'कच्चित्'-शब्द-भिन्न शब्द के उपपद होने पर धातु से स्वेच्छाप्रकाशन अर्थ में लिङ् प्रत्यय होता है।

कच्चिज्जीवति ते माता कच्चिज्जीवति ते पिता।
माराविद ! त्वां पृच्छामि कच्चिज्जीवति पार्वति ॥

## संभावनेऽलमिति चेत् सिद्धाप्रयोगे ॥ १५४ ॥

लिङित्येव। संभावनम्-क्रियासु योग्यताध्यवसानम्, शक्तिश्रद्धानम्, तदिदानीमलमर्थेन विशेष्यते, तच्चेत्संभावनं पर्याप्तमवितथं भवति। सिद्धाप्रयोग इत्यलमो विशेषणम्, सिद्धश्चेदलमोऽप्रयोगः। क चासौ सिद्धः ? यत्र गम्यते चार्थो न चासौ प्रयुज्यते। तदीदृशे संभावनोपाधिकेऽर्थे वर्त्तमानाद्धातोर्लिङ् प्रत्ययो भवति। सर्वलकाराणामपवादः। अपि पर्वतं शिरसा भिन्द्यात् ? अपि द्रोणपाकं भुञ्जीत ? अलमिति किम् ? विदेशस्थायी देवदत्तः प्रायेण गमिष्यति ग्रामम्। सिद्धाप्रयोग इति किम् ? अलं देवदत्तो हस्तिनं हनिष्यति। क्रियातिपत्तौ भूते भविष्यति च नित्यं लृङ् भवति ॥

## विभाषा धातौ संभावनवचनेऽयदि ॥ १५५ ॥

संभावनेऽलमिति चेत् सिद्धाप्रयोगे इति सर्वमनुवर्त्तते। संभावनमुच्यते येन स संभावनवचनः। संभावनवचने धातावुपपदे यच्छब्दवर्जिते धातोर्विभाषा लिङ् भवति। पूर्वेण नित्यप्राप्तौ विकल्पार्थं वचनम्। संभावयामि भुञ्जीत भवान्, संभावयामि भोक्ष्यते भवान् ? अवकल्पयामि भुञ्जीत भवान्, भोक्ष्यते भवान् ? श्रद्दधे भुञ्जीत भवान्, भोक्ष्यते भवान् ? अयदीति किम् ? संभावयामि यद्भुञ्जीत भवान् ॥

## हेतुहेतुमतोर्लिङ् ॥ १५६ ॥

हेतुः कारणम्, हेतुमत्फलम्। हेतुभूते हेतुमति चार्थे वर्त्तमानाद् धातोर्लिङ् प्रत्ययो भवति। सर्वलकाराणामपवादः। दक्षिणेन चेद्यायान्न शकटं पर्याभवेत्। यदि कमलकमाह्वयेन्न शकटं पर्याभवेत्। दक्षिणेन यानं हेतुः, अपर्याभवनं हेतुमत्। विभाषा चायमिष्यते, भविष्यति च काले। तेन लृडपि भवति—दक्षिणेन चेद्यास्यति न शकटं पर्याभविष्यति। तत्र विभाषाग्रहणं तावदनन्तरमेवानुवर्तते। लिङिति वर्तमाने पुनर्लिङ्ग्रहणं कालविशेषप्रतिपत्त्यर्थम्। तेनेह न भवति-हन्तीति पलायते, वर्षतीति धावति। क्रियातिपत्तौ लृङ् भवति ॥

## इच्छार्थेषु लिङ्लोटौ ॥ १५७ ॥

इच्छार्थेषु धातुषूपपदेषु धातोर्लिङ्लोटौ प्रत्ययौ भवतः। सर्वलकाराणामपवादः। इच्छामि भुञ्जीत भवान्। इच्छामि भुङ्क्तां भवान्। कामये। प्रार्थये ॥ ॐकामप्रवेदन इति वक्तव्यम्ॐ। इह मा भूत्-इच्छन् करोति ॥

---

**संभावने**—सम्भावन अर्थ में धातु से लिङ् लकार होता है यदि 'अलम्' (या तत्समानार्थक शब्द) के प्रयोग के विना ही 'अलम्' के अर्थ की प्रतीति होती हो।

**विभाषा**—सम्भावनार्थक धातु के उपपद होने पर सम्भावना अर्थ में धातु से विकल्प से लिङ् प्रत्यय होता है यदि 'यत्' शब्द का प्रयोग न हुआ हो और 'अलम्' शब्द के प्रयोग के विना ही उसके अर्थ की प्रतीति होती हो।

**हेतु**—हेतु-हेतुमद्भावार्थ में धातु से लिङ् प्रत्यय होता है।

**इच्छार्थेषु**—इच्छार्थक धातुओं के उपपद होने पर धातु से लिङ् तथा लोट् प्रत्यय होते हैं।

**कामप्रवेदने**—कामप्रवेदन अर्थ में ही पूर्वसूत्रोक्त लिङ् तथा लोट् प्रत्यय का विधान समझना चाहिए।

## समानकर्तृकेषु तुमुन् ॥ १५८ ॥

इच्छार्थेषु धातुषु समानकर्तृकेषूपपदेषु धातोस्तुमुन् प्रत्ययो भवति । तुमुन्प्रकृत्यपेक्षमेव समानकर्तृकत्वम् । इच्छति भोक्तुम् । कामयते भोक्तुम् । वष्टि भोक्तुम् । वाञ्छति भोक्तुम् । समानकर्तृकेष्विति किम् ? देवदत्तं भुञ्जानमिच्छति यज्ञदत्तः । इह कस्मान्न भवति—इच्छन् करोति ? अनभिधानात् ॥

## लिङ् च ॥ १५९ ॥

इच्छार्थेषु समानकर्तृकेषु धातुषूपपदेषु धातोर्लिङ् प्रत्ययो भवति । भुञ्जीयेतीच्छति अधीयीयेतीच्छति । क्रियातिपत्तौ लृङ् भवति(१) ॥

## इच्छार्थेभ्यो विभाषा वर्तमाने ॥ १६० ॥

इच्छार्थेभ्यो धातुभ्यो वर्तमाने काले विभाषा लिङ् प्रत्ययो भवति । लटि प्राप्ते वचनम् । इच्छति । इच्छेत् । वष्टि । उश्यात् । कामयते । कामयेत ॥

## विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ् ॥ १६१ ॥

विधिः प्रेरणम् । निमन्त्रणं नियोगकरणम् । आमन्त्रणं कामचारकरणम् । अधीष्टः सत्कारपूर्वको व्यापारः । सम्प्रश्नः सम्प्रधारणम् । प्रार्थनं याच्ञा । विध्याद्यर्थेषु धातोर्लिङ् प्रत्ययो भवति । सर्वलकाराणामपवादः । विध्यादयश्च प्रत्ययार्थविशेषणम् । विध्यादिविशिष्टेषु कर्त्रादिषु लिङ् प्रत्ययो भवति । विधौ तावत्—कटं कुर्यात्, ग्रामं भवानागच्छेत् । निमन्त्रणे—इह भवान् भुञ्जीत, इह भवानासीत । आमन्त्रणे—इह भवानासीत, इह भवान् भुञ्जीत । अधीष्टे—अधीच्छामो भवन्तं माणवकं भवानुपनयेत् । सम्प्रश्ने—किं नु खलु भो व्याकरणमधीयीय ? प्रार्थने—भवति मे प्रार्थना व्याकरणमधीयीय ॥

## लोट् च ॥ १६२ ॥

लोट् प्रत्ययो भवति धातोर्विध्यादिष्वर्थेषु । योगविभाग उत्तरार्थः । विधौ तावत्-कटं तावद्भवान् करोतु, ग्रामं भवानागच्छतु । निमन्त्रणे—अमुत्र भवानास्ताम्, अमुत्र भवान् भुङ्क्ताम् । आमन्त्रणे—इह भवान् भुङ्क्ताम् । अधीष्टे—अधीच्छामो भवन्तं माणवकं भवान् अध्यापयतु, माणवकं भवानुपनयताम् । सम्प्रश्ने—किं नु खलु भो व्याकरणमध्ययै ? प्रार्थने—भवति मे प्रार्थना व्याकरणमध्ययै ॥

## प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ॥ १६३ ॥

प्रेषणं प्रैषः, कामचाराभ्यनुज्ञानमतिसर्गः, निमित्तभूतस्य कालस्यावसरः प्राप्त-

---

**समान**—( तुमुन्प्रत्यान्तधातु- ) समानकर्तृक इच्छार्थक धातु के उपपद होने पर धातु से तुमुन् प्रत्यय होता है ।

**लिङ्**—समानकर्तृक इच्छार्थक धातु के उपपद होने पर धातु से लिङ् प्रत्यय भी होता है ।

**इच्छार्थेभ्यः**—इच्छार्थक धातुओं से वर्त्तमान काल में विकल्प से लिङ् प्रत्यय होता है ।

**विधि**—विधि, निमन्त्रण, आमन्त्रण, अधीष्ट, सम्प्रश्न तथा प्रार्थना अर्थों में धातु से लिङ् प्रत्यय होता है ।

**लोट्**—विधि आदि अर्थों में धातु से लोट् लकार भी होता है ।

**प्रैषातिसर्ग**—प्रैष, अतिसर्ग तथा कारणीभूतकालसम्प्राप्ति अर्थों में धातु से कृत्य प्रत्यय भी होते हैं और लोट् प्रत्यय भी ।

---

( १ ) अत्र योगविभाग उत्तरार्थ इति क्वचिदधिकम्

कालता, इत्येतेष्वर्थेषु धातोः कृत्यसंज्ञकाः प्रत्यया भवन्ति, चकाराल्लोट् च। भवता कटः करणीयः। कर्त्तव्यः। कृत्यः। कार्यः। लोट् खल्वपि—करोतु कटं भवानिह प्रेषितः। भवानतिसृष्टः, भवतः प्राप्तकालः कटकरणे। किमर्थं प्रैषादिषु कृत्या विधीयन्ते, न सामान्येन भावकर्मणोर्विहिता एव ते प्रैषादिष्वन्यत्र च भविष्यन्ति ? विशेषविहितेनानेन लोटा बाध्यन्ते, वासरूपविधिना भविष्यन्ति। एवं तर्हि ज्ञापयति—स्त्र्यधिकारात्परेण वासरूपविधिर्नावश्यं भवतीति। विधिप्रेषयोः को विशेषः ? केचिदाहुः—अज्ञातज्ञापनं विधिः, प्रेषणं प्रैष इति ॥

## लिङ् चोर्ध्वमौहूर्तिके ॥ १६४ ॥

प्रैषादयो वर्त्तन्ते। प्रैषादिषु गम्यमानेषु ऊर्ध्वमौहूर्त्तिकेऽर्थे वर्तमानाद्धातोर्लिङ् प्रत्ययो भवति, चकाराद्यथाप्राप्तं च। ऊर्ध्वं मूहूर्त्तात् = उपरि मुहूर्तस्य, भवता खलु कटः कर्त्तव्यः, करणीयः, कार्यः। भवान् खलु कटं कुर्यात्। भवान् खलु करोतु। भवानिह प्रेषितः। भवानतिसृष्टः। भवान् प्राप्तकालः ॥

## स्मे लोट् ॥ १६५ ॥

प्रैषादिषूर्ध्वमौहूर्त्तिके इति वर्तते। स्मशब्द उपपदे प्रैषादिषु गम्यमानेषूर्ध्वमौहूर्तिकेऽर्थे वर्त्तमानाद्धातोर्लोट् प्रत्ययो भवति। लिङ्कृत्यानामपवादः। ऊर्ध्वं मुहूर्ताद्भवान् कटं करोतु स्म। ग्रामं गच्छतु स्म। माणवकमध्यापयतु स्म ॥

## अधीष्टे च ॥ १६६ ॥

स्म इति वर्तते। अधीष्टं व्याख्यातम्। स्मशब्द उपपदेऽधीष्टे गम्यमाने धातोर्लोट् प्रत्ययो भवति। लिङोऽपवादः। अङ्ग स्म राजन् माणवकमध्यापय। अङ्ग स्म राजन्नग्निहोत्रं जुहुधि ॥

## कालसमयवेलासु तुमुन् ॥ १६७ ॥

कालादिषूपपदेषु धातोस्तुमुन् प्रत्ययो भवति। कालो भोक्तुम्। इह कस्मान्न भवति ? कालः पचति भूतानीति। प्रैषादिग्रहणमिहाभिसम्बध्यते। इह कस्मान्न भवति—कालो भोजनस्येति ? वासरूपेण ल्युडपि भवति। उक्तमिदं स्त्र्यधिकारात्परत्र वासरूपविधिरनित्य इति ॥

## लिङ् यदि ॥ १६८ ॥

कालादयोऽनुवर्त्तन्ते। यच्छब्दे उपपदे कालादिषु धातोर्लिङ् प्रत्ययो भवति। तुमुनोऽपवादः। कालो यद् भुञ्जीत भवान्। समयो यद्भुञ्जीत भवान्। वेला यद् भुञ्जीत भवान् ॥

---

**लिङ्**—प्रैष आदि के गम्यमान होने पर ऊर्ध्वमौहूर्त्तिक अर्थ में वर्त्तमान धातुओं से लिङ् प्रत्यय भी होता है और यथाप्राप्त कृत्य प्रत्यय भी।

**स्मे**—'स्म' शब्द के उपपद होने पर प्रैष आदि अर्थों की गम्यमानता में ऊर्ध्वमौहूर्त्तिक अर्थ में वर्त्तमान धातु से लोट् प्रत्यय होता है।

**अधीष्टे**—'स्म' शब्द के उपपद होने पर अधीष्ट अर्थ में भी धातु से लोट् प्रत्यय होता है।

**कालसमय**—काल, समय तथा वेला शब्दों के उपपद होने पर धातु से तुमुन् प्रत्यय होता है।

**लिङ्**—यत् शब्द के साथ-साथ काल, समय अथवा वेला शब्द के उपपद होने पर धातु से लिङ् प्रत्यय होता है।

## अर्हे कृत्यतृचश्च ॥ १६९ ॥

अर्हतीत्यर्हः, तद्योग्यः। अर्हे कर्तरि वाच्ये गम्यमाने वा धातोः कृत्यतृचः प्रत्यया भवन्ति चकाराल्लिङ् च। भवता खलु कन्या वोढव्या, वाह्या, वहनीया। भवान् खलु कन्याया वोढा, भवान् खलु कन्यां वहेत्। भवानेतदर्हेदिति। अथ कस्मादर्हे कृत्यतृचो विधीयन्ते, यावता सामान्येन विहितत्वादर्हेऽपि भविष्यन्ति? योऽयमिह लिङ् विधीयते तेन बाधा मा भूदिति। वासरूपविधिश्चानित्यः।

## आवश्यकाधमर्ण्ययोर्णिनिः ॥ १७० ॥

अवश्यं भाव आवश्यकम्। उपाधिरयं नोपपदम्। अवश्यंभावविशिष्टे आधमर्ण्य-विशिष्टे च कर्तरि वाच्ये धातोर्णिनिः प्रत्ययो भवति। अवश्यङ्कारी। मयूर्व्यंसकादि-त्वात्समासः। आधमर्ण्ये खल्वपि—शतंदायी, सहस्रंदायी, निष्कंदायी॥

## कृत्याश्च ॥ १७१ ॥

आवश्यकाधमर्ण्ययोरिति वर्तते। कृत्यसंज्ञकाश्च प्रत्यया आवश्यकाधमर्ण्ययोरुपा-धिभूतयोर्धातोर्भवन्ति। भवता खलु अवश्यं कटः कर्त्तव्यः, अवश्यं करणीयः, अवश्यं कार्यः, अवश्यं कृत्यः। आधमर्ण्ये—भवता शतं दातव्यम्, सहस्रं देयम्। किमर्थमिदम्, यावता सामान्ये विहिता अस्मिन्नपि विषये भविष्यन्ति? विशेषविहितेन णिनिना बाध्येरन्। कर्त्तरि णिनिः, भावकर्मणोः कृत्याः-तत्र कुतो बाधप्रसङ्गः? तत्र केचिदाहुः—भव्यगेयादयः कर्तृवाचिनः कृत्याः, त इहोदाहरणमिति॥

## शकि लिङ् च ॥ १७२ ॥

शकीति प्रकृत्यर्थविशेषणम्। शक्नोत्यर्थोपाधिके धात्वर्थे लिङ् प्रत्ययो भवति चका-रात् कृत्याश्च। भवता खलु भारो वोढव्यः, वहनीयः, वाह्यः। भवान् खलु भारं वहेत्। भवानिह शक्तः। सामान्यविहितानां पुनर्वचनं लिङा बाधा मा भूदिति॥

## आशिषि लिङ्लोटौ ॥ १७३ ॥

आशंसनमाशीः, अप्राप्तस्येष्टस्यार्थस्य प्राप्तुमिच्छा। प्रकृत्यर्थविशेषणं चैतत्। आशी-र्विशिष्टेऽर्थे वर्त्तमानाद्धातोर्लिङ्लोटौ प्रत्ययौ भवतः। चिरं जीवतु भवान्। आशिषीति किम्? चिरं जीवति देवदत्तः॥

## क्तिच्क्तौ च संज्ञायाम् ॥ १७४ ॥

आशिषीत्येव। आशिषि विषये धातोः क्तिच्क्तौ प्रत्ययौ भवतः समुदायेन चेत्संज्ञा

---

अर्हे—योग्य कर्त्ता के वाच्य या गम्यमान होने पर धातु से कृत्य प्रत्यय, तृच् प्रत्यय तथा लिङ् प्रत्यय होते हैं।

आवश्यकाध—अवश्यम्भावविशिष्ट तथा आधमर्ण्यविशिष्ट कर्त्ता के वाच्य होने पर धातु से णिनि प्रत्यय होता है।

कृत्याश्च—पूर्वसूत्रोक्त अर्थ में धातु से कृत्य प्रत्यय भी होते हैं।

शकि—'शक्'धात्वर्थोपाधिक धात्वर्थ में धातु से लिङ् प्रत्यय भी होता है और कृत्य प्रत्यय भी।

आशिषि—आशीः अर्थ में धातु से लिङ् तथा लोट् प्रत्यय होते हैं।

क्तिच्—आशीः अर्थ में ही धातु से क्तिच् तथा क्त प्रत्यय भी होते हैं यदि प्रत्ययान्त से संज्ञा की प्रतीति होती हो।

गम्यते। तनुतात् तन्तिः। सनुतात् सातिः। भवतात् भूतिः। मनुतात् मन्तिः। क्तः खल्वपि-देवा एनं देयासुर्देवदत्तः। सामान्येन विहितः क्तः पुनरुच्यते, क्तिचा बाधा मा भूदिति। चकारो विशेषणार्थः-"न क्तिचि दीर्घश्च" इति॥

## माङि लुङ्॥ १७५॥

माङ्युपपदे धातोर्लुङ् प्रत्ययो भवति। सर्वलकाराणामपवादः। मा कार्षीत्। मा हार्षीत्। कथं मा भवतु, तस्य पापं मा भविष्यतीति? असाधुरेवायम्। केचिदाहुः—अङिदपरो माशब्दो विद्यते, तस्यायं प्रयोगः॥

## स्मोत्तरे लङ् च॥ १७६॥

स्मशब्दोत्तरे माङ्युपपदे धातोर्लङ् प्रत्ययो भवति चकाराल्लुङ् च। मा स्म करोत्। मा स्म कार्षीत्। मा स्म हरत्। मा स्म हार्षीत्॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ
तृतीयाध्यायस्य तृतीयः पादः॥३।३॥



---

माङि—माङ् शब्द के उपपद होने पर धातु से लुङ् प्रत्यय होता है।

स्मोत्तरे—'स्म'-शब्दोत्तरक माङ् शब्द के उपपद होने पर धातु से लुङ् प्रत्यय भी होता है और लङ् प्रत्यय भी।

तृतीय अध्याय का तृतीय पाद समाप्त हुआ।



# अथ तृतीयाध्यायस्य चतुर्थः पादः ॥

## धातुसंबन्धे प्रत्ययाः ॥ १ ॥

धात्वर्थे धातुशब्दः। धात्वर्थानां संबन्धो धातुसंबन्धः, विशेषणविशेष्यभावः, तस्मिन् सति अयथाकालोक्ता अपि प्रत्ययाः साधवो भवन्ति। अग्निष्टोमयाज्यस्य पुत्रो जनिता। कृतः कटः श्वो भविता। भावि कृत्यमासीत्। अग्निष्टोमयाजीति भूतकालः(१), जनितेति भविष्यत्कालः, तत्र भूतः कालो भविष्यत्कालेनाभिसंबध्यमानः साधुर्भवति। विशेषणं गुणत्वाद्विशेष्यकालमनुरुध्यते, तेन विपर्ययो न भवति। प्रत्ययाधिकारे पुनः प्रत्ययग्रहणमधात्वधिकारविहिता अपि प्रत्ययास्तद्धिता धातुसंबन्धे सति कालभेदे साधवो यथा स्युरिति—गोमानासीत्, गोमान् भविता। गावो विद्यन्तेऽस्येति वर्तमानविहितो मतुप्, आसीद्, भवितेति संबन्धादतीते भविष्यति च साधुर्भवति ॥

## क्रियासमभिहारे लोट्, लोटो हिस्वौ, वा च तध्वमोः ॥ २ ॥

धातुसंबन्ध इति वर्तते। पौनः पुन्यं भृशार्थो वा क्रियासमभिहारः। प्रकृत्यर्थविशेषणं चैतत्। समभिहारविशिष्टक्रियावचनाद्धातोर्लोट् प्रत्ययो भवति सर्वेषु कालेषु। सर्वलकाराणामपवादः। तस्य च लोटो हि स्व इत्येतावादेशौ भवतः, तध्वंभाविनस्तु(२) वा भवतः। योगविभागोऽत्र कर्तव्यः—क्रियासमभिहारे लोट्, ततो लोटो हिस्वौ, लोडित्येव—लोड्धर्माणौ(३) हिस्वौ भवत इत्यर्थः। तेनात्मनेपदपरस्मैपदत्वं भेदेनावतिष्ठते, तिङ्त्वं च भवति। लुनीहि लुनीहीत्येवायं लुनाति, इमौ लुनीतः, इमे लुनन्ति। लुनीहि लुनीहीत्येव त्वं लुनासि, युवां लुनीथः, यूयं लुनीथ। अथवा लुनीत लुनीतेत्येव यूयं लुनीथ। लुनीहि लुनीहीत्येवाहं लुनामि, आवां लुनीवः, वयं लुनीमः। भूते-लुनीहि लुनीहीत्येवायमलावीत्, अलाविष्टाम्, अलाविषुः। एवं मध्यमोत्तमयोरुदाहार्यम्। भविष्यति-लुनीहि लुनीहीत्येवायं लविष्यति, लविष्यतः, लविष्यन्ति। एवं मध्यमोत्तमयोरुदाहार्यम्। अधीष्वाधीष्वेत्येवायमधीते, इमावधीयाते, इमेऽधीयते। अधीष्वाधीष्वेत्येव त्वमधीषे, युवामधीयाथे, यूयमधीध्वे। अथ वा अधीध्वम् अधीध्वमित्येव यूयमधीध्वे। अधीष्वाधीष्वेत्येवाहमधीये, आवामधीवहे, वयमधीमहे। एवं सर्वेष्वेव लकारेषूदाहार्यम्। क्रियासमभिहाराभिव्यक्तौ द्विर्वचनमयं लोडपेक्षते-क्रियासमभिहारे द्वे भवत इति। यङ्प्रत्ययः पुनरस्मिन्नेवार्थे विधीयमानः स्वयमेव शक्तत्वान्नापेक्षते द्विर्वचनम् ॥

## समुच्चयेऽन्यतरस्याम् ॥ ३ ॥

अनेकक्रियाध्याहारः समुच्चयः। समुच्चीयमानक्रियावचनाद्धातोरन्यतरस्यां लोट्

---

**धातु**—धात्वर्थ का सम्बन्ध होने पर एककालविहित प्रत्यय कालान्तर में भी हो जाते हैं।

**क्रिया**—क्रिया के पौनःपुन्य के गम्यमान होने पर धातु से धात्वर्थसम्बन्ध में लोट् लकार होता है, उस लोट् के स्थान में 'हि' तथा 'स्व' आदेश हो जाते हैं और 'त' एवम् 'ध्वम्' के स्थानी लोट् के स्थान में विकल्प से 'हि' तथा 'स्व' आदेश होते हैं।

**समुच्चये**—क्रियासमुच्चय होने पर धातु से धात्वर्थसम्बन्ध में विकल्प से लोट् लकार होता है,

---

(१) भूतकालः—भूतः कालोऽस्येति बहुव्रीहिः। एवमग्रेऽपि।

(२) तध्वम्भाविन इति-तश्च ध्वश्च तध्वमौ, तौ भाविनौ यस्य लोटः स तध्वम्भावी, तस्य।

(३) लोड्धर्माणाविति—लोट एव धर्मस्तिङ्त्वादिर्ययोस्तौ लोड्धर्माणौ।

प्रत्ययो भवति, तस्य लोटो हिस्वावादेशौ भवतः, तध्वंभाविनस्तु वा भवतः। भ्राष्ट्रमट, मठमट, खदूरमट, स्थाल्यपिधानमटेत्येवायमटति, इमावटतः, इमेऽटन्ति। भ्राष्ट्रमट, मठमट, खदूरमट, स्थाल्यपिधानमटेत्येव त्वमटसि, युवामटथः, यूयमटथ। अथवा भ्राष्ट्रमटत, मठमटत, खदूरमटत, स्थाल्यपिधानमटतेत्येव यूयमटथ। भ्राष्ट्रमट, मठमट, खदूरमट, स्थाल्यपिधानमटेत्येवाहमटामि, आवामटावः, वयमटामः। अथवा भ्राष्ट्रमटति, मठमटति, खदूरमटति, स्थाल्यपिधानमटति इत्येवायमटति, इमावटतः, इमेऽटन्ति। भ्राष्ट्रमटसि, मठमटसि, खदूरमटसि, स्थाल्यपिधानमटसि इत्येव त्वमटसि, युवामटथः, यूयमटथ। भ्राष्ट्रमटामि, मठमटामि, खदूरमटामि, स्थाल्यपिधानमटामीत्येवाहमटामि, आवामटावः, वयमटामः। छन्दोधीष्व, व्याकरणमधीष्व, निरुक्तमधीष्वेत्येवायमधीते, इमावधीयाते, इमेऽधीयते। छन्दोधीष्व, व्याकरणमधीष्व, निरुक्तमधीष्वेत्येव त्वमधीषे, युवामधीयाथे, यूयमधीध्वे। अथवा छन्दोधीध्वम्, व्याकरणमधीध्वम्, निरुक्तमधीध्वमित्येव यूयमधीध्वे। छन्दोधीष्व, व्याकरणमधीष्व, निरुक्तमधीष्वेत्येवाहमधीये, आवामधीवहे, वयमधीमहे। अथवा छन्दोऽधीते, व्याकरणमधीते, निरुक्तमधीते इत्येवायमधीते, इमावधीयाते, इमेऽधीयते। छन्दोधीषे, व्याकरणमधीषे, निरुक्तमधीषे इत्येव त्वमधीषे, युवामधीयाथे, यूयमधीध्वे। छन्दोधीये, व्याकरणमधीये, निरुक्तमधीय इत्येवाहमधीये, आवामधीवहे, वयमधीमहे॥

## यथाविध्यनुप्रयोगः पूर्वस्मिन् ॥ ४ ॥

पूर्वस्मिन् लोड्विधाने यथाविध्यनुप्रयोगो भवति। यस्माद्धातोर्लोड्विहितस्स एव धातुरनुप्रयोक्तव्यः। धातुसंबन्धे प्रत्ययविधानाद् अनुप्रयोगः सिद्ध एव। यथाविध्यर्थं तु वचनम्। तथा चैवोदाहृतम्—लुनीहि लुनीहीत्येवायं लुनातीति। छिनत्तीति नानुप्रयुज्यते। अधीत्वाधीष्वेत्येवायमधीते। पठतीति नानुप्रयुज्यते॥

## समुच्चये सामान्यवचनस्य ॥ ५ ॥

द्वितीये लोड्विधाने, समुच्चये सामान्यवचनस्य धातोरनुप्रयोगः कर्त्तव्यः। ओदनं भुङ्क्ष्व, सक्तून् पिब, धानाः खादेत्येवायमभ्यवहरति। सर्वविशेषानुप्रयोगनिवृत्त्यर्थं वचनम्। लाघवं च लौकिके शब्दव्यवहारे नाद्रियते। भ्राष्ट्रमट, मठमट, खदूरमट, स्थाल्यपिधानमटेत्येवायमटतीत्यत्रापि कारकभेदात् क्रियाभेदे सति सामान्यवचनता सम्भवत्येव॥

## छन्दसि लुङ्लङ्लिटः ॥ ६ ॥

धातुसम्बन्ध इत्येव। छन्दसि विषये धातुसम्बन्धे सर्वेषु कालेषु लुङ्लङ्लिटः प्रत्यया भवन्ति। अन्यतरस्यामिति वर्त्तते। तेनान्येऽपि लकारा यथायथं भवन्ति।

---

उस लोट् के स्थान में 'हि' तथा 'स्व' आदेश हो जाते हैं और 'त' एवम् 'ध्वम्' के स्थानी लोट् के स्थान में विकल्प से 'हि' तथा 'स्व' आदेश होते हैं।

**यथाविध्यनु—**'क्रियासमभिहारे०' सूत्र से विहित लोट् की प्रकृति जो धातु होती है उसी धातु का लोडन्त के बाद भी अनुप्रयोग (धात्वर्थसम्बन्ध के बोधन के लिए) किया जाता है।

**समुच्चये—**'समुच्चये०' सूत्र से विहित लोट् की प्रकृति धातुओं से पर लोट्प्रकृतिभूतधातुसमूह के अर्थों का सामान्यतः प्रतिपादन करनेवाली धातु अनुप्रयुक्त होती है।

**छन्दसि—**वेद में धातुसम्बन्धप्रतिपादन के लिए सभी कालों में लुङ्, लङ् तथा लिट् प्रत्यय होते हैं।

लुङ्-शकलाङ्गुष्ठकोऽकरत्। अहं तेभ्योऽकरं नमः। लङ्-अग्निमद्य होतारमवृणीतायं यजमानः। लिट्-अद्या ममार=अद्य म्रियते॥

## लिङर्थे लेट्॥ ७॥

छन्दस्यन्यतरस्यामिति वर्त्तते। लिङर्थे=यत्र लिङ्विधीयते विध्यादिर्हेतुहेतुमतोर्लिङित्येवमादिस्तत्र, छन्दसि विषयेऽन्तरस्यां लेट् प्रत्ययो भवति। जोषिषत्। तारिषत्। मन्दिषत्। नेता नेषत्। तक्षिषत्। पताति विद्युत्। उदधिं च्यावयाति॥

## उपसंवादाशङ्कयोश्च॥ ८॥

उपसंवादः परिभाषणम्, कर्त्तव्ये पणबन्धः-यदि मे भवानिदं कुर्याद् अहमपि भवत इदं दास्यामीति। कारणतः कार्यानुसरणं तर्क उत्प्रेक्षा आशङ्का(१)। उपसंवादे आशङ्कायां च गम्यमानायां छन्दसि विषये लेट् प्रत्ययो भवति। उपसंवादे-अहमेव पशूनामीशै। मद्ग्रा एव वो ग्रहा गृह्यान्तै इति। मद्देवतान्येव वः पात्राण्युच्यान्तै। आशङ्कायां च-नेजिह्मायन्तो नरकं पताम। जिह्मचरणेन नरकपात आशङ्क्यते। लिङर्थ एवायम्, नित्यार्थं तु वचनम्। पूर्वसूत्रेऽन्यतरस्यामिति वर्त्तते॥

## तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्-शध्यैशध्यैन्तवैतवेङ्तवेनः॥ ९॥

छन्दसीत्येव। तुमुनोऽर्थस्तुमर्थः। तत्र छन्दसि विषये धातोः सयादयः प्रत्यया भवन्ति। तुमर्थो भावः। कथं ज्ञायते? वचनसामर्थ्यात् तावदयं कर्त्तुरपकृष्यते(२), न चान्यस्मिन्नर्थे तुमुन्नादिश्यते, अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्ति, स्वार्थश्च धातूनां भाव एव। से-वक्षे रायः। सेन्-ता वामेषे रथानाम्। असे, असेन्-क्रत्वे दक्षाय जीवसे। स्वरे विशेषः। क्से, कसेन्-प्रेषे भगाय, श्रियसे। अध्यै, अध्यैन्- कर्मण्युपाचरध्यै। स्वरे विशेषः। कध्यै-इन्द्राग्नी आहुवध्यै। कध्यैन्-श्रियध्यै। शध्यै, शध्यैन्-पिबध्यै, सह मादयध्यै। तवै-सोममिन्द्राय पातवे। तवेङ्-दशमे मासि सूतवे। तवेन्-स्वर्देवेषु गन्तवे, कर्त्तवे, हर्त्तवे॥

## प्रयै रोहिष्यै अव्यथिष्यै॥ १०॥

तुमर्थे छन्दसीत्येव। प्रयै, रोहिष्यै, अव्यथिष्यै इत्येते शब्दा निपात्यन्ते छन्दसि विषये। प्रपूर्वस्य यातेः कैप्रत्ययः—प्रयै देवेभ्यः, प्रयातुम्। रुहेः इष्यैप्रत्ययः—अपामोषधीनां रोहिष्यै, रोहणाय। व्यथेर्नञ्पूर्वस्य इष्यैप्रत्ययः—अव्यथिष्यै, अव्यथनाय॥

---

**लिङर्थे**—वेद में लिङ्लकारार्थ में विकल्प से लेट् लकार होता है।

**उपसम्वादा**—पणबन्ध तथा कारणनिमित्तक कार्यावगम अर्थों में वेद में लेट् प्रत्यय होता है।

**तुमर्थे**—वेद में तुमुन् प्रत्यय के अर्थ में से, सेन्, असे, असेन्, क्से, कसेन्, अध्यै, अध्यैन्, कध्यै, कध्येन्, शध्यै, शध्यैन्, तवै, तवेङ् तथा तवेन् प्रत्यय होते हैं।

**प्रयै**—वेद में तुमुन् के अर्थ में कै आदि प्रत्ययान्त 'प्रयै', 'रोहिष्यै' तथा 'अव्यथिष्यै' शब्दों का निपातन होता है।

---

(१) कारणत इत्यादिनाऽऽशङ्कायाः स्वरूपं प्रदर्शितम्। अनुसरणमिति-अनुगमनमनुमानमित्यर्थः। तर्क उत्प्रेक्षेति-आशङ्काया इमौ पर्यायौ।

(२) अपकृष्यते=अपनीयते, कर्त्तरि न भवतीति यावत्।

## दृशे विख्ये च ॥ ११ ॥

तुमर्थे छन्दसीत्येव। दृशे, विख्ये इत्येतौ छन्दसि विषये निपात्येते। दृशेः के प्रत्ययः-दृशे विश्वाय सूर्यम् = द्रष्टुम्। विख्ये त्वा हरामि = विख्यातुम् ॥

## शकि णमुल्कमुलौ ॥ १२ ॥

छन्दसीत्येव। शक्नोतौ धातावुपपदे छन्दसि विषये तुमर्थे णमुल्कमुल् इत्येतौ प्रत्ययौ भवतः। णकारो वृद्ध्यर्थः। ककारो गुणवृद्धिप्रतिषेधार्थः। लकारः स्वरार्थः। अग्निं वै देवा विभाजं नाशक्नुवन्। विभक्तुमित्यर्थः। अपलुपं नाशक्नुवन्। अपलोप्तुमित्यर्थः ॥

## ईश्वरे तोसुन्कसुनौ ॥ १३ ॥

तुमर्थे छन्दसीत्येव। ईश्वरशब्द उपपदे छन्दसि विषये तुमर्थे धातोस्तोसुन्कसुन्प्रत्ययौ भवतः। ईश्वरोऽभिचरितोः। अभिचरितुमित्यर्थः। ईश्वरो विलिखः। विलिखितुमित्यर्थः। ईश्वरो वितृदः। वितर्दितुमित्यर्थः ॥

## कृत्यार्थे तवैकेन्केन्यत्वनः ॥ १४ ॥

छन्दसीत्येव। कृत्यानामर्थो भावकर्मणी। तस्मिन् कृत्यार्थे छन्दसि विषये तवै, केन्, केन्य, त्वन् इत्येते प्रत्यया भवन्ति। तवै-अन्वेतवै = अन्वेतव्यम्। परिधातवै = परिधातव्यम्। परिस्तरितवै = परिस्तरितव्यम्। केन्-नावगाहे = नावगाहितव्यम्। केन्य-दिदृक्षेण्यः, शुश्रूषेण्यः = दिदृक्षितव्यम्, शुश्रूषितव्यम्। त्वन्-कर्त्वं हविः = कर्त्तव्यम्। तुमर्थे छन्दसि सयादिसूत्रेऽपि तवै विहितः। तस्य तुमर्थादन्यत्र कारके विधिर्द्रष्टव्यः ॥

## अवचक्षे च ॥ १५ ॥

कृत्यार्थे छन्दसीत्येव। अवपूर्वाच्चक्षिङ एशप्रत्ययो निपात्यते। नावचक्षे। नावख्यातव्यमित्यर्थः ॥

## भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् ॥ १६ ॥

कृत्यार्थं इति निवृत्तम्। तुमर्थ इति वर्त्तते। प्रकृत्यर्थविशेषणं भावलक्षणग्रहणम्। भावो लक्ष्यते येन तस्मिन्नर्थे वर्त्तमानेभ्यः स्थादिभ्यो धातुभ्यश्छन्दसि विषये तुमर्थे तोसुन्प्रत्ययो भवति। आ संस्थातोर्वेद्यां सीदन्ति। आ समाप्तेः सीदन्तीत्यर्थः। इण्—पुरा सूर्यस्योदेतोराधेयः। कृञ्-पुरा वत्सानामपाकर्त्तोः। वदि-पुरा प्रवदितोरग्नौ प्रहोत-

---

**दृशे**—वेद में तुमुन्नर्थक केप्रत्ययान्त 'दृशे' तथा 'विख्ये' शब्दों का निपातन होता है।

**शकि**—'शक्' धातु के उपपद होने पर धातु से वेद में तुमुन्नर्थ में णमुल् तथा कमुल् प्रत्यय होते हैं।

**ईश्वरे**—ईश्वर शब्द के उपपद होने पर वेद में धातु से तुमुन्नर्थ में तोसुन् तथा कसुन् प्रत्यय होते हैं।

**कृत्यार्थे**—भाव तथा कर्म में वेद में कृत्य प्रत्यय के स्थान में तवै, केन्, केन्य तथा त्वन् प्रत्यय होते हैं।

**अवचक्षे**—अवपूर्वक 'चक्षिङ्' धातु से भी कृत्यार्थ में वेद में एश् प्रत्यय का निपातन होता है।

**भावलक्षणे**—भावलक्षक अर्थ में वर्त्तमान 'स्था', 'इण्', 'कृञ्', 'वद', 'चर', 'हु', 'तम' तथा 'जन्' धातुओं से तुमुन्नर्थ में वेद में तोसुन् प्रत्यय होता है।

व्यम् । चरि-पुरा प्रचरितोराग्नीध्रे होतव्यम् । हु-आ होतोरप्रमत्तस्तिष्ठति । तमि-आ तमितोरासीत । जनि-आ विजनितोः सम्भवामेति ॥

## सृपितृदोः कसुन् ॥ १७ ॥

भावलक्षणे छन्दसीति वर्त्तते । सृपितृदोर्द्धात्वोर्भावलक्षणेऽर्थे वर्त्तमानयोश्छन्दसि विषये तुमर्थे कसुन्प्रत्ययो भवति । पुरा क्रूरस्य विसृपो विरप्शिन् । पुरा जतृभ्य आतृदः ॥

## अलङ्खल्वोः प्रतिषेधयोः प्राचां क्त्वा ॥ १८ ॥

छन्दसि भावलक्षण इति सर्वं निवृत्तम् । अलं खलु इत्येतयोः प्रतिषेधवाचिनोरुपपदयोर्धातोः क्त्वा प्रत्ययो भवति प्राचामाचार्याणां मतेन । अलं कृत्वा । खलु कृत्वा । अलं बाले रुदित्वा । अलङ्खल्वोरिति किम् ? मा कार्षीः । प्रतिषेधयोरिति किम् ? अलङ्कारः । प्राचांग्रहणं विकल्पार्थम्—अलं रोदनेन । वासरूपविधिश्चेत्पूजार्थम् ॥

## उदीचां माङो व्यतीहारे ॥ १९ ॥

क्त्वाऽनुवर्त्तते । माङो धातोर्व्यतीहारे वर्त्तमानादुदीचामाचार्याणां मतेन क्त्वा प्रत्ययो भवति । अपमित्य याचते । अपमित्य हरति । अपूर्वकालत्वादप्राप्तः क्त्वा विधीयते । उदीचांग्रहणात्तु यथाप्राप्तमपि भवति—याचित्वाऽपमयते । हृत्वाऽपमयते । मेङः कृतात्वस्यायं निर्देशः कृतो ज्ञापनार्थः—नानुबन्धकृतमनेजन्तत्वमिति । तेन "दाधा घ्वदाप्" इति दैपोऽपि प्रतिषेधो भवति ॥

## परावरयोगे च ॥ २० ॥

परावराभ्यां योगः परावरयोगः । परेण पूर्वस्य योगे गम्यमान अवरेण च परस्य धातोः क्त्वा प्रत्ययो भवति । परेण तावत्—अप्राप्य नदीं पर्वतः स्थितः । परनदीयोगेन पर्वतो विशेष्यते(१) । अवरयोगे—अतिक्रम्य तु पर्वतं नदी स्थिता । अवरपर्वतयोगेन नदी विशेष्यते ॥

## समानकर्तृकयोः पूर्वकाले ॥ २१ ॥

समानः कर्त्ता ययोर्धात्वर्थयोस्तत्र पूर्वकाले धात्वर्थे वर्त्तमानाद्धातोः क्त्वा प्रत्ययो भवति । शक्तिशक्तिमतोर्भेदस्याविवक्षितत्वात् समानकर्तृकता । भुक्त्वा व्रजति । पीत्वा व्रजति । द्विवचनमतन्त्रम्—स्नात्वा पीत्वा दत्त्वा व्रजति । समानकर्तृकयोरिति किम् ? भुक्त-

---

**सृपि**—वेद में भावलक्षक अर्थ में वर्त्तमान 'सृप्' तथा 'तृद्' धातुओं से तुमुन्नर्थ में कसुन् प्रत्यय होता है ।

**अलङ्खल्वोः**—प्रतिषेधार्थक अलम् तथा खलु शब्दों के उपपद होने पर धातु से क्त्वा प्रत्यय होता है प्राचीन आचार्यों के मत में ।

**उदीचाम्**—व्यतीहारार्थक 'माङ्' धातु से उदीच्य आचार्यों के अनुसार क्त्वा प्रत्यय होता है ।

**परावर**—पर से पूर्व के तथा अवर से पर के योग के गम्यमान होने पर भी धातु से क्त्वा प्रत्यय होता है ।

**समान**—जिन दो धातुओं का कर्त्ता एक ही हो उन दोनों धातुओं में पूर्वकालिक-क्रियावाचक धातु से क्त्वा प्रत्यय होता है ।

---

(१) विशिष्यते इति न्यासपाठः ।

वति ब्राह्मणे गच्छति देवदत्तः। पूर्वकाले इति किम् ? व्रजति च जल्पति च। ॐआस्यं व्यादाय(१) स्वपिति, चक्षुः सम्मील्य हसतीत्युपसङ्ख्यानमपूर्वकालत्वात्ॐ ॥

## आभीक्ष्ण्ये णमुल् च ॥ २२ ॥

समानकर्तृकयोः पूर्वकाल इत्येव। आभीक्ष्ण्यं पौनः पुन्यम्, प्रकृत्यर्थविशेषणं चैतत्। आभीक्ष्ण्यविशिष्टेर्थे वर्त्तमानाद्धातोर्णमुल् प्रत्ययो भवति, चकारात् क्त्वा च। द्विर्वचनसहितौ क्त्वाणमुलावाभीक्ष्ण्यं द्योतयतो न केवलौ। आभीक्ष्ण्ये द्वे भवतइत्युपसंख्यानाद् द्विर्वचनम्-भोजम्भोजं व्रजति, भुक्त्वा व्रजति। पायम्पायं व्रजति, पीत्वा व्रजति ॥

## न यद्यनाकाङ्क्षे ॥ २३ ॥

यच्छब्द उपपदे धातोः क्त्वाणमुलौ प्रत्ययौ न भवतोऽनाकाङ्क्षे वाच्ये। यत्र पूर्वोत्तरे क्रिये स्तस्तच्चेद्वाक्यं न परं किंचिदाकांक्षत इति। णमुलनन्तरः, क्त्वा तु पूर्वसूत्रविहितोऽपि प्रतिषिद्ध्यते। यदयं भुङ्क्ते ततः पचति। यदयमधीते ततः शेते। अनाकाङ्क्ष इति किम् ? यदयं भुक्त्वा व्रजति अधीत एव ततः परम् ॥

## विभाषाग्रेप्रथमपूर्वेषु ॥ २४ ॥

अप्राप्तविभाषेयम्। आभीक्ष्ण्य इति नानुवर्त्तते। अग्रे, प्रथम, पूर्व इत्येतेषूपपदेषु समानकर्तृकयोः पूर्वकाले धातोः क्त्वाणमुलौ प्रत्ययौ विभाषा भवतः। अग्रे भोजं व्रजति। अग्रे भुक्त्वा व्रजति। प्रथमं भोजं व्रजति। प्रथमं भुक्त्वा व्रजति। पूर्वं भोजं व्रजति। पूर्वं भुक्त्वा व्रजति। विभाषाग्रहणमेताभ्यां मुक्ते लडादयोऽपि यथा स्युः-अग्रे भुङ्क्ते ततो व्रजति। ननु च वासरूप इति भविष्यति ? क्त्वाणमुलौ यत्र सह विधीयेते तत्र वासरूपविधिर्नास्तीत्येतदनेन ज्ञाप्यते। तेनाभीक्ष्ण्ये लडादयो भवन्ति। उपपदसमासः कस्मान्न क्रियते ? उक्तं तत्रैवकारस्य प्रयोजनम्-अमैव तुल्यविधानं यदुपपदं तत् समस्यते नाऽन्यदिति ॥

## कर्मण्याक्रोशे कृञः खमुञ् ॥ २५ ॥

कर्मण्युपपदे कृञो धातोः खमुञ् प्रत्ययो भवति आक्रोशे गम्यमाने। चोरङ्कारमा-

---

**आस्यम्**—'आस्यम् व्यादाय स्वपिति' एवम् 'चक्षुः सम्मील्य हसति' इन दोनों प्रयोगों में समानकालिक क्रियावाचक होने पर भी व्याङ्+'दा' धातु तथा सम्+'मील' धातुओं से क्त्वा प्रत्यय का प्रतिपादन कर्त्तव्य है।

**आभीक्ष्ण्ये**—पौनःपुन्यविशिष्ट अर्थ में वर्त्तमान समानकर्तृक धातुओं में पूर्वक्रियावाचक धातु से णमुल् प्रत्यय भी होता है और क्त्वा प्रत्यय भी।

**न यद्यना**—अनाकांक्ष कर्त्ता के वाच्य होने पर समानकर्तृक धातुओं में पूर्वकालिकक्रियावाचक धातु से यत् शब्द के उपपद होने पर आभीक्ष्ण्य अर्थ में क्त्वा तथा णमुल् प्रत्यय नहीं होते हैं।

**विभाषा**—अग्रे, प्रथम तथा पूर्व शब्दों के उपपद होने पर समानकर्तृक धातुओं में पूर्वकालिकक्रियावाचक धातु से विकल्प से क्त्वा तथा णमुल् प्रत्यय होते हैं।

**कर्मण्याक्रोशे**—कर्मकारक के उपपद होने पर समानकर्तृक पूर्वक्रियावाचक 'कृञ्' धातु से आक्रोश के गम्यमान होने पर खमुञ् प्रत्यय होता है।

---

(१) व्यादानमीलनयोः स्वापहसनसमानकालिकक्रियावचनत्वात्सूत्रेणाऽप्राप्तौ वचनम्। क्रिययोः पूर्वकालिकत्वे तु सूत्रसिद्ध एव प्रत्यय इति बोध्यम्। (श्रीना०)

क्रोशति । चोरोऽसि दस्युरसि इत्याक्रोशति । चोरकरणम्(१)आक्रोशसम्पादनार्थमेव, न त्वसौ चोरः क्रियते ॥

## स्वादुमि णमुल् ॥ २६ ॥

समानकर्तृकयोः, कृञ इति चाऽनुवर्त्तते । स्वादुमीत्यर्थग्रहणम् । स्वाद्वर्थेषूपपदेषु कृञो णमुल् प्रत्ययो भवति । स्वादुङ्कारं भुङ्क्ते । सम्पन्नङ्कारं भुङ्क्ते । लवणङ्कारम्भुङ्क्ते । स्वादुमीति मकारान्तनिपातनमीकाराभावार्थम्(२), च्व्यन्तस्यापि मकारार्थं दीर्घाभावार्थं च । अस्वाद्वीं कृत्वा भुङ्क्ते स्वादुङ्कारं भुंक्ते । वासरूपेण क्त्वापि भवति—स्वादु कृत्वा भुंक्ते । तुमर्थाधिकाराच्च सर्वं एते भावे प्रत्ययाः । यद्येवं स्वादुङ्कारं भुंक्ते देवदत्त इति णमुला कर्त्तुरनभिहितत्वात्कर्त्तरि कस्मात्तृतीया न भवति ? भुजि(३)प्रत्ययेनाभिहितः कर्त्ता, न चास्मिन् प्रकरणे शक्तिशक्तिमतोर्भेदो विवक्ष्यते, समानकर्तृत्वं हि विरुद्ध्यते । प्रधानशक्त्यभिधाने वा गुणशक्तिरभिहितवत् प्रकाशते ॥

## अन्यथैवङ्कथमित्थंसु सिद्धाप्रयोगश्चेत् ॥ २७ ॥

कृञ इत्येव । अन्यथादिषूपपदेषु कृञो णमुल् प्रत्ययो भवति सिद्धाप्रयोगश्चेत्करोतेर्भवति । कथं पुनरसौ सिद्धाप्रयोगः ? निरर्थकत्वान्न प्रयोगमर्हतीति एवमेव प्रयुज्यते । अन्यथा भुङ्क्त इति यावान् अर्थस्तावानेवान्यथाकारं भुङ्क्त इति गम्यते । अन्यथाकारं भुङ्क्ते । एवङ्कारं भुङ्क्ते । कथङ्कारं भुङ्क्ते । इत्थङ्कारं भुंक्ते । सिद्धाप्रयोग इति किम् ? अन्यथाकृत्वा शिरो भुङ्क्ते ॥

## यथातथयोरसूयाप्रतिवचने ॥ २८ ॥

कृञः, सिद्धाप्रयोग इति वर्त्तते । यथातथाशब्दयोरुपपदयोः कृञो णमुल् प्रत्ययो भवति असूयाप्रतिवचने गम्यमाने(४) । यद्यसूयन्(५)पृच्छति प्रतिवक्ति तत्र प्रतिवचनम्—यथाकारमहं भोक्ष्ये तथाकारमहं किं तवानेन । असूयाप्रतिवचने इति किम् ? यथा कृत्वाऽहं भोक्ष्ये तथा त्वं द्रक्ष्यसि । सिद्धाप्रयोग इत्येव—यथा कृत्वाऽहं शिरो भोक्ष्ये किं तवानेन ॥

---

**स्वादुमि**—स्वादु तथा तदर्थक शब्दों के उपपद होने पर पूर्वकालिकक्रियावाचक 'कृञ्' धातु से णमुल् प्रत्यय होता है ।

**अन्यथैवम्**—अन्यथा, एवम्, कथम तथा इत्थम् शब्दों के उपपद होने पर समानकर्तृकपूर्वक्रियावाचक 'कृञ्' धातु से णमुल् प्रत्यय होता है यदि 'कृञ्' धातु का प्रयोग अन्यथासिद्ध हो (अर्थात् 'कृञ्' के प्रयोग के विना भी उतना ही अर्थ निकलता हो जितना 'कृञ्' के प्रयोग करने पर निकलता है)।

**यथा**—यथा और तथा शब्दों के उपपद होने पर अन्यथासिद्धप्रयोग 'कृञ्' धातु से णमुल् प्रत्यय होता है असूया के प्रतिवचन के गम्यमान होने पर ।

---

(१) चोरकरणमिति—चोरोऽसीत्याक्रोशवाक्ये चोरशब्दस्य यत् करणमुच्चारणं तदाक्रोशस्यैव सम्पादनार्थम् ।

(२) ईकाराभावार्थमिति—वोतो गुणवचनात् इति ङीष्प्रतिषेधार्थमित्यर्थः । दीर्घाभावार्थञ्चेति—च्वौ चेति दीर्घाभावार्थमित्यर्थः ।

(३) भुजिप्रत्ययेन = लटा ।

(४) असूया अक्षमा इति क्वचिदधिकम् ।

(५) यद्यसूयन्निति-पृच्छति सति यद्यसूयन्नसूयां कुर्वन् प्रतिवक्ति तदा तत्र पृच्छति यत् प्रतिवचनं तदसूयाप्रतिवचनमित्यर्थः ।

## कर्मणि दृशिविदोः साकल्ये ॥ २९ ॥

कर्मण्युपपदे साकल्यविशिष्टेऽर्थे दृशिविदोर्धात्वोर्णमुल् प्रत्ययो भवति। कन्यादर्शं वरयति। या याः कन्याः पश्यति तास्ता वरयतीत्यर्थः। ब्राह्मणवेदं भोजयति। यं यं ब्राह्मणं जानाति लभते विचारयति वा तान् सर्वान् भोजयतीत्यर्थः। साकल्य इति किम्? ब्राह्मणं दृष्ट्वा भोजयति।

## यावति विन्दजीवोः ॥ ३० ॥

यावच्छब्द उपपदे विन्दतेर्जीवतेश्च णमुल् प्रत्ययो भवति। यावद्वेदं भुङ्क्ते। यावल्लभते तावद्भुङ्क्त इत्यर्थः। यावज्जीवमधीते। यावज्जीवति तावदधीत इत्यर्थः॥

## चर्मोदरयोः पूरेः ॥ ३१ ॥

कर्मणीत्येव। चर्मोदरयोः कर्मणोरुपपदयोः पूरयतेर्णमुल् प्रत्ययो भवति। चर्मपूरं स्तृणाति। उदरपूरं भुङ्क्ते॥

## वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् ॥ ३२ ॥

कर्मणीत्येव। पूरयतेर्धातोर्णमुल् प्रत्ययो भवति ऊलोपश्चास्य पूरयतेरन्यतरस्यां भवति समुदायेन चेद्वर्षस्य प्रमाणमियत्ता गम्यते। गोष्पदपूरं वृष्टो देवः। गोष्पदप्रं वृष्टो देवः। सीतापूरं वृष्टो देवः। सीताप्रं वृष्टो देवः। अस्यग्रहणं किमर्थम्? उपपदे मा भूत्—मूषिकाबिलपूरं वृष्टो देवः, मूषिकाबिलप्रम्॥

## चेले क्नोपेः ॥ ३३ ॥

कर्मणीत्येव। 'क्नूयी शब्दे उन्दने च।' अस्माण्ण्यन्ताद्धातोश्चेलार्थेषु कर्मसु उपपदेषु णमुल् प्रत्ययो भवति वर्षप्रमाणे गम्यमाने। चेलक्नोपं वृष्टो देवः। वस्त्रक्नोपम्। वसनक्नोपम्॥

## निमूलसमूलयोः कषः ॥ ३४ ॥

कर्मणीत्येव। निमूलसमूलशब्दयोरुपपदयोः कषेर्धातोर्णमुल् प्रत्ययो भवति। निमूलकाषं कषति। समूलकाषं कषति। निमूलं समूलं कषतीत्यर्थः। इतः प्रभृति कषादीन् यान् वक्ष्यति तत्र कषादिषु "यथाविध्यनुप्रयोगः" इति॥

---

**कर्मणि**—कर्मकारक के उपपद होने पर 'दृश' तथा 'वद' धातुओं से णमुल् प्रत्यय होता है यदि कर्मकारक साकल्यविशिष्ट अर्थ में वर्तमान हो।

**यावति**—यावत् शब्द के उपपद होने पर 'विन्द्' तथा 'जीव' धातुओं से णमुल् प्रत्यय होता है।

**चर्मोदरयोः**—कर्मत्वविशिष्ट चर्मन् तथा उदर शब्दों के उपपद होने पर 'पूर' धातु से णमुल् प्रत्यय होता है।

**वर्ष**—कर्मकारक के उपपद होने पर 'पूर' धातु से णमुल् प्रत्यय तथा उसके ऊकार का विकल्प से लोप भी हो जाता है यदि समुदाय से वर्षा की इयत्ता की प्रतीति हो।

**चेले**—चेलार्थक ( वस्त्रार्थक ) कर्म के उपपद होने पर 'क्नोपि' धातु से णमुल् प्रत्यय होता है यदि समुदाय से वर्षा की इयत्ता की प्रतीति हो।

**निमूल**—कर्मत्वविशिष्ट निमूल तथा समूल शब्दों के उपपद होने पर 'कष' धातु से णमुल् प्रत्यय होता है।

## शुष्कचूर्णरूक्षेषु पिषः ॥ ३५ ॥

कर्मणीत्येव । शुष्कादिषु कर्मवाचिषूपपदेषु पिषेर्द्धातोर्णमुल् प्रत्ययो भवति । शुष्कपेषं पिनष्टि । शुष्कं पिनष्टीत्यर्थः । चूर्णपेषं पिनष्टि । चूर्णं पिनष्टीत्यर्थः । रूक्षपेषं पिनष्टि । रूक्षं पिनष्टीत्यर्थः ॥

## समूलाकृतजीवेषु हन्कृञ्ग्रहः ॥ ३६ ॥

कर्मणीत्येव । समूल, अकृत, जीव इत्येतेषु शब्देषु कर्मसूपपदेषु यथासंख्यं हन् , कृञ् , ग्रह इत्येतेभ्यो णमुल् प्रत्ययो भवति । समूलघातं हन्ति । समूलं हन्तीत्यर्थः । अकृतकारं करोति । जीवग्राहं गृह्णाति ॥

## करणे हनः ॥ ३७ ॥

करण उपपदे हन्तेर्द्धातोर्णमुल् प्रत्ययो भवति । पाणिघातं वेदिं हन्ति । पादघातं भूमिं हन्ति । "हिंसार्थानां च समानकर्मकाणाम्" इति णमुलं वक्ष्यति, अहिंसार्थोऽयमारम्भः, नित्यसमासार्थो वा यथाविध्यनुप्रयोगार्थश्च । ॐपूर्वविप्रतिषेधेन हन्तेर्हिंसार्थस्यापि प्रत्ययोऽनेनैवेष्यतेॐ । असिघातं हन्ति । शरघातं हन्ति ॥

## स्नेहने पिषः ॥ ३८ ॥

करण इत्येव । स्निह्यते येन तत् स्नेहनम् । स्नेहनवाचिनि करण उपपदे पिषेर्द्धातोर्णमुल् प्रत्ययो भवति । उदपेषं पिनष्टि । तैलपेषं पिनष्टि । तैलेन पिनष्टीत्यर्थः ॥

## हस्ते वर्त्तिग्रहोः ॥ ३९ ॥

करण इत्येव । हस्त इत्यर्थग्रहणम् । वर्त्तिर्ण्यन्तः । हस्तवाचिनि करण उपपदे वर्त्तयतेर्गृह्णातेश्च णमुल् प्रत्ययो भवति । हस्तेन वर्त्तयति, हस्तवर्त्तं वर्त्तयति । करवर्त्तम् । ग्रहेः खल्वपि-हस्तेन गृह्णाति, हस्तग्राहं गृह्णाति । करग्राहम् । पाणिग्राहम् ॥

## स्वे पुषः ॥ ४० ॥

करण इत्येव । स्व इत्यर्थग्रहणम् । स्ववाचिनि करण उपपदे पुषेर्धातोर्णमुल् प्रत्ययो भवति । आत्मात्मीयज्ञातिधनवचनः स्वशब्दः । स्वपोषं पुष्णाति, आत्मपोषम् , गोपोषम्, पितृपोषम्, मातृपोषम्, धनपोषम्, रैपोषम् ॥

## अधिकरणे बन्धः ॥ ४१ ॥

अधिकरणवाचिन्युपपदे बध्नातेर्द्धातोर्णमुल्प्रत्ययो भवति । चक्रबन्धं बध्नाति ।

---

**शुष्क**—कर्मत्वविशिष्ट शुष्क, चूर्ण तथा रूक्ष शब्दों के उपपद होने वर 'पिष' धातु से णमुल् प्रत्यय होता है ।

**समूलाकृत**—कर्मत्वविशिष्ट समूल, अकृत तथा जीव शब्दों के उपपद होने पर यथाक्रम 'हन्', 'कृञ्' यथा 'ग्रह' धातुओं से णमुल् प्रत्यय होता है ।

**करणे**—करण कारक के उपपद होने पर 'हन्' धातु से णमुल् प्रत्यय होता है ।

**पूर्वविप्रति**—पूर्वविप्रतिषेध के आधार पर हिंसार्थक 'हन्' धातु से भी णमुल् प्रतणय का विधान इसी सूत्र से होता है न कि 'हिंसार्थानाम्' आदि सूत्र से ।

**स्नेहने**—स्नेहनार्थक करण के उपपद होने पर 'पिष्' धातु से णमुल् प्रत्यय होता है ।

**हस्ते**—करणत्वविशिष्ट हस्तार्थक शब्द के उपपद होने पर ण्यन्त 'वृत्' तथा 'ग्रह' धातुओं से णमुल् प्रत्यय होता है ।

**स्वे**—स्वार्थककरण के उपपदत्व में 'पुष' धातु से णमुल् प्रत्यय होता है ।

**अधिकरणे**—अधिकरणकारक के उपपद होने पर 'बन्ध्' धातु से णमुल् प्रत्यय होता है ।

कूटबन्धं बध्नाति । मुष्टिबन्धं बध्नाति । चोरकबन्धं बध्नाति । चोरके बध्नातीत्यर्थः ॥

## संज्ञायाम् ॥ ४२ ॥

संज्ञायां विषये बध्नातेर्धातोर्णमुल्प्रत्ययो भवति । क्रौञ्चबन्धं बध्नाति । मयूरिकाबन्धम् , अट्टालिकाबन्धं बद्धः । बन्धविशेषाणां नामधेयान्येतानि ॥

## कर्त्रोर्जीवपुरुषयोर्नशिवहोः ॥ ४३ ॥

जीवपुरुषयोः कर्तृवाचिनोरुपपदयोर्यथासंख्यं नशिवहोर्धात्वोर्णमुल् प्रत्ययो भवति । जीवनाशं नश्यति । जीवो नश्यतीत्यर्थः । पुरुषवाहं वहति । पुरुषः प्रेष्यो भूत्वा वहतीत्यर्थः । कर्त्तरीति किम् ? जीवेन नष्टः, पुरुषेणोढः ॥

## ऊर्ध्वे शुषिपूरोः ॥ ४४ ॥

कर्तृग्रहणमनुवर्तते । ऊर्ध्वशब्दे कर्तृवाचिन्युपपदे शुषिपूरोर्धात्वोर्णमुल् प्रत्ययो भवति । ऊर्ध्वशोषं शुष्यति । ऊर्ध्वं शुष्यतीत्यर्थः । ऊर्ध्वपूरं पूर्यते । ऊर्ध्वं पूर्यत इत्यर्थः ॥

## उपमाने कर्मणि च ॥ ४५ ॥

उपमीयतेऽनेनेत्युपमानम् । उपमाने कर्मण्युपपदे चकारात् कर्त्तरि धातोर्णमुल् प्रत्ययो भवति । घृतनिधायं निहितः । घृतमिव निहित इत्यर्थः । सुवर्णनिधायं निहितः । सुवर्णमिव निहितः । कर्त्तरि खल्वपि—अजकनाशं नष्टः, अजक इव नष्टः, चूडकनाशम्, दन्तनाशम् ॥

## कषादिषु यथाविध्यनुप्रयोगः ॥ ४६ ॥

निमूलसमूलयोरित्येतदारभ्य कषादयः । एतेषु यथाविध्यनुप्रयोगो भवति । यस्माद्धातोर्णमुल् प्रत्ययो भवति स एवानुप्रयोक्तव्यः । ननु धातुसंबन्धे प्रत्ययविधानादनुप्रयोगः सिद्ध एव ? यथाविधीति नियमार्थं वचनम् । तथा चैवोदाहृतम् ॥

## उपदंशस्तृतीयायाम् ॥ ४७ ॥

'दंश दशने', अस्माद्धातोरुपपूर्वात्तृतीयान्त उपपदे णमुल्प्रत्ययो भवति । मूलकोपदंशंभुङ्क्ते, मूलकेनोपदंशम् । आर्द्रकोपदंशम् , आर्द्रकेणोपदंशम् । अत्र विकल्पेनोपपदसमासः—"तृतीयाप्रभृतीन्यन्यतरस्याम्" इति । मूलकादि चोपदंशेः कर्म, भुजेः करणम् । सर्वस्मिन्नेवात्र णमुल्प्रकरणे सति क्रियाभेदे(१) वासरूपविधिना क्त्वापि भवति—मूलकेनोपदश्य भुङ्क्ते ॥

---

**संज्ञायाम्**—संज्ञाविषय में 'बन्ध्' धातु से णमुल् प्रत्यय होता है ।

**कर्त्रोः**—कर्तृवाची जीव तथा पुरुष शब्दों के उपपद होनेपर क्रमशः 'नश' तथा 'वह' धातु से णमुल् प्रत्यय होता है ।

**ऊर्ध्वे**—कर्तृवाची ऊर्ध्व शब्द के उपपद होने पर 'शुष्' तथा 'पूर' धातुओं से णमुल् प्रत्यय होता है ।

**उपमाने**—उपमानवाचक कर्मकारक तथा कर्तृकारक के उपपद होने पर भी धातु से णमुल् प्रत्यय होता है ।

**कषादिषु**—'निमूलसमूलयोः कषः' सूत्र से लेकर आगे जिन धातुओं से णमुल् का विधान किया गया है उन्हीं धातुओं का अनुप्रयोग भी समझना चाहिए ।

**उपदंशः**—तृतीयान्त के उपपद होने पर उपपूर्वक 'दंश' धातुसे णमुल् प्रत्यय होता है ।

---

(१) सति क्रियाभेद इति-क्रियाभेदग्रहणेन क्त्वाप्रत्ययविषयमुपलक्षयति । यत्र क्रियाणां पौर्वापर्यं समानकर्तृकत्वञ्च स क्त्वाप्रत्ययस्य विषयः ।

## हिंसार्थानां च समानकर्मकाणाम् ॥ ४८ ॥

तृतीयायामित्येव । हिंसा प्राण्युपघातः । तदर्थानां धातूनामनुप्रयोगधातुना समानकर्मकाणां तृतीयान्त उपपदे णमुल् प्रत्ययो भवति । दण्डोपघातं गाः कालयति, दण्डेनोपघातम् । दण्डताडम्, दण्डेन ताडम् । समानकर्मकाणामिति किम् ? चोरं दण्डेनोपहत्य गोपालको गाः कालयति ॥

## सप्तम्यां चोपपीडरुधकर्षः ॥ ४९ ॥

उपशब्दः प्रत्येकमभिसंबध्यते । उपपूर्वेभ्यः पीडरुधकर्षेभ्यः सप्तम्यन्त उपपदे चकारात्तृतीयान्त उपपदे णमुल् प्रत्ययो भवति । पार्श्वोपपीडं शेते, पार्श्वयोरुपपीडम्, पार्श्वाभ्यामुपपीडम् । व्रजोपरोधं गाः स्थापयति, व्रज उपरोधम्, व्रजेनोपरोधम् । पाण्युपकर्षं धानाः संगृह्णाति, पाणावुपकर्षम्, पाणिनोपकर्षम् । कर्षतेरिदं ग्रहणं न कृषतेः ॥

## समासत्तौ ॥ ५० ॥

सप्तम्यां तृतीयायामिति वर्त्तते । समासत्तिः सन्निकर्षः । समासत्तौ गम्यमानायां तृतीयासप्तम्योरुपपदयोर्धातोर्णमुल् प्रत्ययो भवति । केशग्राहं युद्धयन्ते । केशेषु ग्राहम् । केशैर्ग्राहम् । हस्तग्राहम् । हस्तेषु ग्राहम् । हस्तैर्ग्राहम् । युद्धसंरम्भात्(१)अत्यन्तं सन्निकृष्यन्त इत्यर्थः ॥

## प्रमाणे च ॥ ५१ ॥

तृतीयासप्तम्योरित्येव । प्रमाणमायामो दैर्घ्यम् । प्रमाणे गम्यमाने तृतीयासप्तम्योरुपपदयोर्धातोर्णमुल् प्रत्ययो भवति । द्व्यङ्गुलोत्कर्षं खण्डिकां छिनत्ति, द्व्यङ्गुल उत्कर्षम्, द्व्यङ्गुलेनोत्कर्षम् । त्र्यङ्गुलोत्कर्षम् ॥

## अपादाने परीप्सायाम् ॥ ५२ ॥

परीप्सा त्वरा । परीप्सायां गम्यमानायामपादान उपपदे धातोर्णमुल् प्रत्ययो भवति । शय्योत्थायं धावति, शय्याया उत्थाय । एवं नाम त्वरते यदवश्यं कर्त्तव्यमपि नापेक्षते, शय्योत्थानमात्रमाद्रियते । रन्ध्रापकर्षं(२) पयः पिबति । भ्राष्ट्रापकर्षमपूपान् भक्षयति । परीप्सायामिति किम् ? आसनादुत्थाय गच्छति ॥

---

**हिंसार्थानाम्**—अनुप्रयुक्तधातुसमानकर्मक हिंसार्थक धातुओं से तृतीयान्त के उपपद होने-पर णमुल् प्रत्यय होता है ।

**सप्तम्याम्**—सप्तम्यन्त तथा तृतीयान्त के उपपद होने पर उप + 'पीड', उप + 'रुध्' तथा उप + 'कर्ष' धातुओं से णमुल् प्रत्यय होता है ।

**समासत्तौ**—सन्निकर्ष की गम्यमानता में सप्तम्यन्त अथवा तृतीयान्त के उपपद होने पर धातु से णमुल् प्रत्यय होता है ।

**प्रमाणे**—तृतीयान्त अथवा सप्तम्यन्त के उपपद होने पर धातु से णमुल् प्रत्यय होता है लम्बाई के गम्यमान होने पर ।

**अपादाने**—अपादानकारक के उपपद होने पर धातु से णमुल् प्रत्यय होता है परीप्सा (शीघ्रता) के गम्यमान होने पर ।

---

(१) संरम्भः कोपादिना मनःसंक्षोभपूर्वको वाक्कायविकारविशेषः ।

(२) रन्ध्रापकर्षमिति—एवं नाम त्वरते यत् पात्रमपि नापेक्षते, स्तनरन्ध्रादेवापकृष्य मुखेन पयः पिबति । भ्राष्ट्रापकर्षमिति—एवं नाम त्वरते यद् भाजनमपि दीयमानं नापेक्षते, भ्राष्ट्रादेवापकृष्य हस्तेन भक्षयति ।

## द्वितीयायाञ्च ॥ ५३ ॥

परीप्सायामित्येव। द्वितीयान्त उपपदे परीप्सायां गम्यमानायां धातोर्णमुल् प्रत्ययो भवति। यष्टिग्राहं युध्यन्ते। यष्टिं ग्राहम्। लोष्टग्राहम्, लोष्टं ग्राहम्। एवं नाम त्वरते यदायुधग्रहणमपि नाद्रियते, लोष्टादिकं यत्किञ्चिदासन्नं तद् गृह्णाति॥

## स्वाङ्गेऽध्रुवे ॥ ५४ ॥

द्वितीयायामित्येव। अध्रुवे स्वाङ्गवाचिनि द्वितीयान्त उपपदे धातोर्णमुल् प्रत्ययो भवति। अक्षिनिकाणं जल्पति। भ्रूविक्षेपं कथयति। अध्रुव इति किम्? उत्क्षिप्य शिरः कथयति। यस्मिन्नङ्गे छिन्नेऽपि प्राणी न म्रियते तदध्रुवम्। 'अद्रवं मूर्तिमत्स्वाङ्गम्'॥

## परिक्लिश्यमाने च ॥ ५५ ॥

स्वाङ्गे, द्वितीयायामित्येव। परिक्लिश्यमाने स्वाङ्गवाचिनि द्वितीयान्त उपपदे धातोर्णमुल् प्रत्ययो भवति। परिक्लेशः सर्वतो विबाधनम्, दुःखनम्। उरःपेषं युद्ध्यन्ते। उरः प्रतिषेधं युद्ध्यन्ते। शिरःपेषम्। शिरः प्रतिषेधम्। कृत्स्नमुरः पीडयन्तो युध्यन्ते। ध्रुवार्थोऽयमारम्भः॥

## विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ॥ ५६ ॥

द्वितीयायामित्येव। द्वितीयान्त उपपदे विश्यादिभ्यो धातुभ्यो णमुल् प्रत्ययो भवति व्याप्यमाने आसेव्यमाने चार्थे गम्यमाने। विश्यादिभिः क्रियाभिरनवयवेन पदार्थानां संबन्धो व्याप्तिः। तात्पर्यमासेवा। द्रव्ये व्याप्तिः, क्रियायामासेवा। गेहाऽनुप्रवेशमास्ते। समासेन व्याप्त्यासेवयोरुक्तत्वात् "नित्यवीप्सयोः" इति द्विर्वचनं न भवति। असमासपक्षे तु व्याप्यमानतायां द्रव्यवचनस्य द्विर्वचनम्, आसेव्यमानतायान्तु क्रियावचनस्य। तथाच वक्ष्यति—"सुप्सु वीप्सा, तिङ्क्षु नित्यतेति"। गेहंगेहमनुप्रवेशमास्ते। आसेवायाम्—गेहमनुप्रवेशमनुप्रवेशमास्ते। पति—गेहानुप्रपातमास्ते। गेहंगेहमनुप्रपातमास्ते, गेहमनुप्रपातमनुप्रपातमास्ते। पदि—गेहानुप्रपादमास्ते, गेहंगेहमनुप्रपादम्, गेहमनुप्रपादमनुप्रपादम्। स्कन्दि—गेहावस्कन्दमास्ते, गेहंगेहमवस्कन्दम्, गेहमवस्कन्दमवस्कन्दम्। व्याप्यमानासेव्यमानयोरिति किम्? गेहमनुप्रविश्य भुङ्क्ते। ननु चाऽऽभीक्ष्ण्ये णमुल्विहित एव, आसेवा चाभीक्ष्ण्यमेव, किमर्थम्पुनरासेवायां णमुलुच्यते? क्त्वानिवृत्त्यर्थमिति चेत्? न, इष्टत्वात्तस्य। द्वितीयोपपदार्थं तर्हि वचनम्—उपपदसमासः पक्षे यथा स्यात्, तेन हि सत्युपपदाभावः॥

---

**द्वितीयायाञ्च**—द्वितीयान्त के उपपदत्व में भी परीप्सा के गम्ममान होने पर धातु से णमुल् प्रत्यय होता है।

**स्वाङ्गे**—अध्रुव (अर्थात जिस अङ्ग के काट दिए जाने पर भी प्राणी की मृत्यु न हो) स्वाङ्ग के वाचक द्वितीयान्त पद के उपपद होने पर धातु से णमुल् प्रत्यय होता है।

**परि**—परिक्लिश्यमान-स्वाङ्गवाचक द्वितीयान्त के उपपदत्व में भी धातु से णमुल् प्रत्यय होता है।

**विशिपति**—द्वितीयान्त के उपपद होने पर 'विश्', 'पत्', 'पद' तथा 'स्कन्द्' धातुओं से व्याप्यमान तथा आसेव्यमान अर्थों के गम्यमान होने पर णमुल् प्रत्यय होता है।

## अस्यतितृषोः क्रियान्तरे कालेषु ॥ ५७ ॥

द्वितीयायामित्येव । क्रियामन्तरयति क्रियान्तरः, क्रियाऽव्यवधायकः । क्रियान्तरे धात्वर्थे वर्त्तमानाभ्यामस्यतितृषिभ्यां द्वितीयान्तेषु कालवाचिषूपपदेषु णमुलप्रत्ययो भवति । द्व्यहात्यासं गाः पाययति । द्व्यहमत्यासं गाः पाययति । त्र्यहात्यासं गाः पाययति । त्र्यहमत्यासं गाः पाययति । द्व्यहतर्षं गाः पाययति । द्व्यहं तर्षं गाः पाययति । अत्यसनेन तर्षणेन च गवां पानक्रिया व्यवधीयते = विच्छिद्यते । अद्य पाययित्वा द्व्यहमतिक्रम्य पुनः पाययतीत्यर्थः । अस्यतितृषोरिति किम् ? द्व्यहमुपोष्य भुङ्क्ते । क्रियान्तरे इति किम् ? अहरत्यस्येषून्(१)गतः । न गतिर्व्यवधीयते । कालेष्विति किम् ? योजनमत्यस्य गाः पाययति । अध्वकर्मकमत्यसनं व्यवधायकं न कालकर्मकम् ॥

## नाम्न्यादिशिग्रहोः ॥ ५८ ॥

द्वितीयायामित्येव । नामशब्दे द्वितीयान्त उपपदे आदिशेर्ग्रहेश्च धातोर्णमुलप्रत्ययो भवति । नामादेशमाचष्टे ॥

## अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ ॥ ५९ ॥

(२) अव्यय उपपदेऽयथाभिप्रेताख्याने गम्यमाने करोतेः क्त्वाणमुलौ भवतः । ब्राह्मण ! पुत्रस्ते जातः। किं तर्हि–वृषल ! नीचैःकृत्याचष्टे(३), नीचैः कृत्वा, नीचैः कारम् ? उच्चैर्नाम प्रियमाख्येयम् । ब्राह्मण ! कन्या ते गर्भिणी, किं तर्हि वृषलोच्चैः कृत्याचष्टे, उच्चैः कृत्वा, उच्चैः कारम् ? नीचैर्नामाप्रियमाख्येयम् । अयथाभिप्रेताख्यान इति किम् ? उच्चैः कृत्वाऽऽचष्टे—पुत्रस्ते जात इति । क्त्वाग्रहणं किम् ? यावता सर्वस्मिन्नेवात्र प्रकरणे वासरूपेण क्त्वा भवतीत्युक्तम् । समासार्थं वचनम् । तथाच "क्त्वा च" इत्यस्मिन् सूत्रे "तृतीयाप्रभृतीन्यन्यतरस्याम्" इति वर्त्तते । णमुलधिकारे णमुल्ग्रहणं तुल्यकर्तृत्वज्ञापनार्थम् । तेनोत्तरत्र द्वयोरप्यनुवृत्तिर्भविष्यति ॥

## तिर्यच्यपवर्गे ॥ ६० ॥

तिर्यक्शब्द उपपदे कृञः क्त्वाणमुलौ प्रत्ययौ भवतोऽपवर्गे गम्यमाने । अपवर्गः समाप्तिः । तिर्यक्कृत्य गतः । तिर्यक्कृत्वा गतः । तिर्यक्कारं गतः । समाप्य गत इत्यर्थः । अपवर्ग इति किम् ? तिर्यक्कृत्वा(४)काष्ठं गतः । तिर्यचीति शब्दानुकरणम्, न च प्रकृतिवदनुकरणेन भवितव्यम्, अनुक्रियमाणरूपविनाशप्रसङ्गात्—"एतदोश्", "अदसो मात्" इति ॥

---

**अस्यति**—कालवाचक द्वितीयान्त के उपपद होने पर क्रियाव्यवधायक अर्थ में वर्त्तमान 'अस्' तथा 'तृष्' धातुओं से णमुल् प्रत्यय होता है ।

**नाम्नि**—द्वितीयान्त नामम् शब्द के उपपद होने पर आङ्पूर्वक 'दिश्' धातु तथा 'ग्रह्' धातु से णमुल् प्रत्यय होता है ।

**अव्यये**—अव्यय के उपपद होने पर 'कृञ्' धातु से क्त्वा तथा णमुल् प्रत्यय होते हैं अयथाभिप्रेत अर्थ के गम्यमान होने पर ।

**तिर्यचि**—तिर्यक् शब्द के उपपद होने पर 'कृञ्' धातु से क्त्वा तथा णमुल् प्रत्यय होते हैं क्रिया की समाप्ति के गम्यमान होने पर ।

---

(१) अहरत्यस्येषून् इति—सर्वमहः इषूनत्यस्य क्षिप्त्वा गतः ।

(२) द्वितीयायामित्येव इति कुत्रचिदधिकमुपलभ्यते ।

(३) आचष्टे=लट्, मध्यमपुरुषः ।

(४) तिर्यक्कृत्वा काष्ठमिति-अनृजु कृत्वा, पार्श्वतः कृत्वेत्यर्थः ।

## स्वाङ्गे तस्प्रत्यये कृभ्वोः ॥ ६१ ॥

तस्प्रत्ययो यतः स्वाङ्गात्तदेवमुच्यते । तस्प्रत्यये स्वाङ्गवाचिन्युपपदे करोतेर्भवतेश्च धात्वोः क्त्वाणमुलौ प्रत्ययौ भवतः । यथासंख्यमत्र नेष्यते, अस्वरितत्वात् । मुखतः कृत्य गतः । मुखतः कृत्वा गतः । मुखतः कारंगतः । मुखतो भूय तिष्ठति । मुखतो भूत्वा तिष्ठति । मुखतोभावं तिष्ठति । पृष्ठतः कृत्य गतः । पृष्ठतः कृत्वा गतः । पृष्ठतः कारं गतः । पृष्ठतोभूय गतः । पृष्ठतो भूत्वा । पृष्ठतोभावम् । स्वाङ्ग इति किम् ? सर्वतः कृत्वा गतः । तस्ग्रहणं किम् ? मुखीकृत्य गतः, मुखीभूय गतः । प्रत्ययग्रहणं किम् ? मुखे तस्यतीति मुखतः, मुखतः कृत्वा गतः ॥

## नाधार्थप्रत्यये च्व्यर्थे ॥ ६२ ॥

नार्थो धार्थश्च प्रत्ययो यस्मात् स एवमुच्यते । नाधार्थप्रत्यये शब्दे च्व्यर्थ उपपदे कृभ्वोर्धात्वोः क्त्वाणमुलौ प्रत्ययौ भवतः । अनाना नाना कृत्वा गतः नानाकृत्य गतः, नानाकृत्वा गतः, नानाकारं गतः । विनाकृत्य गतः, विनाकृत्वा गतः, विनाकारं गतः । नानाभूय गतः, नानाभूत्वा गतः, नानाभावं गतः । विनाभूय गतः, विना भूत्वा गतः, विनाभावं गतः । द्विधाकृत्य गतः, द्विधाकृत्वा गतः, द्विधाकारं गतः । द्विधाभूय गतः, द्विधा भूत्वा गतः, द्विधाभावं गतः । द्वैधं कृत्य गतः, द्वैधं कृत्वा गतः, द्वैधंकारं गतः । द्वैधंभूय गतः, द्वैधं भूत्वा गतः, द्वैधंभावं गतः(१) । प्रत्ययग्रहणं किम् ? हिरुक्(२)कृत्वा, पृथक् कृत्वा । च्व्यर्थ इति किम ? नाना कृत्वा काष्ठानि गतः । धार्थमर्थग्रहणम् , ना पुनरेक एव "विनञ्भ्यां नानाञौ" इति ॥

## तूष्णीमि भुवः ॥ ६३ ॥

तूष्णींशब्द उपपदे भवतेर्धातोः क्त्वाणमुलौ प्रत्ययौ भवतः । तूष्णीं भूय, तूष्णीं भूत्वा, तूष्णींभावम् । भूग्रहणं कृञो निवृत्त्यर्थम् ॥

## अन्वच्यानुलोम्ये ॥ ६४ ॥

अन्वक्शब्द उपपदे भवतेर्धातोरानुलोम्ये क्त्वाणमुलौ भवतः । आनुलोम्यमनुलोमता, अनुकूलत्वम् परचित्तानुविधानम् । अन्वग्भूयास्ते, अन्वग्भूत्वाऽऽस्ते, अन्वग्भावमास्ते । आनुलोम्य इति किम् ? अन्वग्भूत्वा तिष्ठति(३) ॥

---

**स्वाङ्गे**—तस्प्रत्ययान्त स्वाङ्गवाचक शब्द के उपपद होने पर 'कृञ्' तथा 'भू' धातुओं से क्त्वा एवम् णमुल् प्रत्यय होते है ।

**नाधार्थ**—च्व्यर्थ ( अभूततद्भाव ) के प्रतिपादक 'ना' तथा तदर्थक एवम् 'धा' और तत्समानार्थक प्रत्ययों से युक्त शब्दों के उपपद होने पर 'कृञ्' तथा 'भू' धातुओ से क्त्वा तथा णमुल् प्रत्यय होते हैं ।

**तूष्णीमि**—'तूष्णीम्' शब्द के उपपद होने पर 'भू' धातु से क्त्वा तथा णमुल् प्रत्यय होते हैं ।

**अन्वचि**—'अन्वक्' शब्द के उपपद होने पर 'भू' धातु से आनुलोम्य अर्थ में क्त्वा तथा णमुल् प्रत्यय होते हैं ।

---

( १ ) द्वेधाकृत्य गतः, द्वेधा कृत्वा, द्वेधाकारम् । द्वेधाभूय, द्वेधा भूत्वा द्वेधाभावम् इत्युदाहरणानि न्यासेऽधिकानि ।

( २ ) हिरुक् कृत्वेति–हिरुक्पृथक्शब्दयोरसहार्थत्वात नार्थत्वमस्ति ।

( ३ ) अन्वग्भूत्वा तिष्ठति–अनुचरो भूत्वा तिष्ठतीत्यर्थः ।

## शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ॥ ६५ ॥

शकादिषूपपदेषु अस्त्यर्थेषु च धातुमात्रात्तुमुन् प्रत्ययो भवति। अक्रियार्थोप(१)पदार्थोऽयमारम्भः। शक्नोति भोक्तुम्। धृष्णोति भोक्तुम्। जानाति भोक्तुम्। ग्लायति भोक्तुम्। (२)घटते भोक्तुम्। आरभते भोक्तुम्। लभते भोक्तुम्। प्रक्रमते भोक्तुम्। (३)सहते भोक्तुम्। अर्हति भोक्तुम्। अस्त्यर्थेषु खल्वपि-अस्ति भोक्तुम्, भवति भोक्तुम्, विद्यते भोक्तुम् ॥

## पर्याप्तिवचनेष्वलमर्थेषु ॥ ६६ ॥

पर्याप्तिरन्यूनता। पर्याप्तिवचनेष्वलमर्थेषूपपदेषु धातोस्तुमुन् प्रत्ययो भवति। पर्याप्तो भोक्तुम्। अलं भोक्तुम्। भोक्तुं पारयति। पर्याप्तिवचनेष्विति किम्? अलं कृत्वा। अलमर्थेष्विति किम्? पर्याप्तं भुङ्क्ते। पूर्वसूत्रे शकिग्रहणमनलमर्थम्-शक्यमेव कर्त्तुमिति ॥

## कर्त्तरि कृत् ॥ ६७ ॥

कृत्संज्ञकाः प्रत्ययाः कर्तरि कारके भवन्ति। कृदुत्पत्तिवाक्यानामयं शेषः। तत्र येष्वर्थनिर्देशो नास्ति तत्रेदमुपतिष्ठते, अर्थाकाङ्क्षत्वात्, न ल्युनादिवाक्येषु, साक्षादर्थनिर्द्देशे सति तेषां निराकाङ्क्षत्वात्। कारकः। कर्त्ता। नन्दनः। ग्राही। पचः ॥

## भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ॥ ६८ ॥

भव्यादयः शब्दाः कर्त्तरि वा निपात्यन्ते। "तयोरेव कृत्यक्तखलर्थाः" इति भावकर्मणोः प्राप्तयोः कर्त्ता च वाच्यः पक्षे उच्यते। भवत्यसौ भव्यः, भव्यमनेनेति वा। गेयो माणवकः साम्नाम्, गेयानि माणवकेन सामानीति वा। प्रवचनीयो गुरुः स्वाध्यायस्य, प्रवचनीयो गुरुणा स्वाध्याय इति वा। उपस्थानीयोऽन्तेवासी गुरोः, उपस्थानीयः शिष्येण वा गुरुः। जायतेऽसौ जन्यः, जन्यमनेनेति वा। आप्लवतेऽसावाप्लाव्यः, आप्लाव्यमनेनेति वा। आपतत्यसावापात्यः, आपात्यमनेनेति वा ॥

## लः कर्मणि च भावे चाकर्मकेभ्यः ॥ ६९ ॥

ल इत्युत्सृष्टानुबन्धं सामान्यं गृह्यते। प्रथमाबहुवचनान्तं चतत्। लकाराः कर्मणि

---

**शकधृष**—'शक्', 'धृष', 'ज्ञा', 'ग्ला', 'घट', 'रभ', 'लभ', 'क्रमु', 'सह', 'अर्ह' तथा अस्त्यर्थक धातुओं के उपपद होने पर धातुमात्र से तुमुन् प्रत्यय होता है।

**पर्याप्ति**—पर्याप्तिवाचकअलमर्थक शब्दों के उपपद होने पर धातु से तुमुन् प्रत्यय होता है।

**कर्त्तरि**—कृत्संज्ञक प्रत्यय कर्त्ता कारक में होते हैं (अर्थात् इनका अर्थ कर्त्ता होता है)।

**भव्यगेय**—'भव्य', 'गेय' 'प्रवचनीय', 'उपस्थानीय', 'जन्य', 'आप्लाव्य' तथा 'आपात्य' शब्द विकल्प से कर्तृवाचकप्रत्ययान्त शब्दों के रूप में निपातित होते हैं।

**लः कर्मणि**—सकर्मक धातुओं से कर्म तथा कर्त्ता में और अकर्मक धातुओं से भाव तथा कर्त्ता में लकार होते हैं।

---

(१) अक्रियार्थेति-शक्नोति भोक्तुमित्यादौ क्रियार्थोपपदं न गम्यते, अपि त्वर्थान्तरम्। इह तावच्छक्नोति भोक्तुं सहते भोक्तुं जानाति भोक्तुमिति प्रावीण्यम्, ग्लायति भोक्तुमिति तदशक्तता, घटते भोक्तुमर्हति भोक्तुमिति तद्योग्यतामात्रम्, आरभते भोक्तुम्, प्रक्रमते भोक्तुमिति भुजेरेवाद्यावस्था न क्रियान्तरम्, लभते भोक्तुमिति अप्रत्याख्यानम्, अस्ति भोक्तुमित्यादौ सम्भवमात्रं गम्यते।

(२) घटयति इति न्यासपाठः।

(३) उत्सहते इति न्यासपाठः।

कारके भवन्ति कर्त्तरि च। अकर्मकेभ्यो धातुभ्यो भावे भवन्ति, पुनश्चकारात् कर्त्तरि च। गम्यते ग्रामो देवदत्तेन। गच्छति ग्रामं देवदत्तः। अकर्मकेभ्यः—आस्यते देवदत्तेन, आस्ते देवदत्तः। सकर्मकेभ्यो भावे न भवन्ति॥

## तयोरेव कृत्यक्तखलर्थाः॥ ७०॥

तयोरेव भावकर्मणोः कृत्यसंज्ञकाः क्तखलर्थाश्च प्रत्यया भवन्ति। एवकारः कर्तुरपकर्षणार्थः(१)। कृत्याः कर्मणि—कर्त्तव्यः कटो भवता, भोक्तव्य ओदनो भवता। भावे—आसितव्यं भवता, शयितव्यं भवता। क्तः कर्मणि—कृतः कटो भवता, भुक्त ओदनो भवता। भावे-आसितं भवता, शयितं भवता। खलर्थाः कर्मणि—ईषत्करः कटो भवता। सुकरः, दुस्करः। भावे-ईषदाढ्यंभवं भवता, स्वाढ्यम्भवं भवता। "भावे चाकर्मकेभ्यः" इत्यनुवृत्तेस्सकर्मकेभ्यो भावे न भवन्ति॥

## आदिकर्मणि क्तः कर्तरि च॥ ७१॥

आदिकर्मणि यः क्तो विहितः स कर्त्तरि भवति, चकाराद्यथाप्राप्तं भावकर्मणोः। आदिभूतः क्रियाक्षण आदिकर्म, तस्मिन्नादिकर्मणि भूतत्वेन विवक्षिते यः क्तो विहितस्तस्यायमर्थनिर्देशः। प्रकृतः कटं देवदत्तः, प्रकृतः कटो देवदत्तेन, प्रकृतं देवदत्तेन। प्रभुक्त ओदनं देवदत्तः, प्रभुक्त ओदनो देवदत्तेन, प्रभुक्तं देवदत्तेन॥

## गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च॥ ७२॥

गत्यर्थेभ्यो धातुभ्योऽकर्मकेभ्यः श्लिषादिभ्यश्च यः स कर्त्तरि भवति, चकाराद्यथाप्राप्तं च भावकर्मणोः। गतो देवदत्तो ग्रामम्। गतो देवदत्तेन ग्रामः। गतं देवदत्तेन। अकर्मकेभ्यः—ग्लानो भवान्, ग्लानं भवता, आसितो भवान्, आसितं भवता। श्लिष—उपश्लिष्टो गुरुं भवान्, उपश्लिष्टो गुरुर्भवता, उपश्लिष्टं भवता। शीङ्—उपशयितो गुरुं भवान्, उपशयितो गुरुर्भवता, उपशयितं भवता। स्था—उपस्थितो गुरुं भवान्, उपस्थितो गुरुर्भवता, उपस्थितं भवता। आस—उपासितो गुरुं भवान्, उपासितो गुरुर्भवता, उपासितं भवता। वस—अनूषितो गुरुं भवान्, अनूषितो गुरुर्भवता, अनूषितं भवता। जन—अनुजातो माणवको माणविकाम्, अनुजाता माणवकेन माणविका, अनुजातं माणवकेन। रुह—आरूढो वृक्षं भवान्, आरूढो वृक्षो भवता, आरूढं भवता। जीर्यति—अनुजीर्णो वृषलीं देवदत्तः, अनुजीर्णा वृषली देवदत्तेन, अनुजीर्णं देवदत्तेन। श्लिषादयस्सोपसर्गास्सकर्मका भवन्ति, तदर्थमेषामुपादानम्॥

## दाशगोघ्नौ संप्रदाने॥ ७३॥

दाशगोघ्नौ शब्दौ संप्रदाने कारके निपात्येते। 'दाशृ दाने', ततः पचाद्यच्। स कृत्संज्ञकत्वात् कर्त्तरि प्राप्तः, संप्रदाने निपात्यते। दाशन्ति तस्मै इति दाशः। आगताय तस्मै दातुं गां घ्नन्तीति गोघ्नोऽतिथिः। टगत्र निपात्यते। निपातनसामर्थ्यादेव

---

तयोरेव—भाव तथा कर्म में ही कृत्यसंज्ञक प्रत्यय, क्तप्रत्यय तथा खल् एवम् तदर्थक प्रत्यय होते हैं।

आदि—आदिकर्म में विहित क्त प्रत्यय कर्त्ता, भाव एवं कर्म में होता है।

गत्यर्थाकर्मक—गत्यर्थक, अकर्मक, 'श्लिष', 'शीङ्', 'स्था', 'आस्', 'वस', 'जन्', 'रुह', एवम् 'जॄ' धातुओं से भी कर्त्ता, भाव और कर्म में क्त प्रत्यय होता है।

दाश—सम्प्रदानार्थकप्रत्ययान्त 'दाश' तथा 'गोघ्न' शब्दों का निपातन होता है।

---

(१) अपकर्षणार्थः = निवृत्त्यर्थः।

गोघ्न ऋत्विगादिरुच्यते, न तु चाण्डालादिः। असत्यपि च गोहनने तस्य योग्यतया गोघ्न इत्यभिधीयते ॥

## भीमादयोऽपादाने ॥ ७४ ॥

भीमादयः शब्दा आपादाने निपात्यन्ते। उणादिप्रत्ययान्ता(१) एते। "श्याधूसूभ्यो मक्", "भियष्षुक्च" इत्येवमादयः। "ताभ्यामन्यत्रोणादयः" इति पर्युदासे प्राप्ते निपातनमारभ्यते। भीमः। भीष्मः। भयानकः। वरुः। चरुः। भूमिः। रजः। संस्कारः। संक्रन्दनः। प्रपतनः। समुद्रः। स्रुचः। स्रुक्। खलतिः ॥

## ताभ्यामन्यत्रोणादयः ॥ ७५ ॥

उणादयः शब्दास्ताभ्यामपादानसंप्रदानाभ्यामन्यत्र कारके भवन्ति। कृत्वात् कर्तर्येव प्राप्ताः कर्मादिषु कथ्यन्ते। ताभ्यामिति संप्रदानार्थ (२)प्रत्यवमर्शः। अन्यथा ह्यपादानमेव पर्युदस्येत, अनन्तरत्वात्। कृषितोऽसौ कृषिः। तनित इति तन्तुः। वृत्तमिति वर्त्म। चरितं चर्म ॥

## क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ॥ ७६ ॥

ध्रौव्यार्था अकर्मकाः, प्रत्यवसानार्था अभ्यवहारार्थाः इति स्वनिकाय(३) प्रसिद्धिः। ध्रौव्यगतिप्रत्यवसानार्थेभ्यो यः क्तो विहितः सोऽधिकरणे भवति, चकाराद्यथाप्राप्तं च। ध्रौव्यार्थेभ्यः कर्तृभावाधिकरणेषु, गत्यर्थेभ्यः कर्तृकर्मभावाधिकरणेषु, प्रत्यवसानार्थेभ्यः कर्मभावाधिकरणेषु। ध्रौव्यार्थेभ्यस्तावत्—आसितो देवदत्तः, आसितं तेन, इदमेषामासितम्। गत्यर्थेभ्यः—यातो देवदत्तो ग्रामम्, यातो देवदत्तेन ग्रामः, यातं देवदत्तेन, इदमेषां यातम्। प्रत्यवसानार्थेभ्यः—भुक्त ओदनो देवदत्तेन, देवदत्तेन भुक्तम्, इदमेषां भुक्तम्। कथं भुक्ता ब्राह्मणाः, पीता गाव इति? अकारो मत्वर्थीयः, भुक्तमेषामस्ति, पीतमेषामस्तीति ॥

## लस्य ॥ ७७ ॥

लस्येत्ययमधिकारः। अकार उच्चारणार्थः। लकारमात्रं स्थानित्वेनाधिक्रियते। यदित ऊर्ध्वमनुक्रमिष्यामो लस्येत्येवं तद्वेदितव्यम्। किं चेदं लस्येति? दश लकारा अनुबन्धविशिष्टा विहिता अर्थविशेषे कालविशेषे च, तेषां विशेषकराननुबन्धानुत्सृज्य यत्सामान्यं तद् गृह्यते। षट्टितः, चत्वारो ङितः। अक्षरसमाम्नायवदानुपूर्व्या कथ्यन्ते। लट्। लिट्। लुट्। लृट्। लेट्। लोट्। लङ्। लिङ्। लुङ्। लृङ्। इति। लकारमात्रस्य ग्रहणं कस्मान्न भवति—लुनाति चूडाल इति? धात्वधिकारोऽनुवर्त्तते, कर्त्रादयश्च विशेषकाः ॥

---

भीमादयः—अपादानार्थकप्रत्ययान्त 'भीम' आदि शब्दों का भी निपातन है।

ताभ्याम्—सम्प्रदान तथा अपादान अर्थों से भिन्न अर्थों में उणादि प्रत्यय होते हैं।

क्तोधिकरणे—ध्रौव्यार्थक, गत्यर्थक तथा भक्षणार्थक धातुओं से विहित क्त प्रत्यय अधिकरण मे एवम् भाव और कर्म में भी होता है।

लस्य—यहाँ से आगे 'लस्य' ( लकार के स्थान में ) का अधिकार है।

---

( १ ) उणादिप्रत्यया इति न्यासपाठः ( एष च बहुव्रीहिः )।

( २ ) सम्प्रदानप्रत्यवमर्शार्थम् इति न्यासपाठः।

( ३ ) स्वनिकायो वैयाकरणसंघः।

## तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् ॥७८॥

लस्य तिबादय आदेशा भवन्ति। तिप्सिप्मिपां पकारः स्वरार्थः। इटष्टकारः "इटोऽत्" इति विशेषणार्थः, तिबादिभिरादेशैस्तुल्यत्वान्न देशविध्यर्थः। महिङो ङकारस्तिङिति प्रत्याहारग्रहणार्थः। पचति, पचतः, पचन्ति। पचसि, पचथः, पचथ। पचामि, पचावः, पचामः। पचते, पचेते, पचन्ते। पचसे, पचेथे, पचध्वे। पचे, पचावहे, पचामहे। एवमन्येष्वपि लकारेषूदाहार्यम् ॥

## टित आत्मनेपदानां टेरे ॥ ७९ ॥

टितो लकारस्य स्थाने यान्यात्मनेपदानि तेषां टेरेकारादेशो भवति। तथा चैवोदाहृतम्। इह कस्मान्न भवति—पचमानो यजमानः? (१) प्रकृतैस्तिबादिभिरात्मनेपदानि विशेष्यन्ते ॥

## थासस्से ॥ ८० ॥

टित इत्येव। टितो लकारस्य यस्थासस्तस्य सेशब्द आदेशो भवति। पेचिषे। पक्तासे। पचयसे ॥

## लिटस्तझयोरेशिरेच् ॥ ८१ ॥

लिडादेशयोस्तझयोर्यथासंख्यमेश् इरेच् इत्येतावादेशौ भवतः। शकारः सर्वादेशार्थः। चकारः स्वरार्थः। पेचे, पेचाते, पेचिरे। लेभे, लेभाते, लेभिरे ॥

## परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ॥ ८२ ॥

लिट इत्येव। लिडादेशानां परस्मैपदसंज्ञकानां यथासंख्यं तिबादीनां णलादयो नवादेशा भवन्ति। लकारः स्वरार्थः। णकारो वृद्ध्यर्थः। पपाच, पेचतुः, पेचुः। पेचिथ, पपक्थ, पेचथुः, पेच। पपाच, पपच, पेचिव, पेचिम ॥

## विदो लटो वा ॥ ८३ ॥

परस्मैपदानामित्येव। "विद ज्ञाने" अस्माद्धातोः परेषां लडादेशानां परस्मैपदानां णलादयो नव विकल्पेनादेशा भवन्ति। वेद, विदतुः, विदुः। वेत्थ, विदथुः, विद। वेद, विद्व, विद्म। न च भवति—वेत्ति, वित्तः, विदन्ति; वेत्सि, वित्थः वित्थ; वेद्मि, विद्वः, विद्मः ॥

---

**तिप्-तस्**—लकार के स्थान में तिप्, तस्, झि; सिप्, थस्, थ; मिप्, वस्, मस्; त, आताम्, झ; थास्, आथाम्, ध्वम्; तथा इट्, वहि, महिङ् आदेश होते हैं।

**टितः**—टित् लकारों (लट्, लिट्, लुट्, लृट्, लेट्, लोट्) के स्थान में आत्मनेपदी लकारादेशों के 'टि' को एकारादेश हो जाता है।

**थासस्से**—टित्-लकार-स्थानीय थास् आदेश को 'से' आदेश हो जाता है।

**लिटः**—लिट्-लकार-स्थानीय 'त' तथा 'अ' को क्रमशः एश् तथा इरेच् आदेश हो जाते हैं।

**परस्मै**—लिट् के स्थान में विहित परस्मैपदी आदेशों को क्रमशः णल्, अतुस्, उस्; थल्, अथुस्, अ; णल्, व तथा म आदेश हो जाते हैं।

**विदो**—'विद ज्ञाने' धातु के परस्मैपदी लडादेशों के स्थान में उक्त आदेश विकल्प से होते हैं।

---

(१) प्रकृतैरिति—प्रकृतानां तिबादीनां मध्ये यान्यात्मनेपदानीत्येवमिहात्मनेपदानि विशेष्यन्ते।

## ब्रुवः पञ्चानामादित आहो ब्रुवः ॥ ८४ ॥

परस्मैपदानामिति, लटो वेति च वर्त्तते। ब्रुवः परस्य लटः परस्मैपदानां पञ्चानामादिभूतानां पञ्चैव णलादय आदेशा वा भवन्ति, तत्सन्नियोगेन च ब्रुव आहशब्द आदेशो भवति। आह, आहतुः, आहुः। आत्थ, आहथुः। न च भवति–ब्रवीति, ब्रूतः, ब्रुवन्ति; ब्रवीषि, ब्रूथः इति। पञ्चानामिति किम्? ब्रूथ; ब्रवीमि, ब्रूवः, ब्रूमः। आदित इति किम्? परेषां मा भूत्। ब्रुव इति पुनर्वचनं स्थान्यर्थम्, परस्मैपदानामेव हि स्यात्॥

## लोटो लङ्वत्॥ ८५ ॥

अतिदेशोऽयम्। लोटो लङ्वत् कार्यं भवति, ताम्ादयस्सलोपश्च। पचताम्। पचतम्, पचत। पचाव, पचाम। अडाटौ कस्मान्न भवतः, तथा झेर्जुसादेशो "लङः शाकटायनस्यैव" इति—वान्तु, यान्तु? "विदो लटो वा" इत्यतो वाग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा भविष्यति॥

## एरुः ॥ ८६ ॥

लोट इत्येव। लोडादेशानामिकारस्य उकारादेशो भवति। पचतु। पचन्तु। ॐहिन्योरुत्वप्रतिषेधो वक्तव्यःॐ। न वोच्चारणसामर्थ्यात्। अथवा वेति वर्त्तते, सा च व्यवस्थितविभाषा॥

## सेर्ह्यपिच्च॥ ८७ ॥

लोट इत्येव। लोडादेशस्य सेर्हि इत्ययमादेशो भवति, अपिच्च भवति। स्थानिवद्भावात् पित्वं प्राप्तं प्रतिषिद्ध्यते। लुनीहि। पुनीहि। राध्नुहि। तक्ष्णुहि॥

## वा छन्दसि॥ ८८ ॥

अपित्वं विकल्प्यते। लादेशश्छन्दसि विषये हिशब्दो वाऽपिद्भवति। युयोध्यस्मज्जुहुराणमेनः। प्रीणाहि। प्रीणीहि(१)॥

## मेर्निः ॥ ८९ ॥

लोट इत्येव। लोडादेशस्य मेर्निरादेशो भवति। उत्वलोपयोरपवादः। पचानि। पठानि॥

---

**ब्रुवः**—'ब्रू' धातु के परस्मैपदी प्रथम पाँच लट्-स्थानीय आदेशों के स्थान में उक्त प्रथम पाँच आदेश विकल्प से होते हैं और आदेश के साथ-साथ 'ब्रू' धातु को ब्रुव तथा आह आदेश भी विकल्प से हो जाते हैं।

**लोटो**—लोट् लकार के स्थान में लङ् लकार की तरह कार्य होते हैं—तस् आदि के स्थान में ताम् आदि आदेश तथा ङित्त्वनिमित्तक स् का लोप हो जाता है।

**एरुः**—लोट् के आदेश के इकार को उकारादेश हो जाता है।

**हिन्योः**—लोडादेश हि तथा नि के इकारों को उकारादेश का प्रतिषेध समझना चाहिए।

**सेर्ह्यपिच्च**—लोडादेश सि के स्थान में हि आदेश होता है और यह हि अपित भी हो जाता है।

**वा छन्दसि**—वेद में लोडादेशस्थानीय हि विकल्प से अपित् होता है।

**मेर्निः**—लोडादेश मि के स्थान में नि आदेश हो जाता है।

---

(१) युयुधि। जुहोधि, जुहुधि इति लिखितप्राचीनपुस्तकेऽधिकम्।

## आमेतः ॥ ९० ॥

लोट इत्येव । लोट्संबन्धिन एकारस्य आमित्ययमादेशो भवति । पचताम्, पचेताम्, पचन्ताम् ॥

## सवाभ्यां वामौ ॥ ९१ ॥

लोट इत्येव । सकारवकाराभ्यामुत्तरस्य लोट्संबन्धिन एकारस्य यथासंख्यं व अम् इत्येतावादेशौ भवतः । आमोऽपवादः । पचस्व । पचध्वम् ॥

## आडुत्तमस्य पिच्च ॥ ९२ ॥

लोट इत्येव । लोट्संबन्धिन उत्तमपुरुषस्याडागमो भवति स चोत्तमपुरुषः पिद्भवति । करवाणि, करवाव, करवाम । करवै, करवावहै, करवामहै ॥

## एत ऐ ॥ ९३ ॥

लोडुत्तमस्येति वर्त्तते । लोडुत्तमसंबन्धिन एकारस्य ऐकारादेशो भवति । आमोऽपवादः । करवै, करवावहै, करवामहै । इह कस्मान्न भवति—पचावेदम्, यजावेदम् ? बहिरङ्गलक्षणत्वाद् गुणस्य ॥

## लेटोऽडाटौ ॥ ९४ ॥

लेटोऽडाटावागमौ भवतः पर्यायेण । जोषिषत् । तारिषत् । मन्दिषत् । पताति विद्युत् । उदधिं च्यावयाति ॥

## आत ऐ ॥ ९५ ॥

लेट इत्येव । लेट्सम्बन्धिन आकारस्य ऐकारादेशो भवति, प्रथमपुरुषमध्यमपुरुषात्मनेपदद्विवचनयोः । मन्त्रयैते । मन्त्रयैथे । करवैते । करवैथे । आटः कस्मान्न भवति ? विधानसामर्थ्यात् ॥

## वैतोऽन्यत्र ॥ ९६ ॥

लेट इत्येव । लेट्सम्बन्धिन एकारस्य वा ऐकारादेशो भवति । अन्यत्रेत्यनन्तरो विधिरपेक्ष्यते—"आत ऐ" इत्येतद्विषयं वर्जयित्वा एत ऐ भवति । सप्ताहानि शयै । अहमेव पशूनामीशै । मदग्रा एव वो ग्रहा गृह्यान्तै । मद्देवतान्येव वः पात्राण्युच्यान्तै । न च भवति-यत्र क्व च ते मनो दक्षं दधस उत्तरम् । अन्यत्रेति किम् ? मंत्रयैते, मन्वयैथे ॥

---

**आमेतः**—लोट्-सम्बन्धी एकार के स्थान में आम् आदेश हो जाता है ।

**सवाभ्याम्**—सकार तथा वकार से उत्तरवर्त्ती लोट्सम्बन्धी एकार को क्रमशः व तथा अम् आदेश हो जाता है ।

**आडुत्तमस्य**—लोट् के उत्तम पुरुष को आट् का आगम होता है और वह उत्तम पुरुष पित् हो जाता है ।

**एत ऐ**—लोट् के उत्तम पुरुष के एकार को ऐकार आदेश हो जाता है ।

**लेटो**—लेट् लकार को विकल्प से अट् तथा आट् का आगम हो जाता है ।

**आत ऐ**—प्रथम, मध्यम तथा उत्तम पुरुषों के आत्मनेपदीय द्विवचन के लेट्-सम्बन्धी आकार को ऐकारादेश हो जाता है ।

**वैतो**—'आत ऐ' सूत्र के क्षेत्र को छोड़कर अन्यत्र लेट्सम्बन्धी आकार को विकल्प से ऐकारादेश होता है ।

## इतश्च लोपः परस्मैपदेषु ॥ ९७ ॥

लेट इत्येव । लेट्संबन्धिन इकारस्य परस्मैपदविषयस्य लोपो भवति । वानुवृत्तेः पक्षे श्रवणमपि भवति । जोषिषत् । तारिषत् । मन्दिषत् । न च भवति–पताति विद्युत्, उदधिं च्यावयाति । परस्मैपदग्रहणमिड्वहिमहिङां मा भूत् ॥

## स उत्तमस्य ॥ ९८ ॥

लेट इति, वेति च वर्त्तते । लेट्संबन्धिन उत्तमपुरुषस्य सकारस्य वा लोपो भवति । करवाव । करवाम । न च भवति–करवावः, करवामः । उत्तमग्रहणं पुरुषान्तरे मा भूत् ॥

## नित्यं ङितः ॥ ९९ ॥

लेट इति निवृत्तम् । ङितो लकारस्य य उत्तमस्तस्य नित्यं सकारस्य लोपो भवति । अपचाव, अपचाम । नित्यग्रहणं विकल्पनिवृत्त्यर्थम् ॥

## इतश्च ॥ १०० ॥

ङित इत्येव । ङिल्लकारसंबन्धिन इकारस्य नित्यं लोपो भवति । अपचत् । अपाक्षीत् । परस्मैपदेष्वित्येव—अपचावहि, अपचामहि ॥

## तस्थस्थमिपां तांतंतामः ॥ १०१ ॥

ङित इत्येव । ङिल्लकारसंबन्धिनां चतुर्णां तसादीनां यथासंख्यं तामादय आदेशा भवन्ति । अपचताम्, अपचतम्, अपचत । अपचम् । अपाक्ताम् । अपाक्तम्, अपाक्त । अपाक्षम् ॥

## लिङस्सीयुट् ॥ १०२ ॥

लिङादेशानां सीयुडागमो भवति । टकारो देशविध्यर्थः । उकार उच्चारणार्थः । पचेत, पचेयाताम्, पचेरन् । पक्षीष्ट, पक्षीयास्ताम्, पक्षीरन् ॥

## यासुट् परस्मैपदेषूदात्तो ङिच्च ॥ १०३ ॥

लिङ इत्येव । परस्मैपदविषयस्य लिङो यासुडागमो भवति, स चोदात्तो भवति, ङिच्च । सीयुटोऽपवादः । आगमत्वादनुदात्तत्वे प्राप्ते उदात्तवचनम् । ङित्वं तु लिङ एव विधीयते, तत्र तत्कार्याणां संभवात्, नागमस्य(१) । कुर्यात्, कुर्याताम्, कुर्युः । स्थानिवद्भावादेव लिङादेशस्य ङित्वे सिद्धे यासुटो ङिद्वचनं ज्ञापनार्थम्—लकाराश्रयङित्त्वमादेशानां न भवतीति—अचिनवम्, अकरवम् ॥

---

**इतश्च**—लेट्-सम्बन्धी परस्मैपदी इकार का विकल्प से लोप हो जाता है ।

**स उत्तमस्य**—लेट्-सम्बन्धी उत्तम पुरुष के सकार का भी विकल्प से लोप हो जाता है ।

**नित्यम्**—ङित् लकारों ( लङ्, लिङ्, लुङ्, लङ् ) के उत्तम पुरुष के सकार का नित्य लोप हो जाता है ।

**इतश्च**—ङित्-लकार-सम्बन्धी इकार का भी नित्य लोप हो जाता है ।

**तस्थस्थमिपाम्**—ङित्-लकार-सम्बन्धी तस्, थस्, थ एवम् मिप् के स्थान में क्रमशः ताम्, तम्, त एवम् अम् आदेश हो जाते है ।

**लिङः**—लिङादेशों को आत्मनेपद में सीयुट् का आगम हो जाता है ।

**यासुट्**—परस्मैपद में लिङादेशों को यासुट् का आगम हो जाता है और वह ङित् भी हो जाता है ।

---

( १ ) ङित्त्वं तु लिङ एव विधीयते, नागमस्य, तत्र ङित्कार्याणामसम्भवात् इति न्यासपाठः ।

## किदाशिषि ॥ १०४ ॥

आशिषि यो लिङ् तस्य यासुडागामो भवति, स चोदात्तः किद्वद्भवति । प्रत्ययस्यैवेदं कित्त्वं नागमस्य, प्रयोजनाभावात् । ङित्वे प्राप्ते कित्त्वं विधीयते । गुणवृद्धिप्रतिषेधस्तुल्यः, संप्रसारणे जागर्तेर्गुणे च विशेषः । इष्यात्, इष्यास्ताम्, इष्यासुः(१); जागर्यात्, जागर्यास्ताम्, जागर्यासुः । आशिषीति किम् ? वच्यात्, जागृयात् ॥

## झस्य रन् ॥ १०५ ॥

लिङ इत्येव । झस्य लिङादेशस्य रन्नित्ययमादेशो भवति । झोऽन्तापवादः । पचेरन् । यजेरन् । कृषीरन् ॥

## इटोऽत् ॥ १०६ ॥

लिङादेशस्य इटोऽदित्ययमादेशो भवति । पचेय । यजेय । कृषीय । हृषीय । तकारस्येत्संज्ञाप्रतिषेधः प्राप्नोति—"न विभक्तौ तुस्माः" इति । नैवायमादेशावयवस्तकारः, किं तर्हि मुखसुखार्थ उच्चार्यते । आगमस्येटो ग्रहणं न भवति-अर्थवद्ग्रहणे नानर्थकस्येति ॥

## सुट् तिथोः ॥ १०७ ॥

लिङ इत्येव । लिङ्संबन्धिनोस्तकारथकारयोः सुडागमो भवति । तकारथकारावागमिनौ, लिङ् तद्विशेषणम् । सीयुटस्तु लिङेवागमी, तेन भिन्नविषयत्वात्सुटा बाधनं न भवति । तकारे इकार उच्चारणार्थः । कृषीष्ट, कृषीयास्ताम्(२) । कृषीष्ठाः, कृषीयास्थाम् ॥

## झेर्जुस् ॥ १०८ ॥

लिङ इत्येव । लिङादेशस्य झेर्जुस् आदेशो भवति । झोऽन्तापवादः । पचेयुः । यजेयुः ॥

## सिजभ्यस्तविदिभ्यश्च ॥ १०९ ॥

अलिङर्थ आरम्भः । सिचः परस्य अभ्यस्तसंज्ञकेभ्यो वेत्तेश्चोत्तरस्य झेर्जुस् आदेशो भवति । अभ्यस्तविदिग्रहणमसिजर्थम् । ङित इति चानुवर्त्तते । सिचस्तावत्-अकार्षुः, अहार्षुः । अभ्यस्तात्-अबिभयुः, अजिह्युः, अजागरुः । विदेः-अविदुः ॥

## आतः ॥ ११० ॥

सिज्ग्रहणमनुवर्त्तते । सिच आकारान्ताच्च परस्य झेर्जुसादेशो भवति । कथमा-

---

**किदाशिषि**—आशीर्वादार्थक लिङ् के आदेशों को यासुट् का आगम हो जाता है और वह कित् भी हो जाता है ।

**झस्य रन्**—लिङादेश झ के स्थान में रन् आदेश हो जाता है ।

**इटोऽत्**—लिङादेश इट् के स्थान में अत् आदेश हो जाता है ।

**सुट्**—लिङ्सम्बन्धी तकार एवम् थकार को सुट् का आगम हो जाता है ।

**झेर्जुस्**—लिङादेश झि को जुस् आदेश हो जाता है ।

**सिजभ्यस्त**—सिच्, अभ्यस्तसंज्ञक तथा 'विद्' धातु से उत्तरवर्त्ती झि के स्थान में जुस् आदेश हो जाता है ।

**आतः**—सिच् तथा आकारान्त धातुओं से परवर्त्ती झि के स्थान में जुस् आदेश हो जाता है ।

---

(१) उच्यात्, उच्यास्ताम्, उच्यासुः इति न्यासेऽधिकम् ।

(२) कृषीरन् इत्यधिकमुदाहरणं मुद्रितमूलपुस्तकेषूपलभ्यमानमपि प्रयोजनाभावान्निष्कासितम् ।

भ्यामानन्तर्यम् ? सिज्लुकि कृते प्रत्ययलक्षणेन सिचोऽनन्तरः, श्रुत्या चाकारान्तादिति । अदुः । अधुः । अस्थुः । तकारो मुखसुखार्थः । पूर्वेणैव सिद्धे नियमार्थं वचनम्–आत एव सिज्लुगन्तान्नान्यस्मादिति । अभूवन् । प्रत्ययलक्षणेन जुस्प्राप्तः प्रतिषिद्ध्यते, तुल्यजातीयापेक्षत्वान्नियमस्य । श्रूयमाणे हि सिचि भवत्येव–अकार्षुः, अहार्षुः ॥

## लङः शाकटायनस्यैव ॥ १११ ॥

आत इत्येव । आकारान्तादुत्तरस्य लङादेशस्य झेर्जुसादेशो भवति शाकटायनस्याचार्यस्य मतेन । अयुः । अवुः । अन्येषां मते–अयान्(१) । ननु ङित इत्यनुवर्त्तते, तत्र लङेवाकारान्तादनन्तरो ङित्सम्भवति नान्यः, तत्किं लङ्ग्रहणेन ? एवं तर्हि लङेव यो लङ् विहितस्तस्य यथा स्यात्, लङ्वद्भावेन यस्तस्य मा भूत्–"लोटो लङ्वत्" इति–यान्तु, वान्तु । "सिजभ्यस्तविदिभ्यश्च" इत्ययमपि झेर्जुस् लोटो न भवति—बिभ्यतु, जाग्रतु, विदन्तु । जुस्भावमात्रं हि मुख्येन लङा विशेष्यते । एवकार उत्तरार्थः ॥

## द्विषश्च ॥ ११२ ॥

लङः शाकटायनस्यैवेत्येव । द्विषः परस्य लङादेशस्य झेर्जुसादेशो भवति शाकटायनस्याचार्यस्य मतेन । अद्विषुः । अन्येषां मते–अद्विषन् ॥

## तिङ्शित् सार्वधातुकम् ॥ ११३ ॥

तिङ शितश्च प्रत्ययाः सार्वधातुकसंज्ञा भवन्ति । नयति । स्वपिति । रोदिति । पचमानः । यजमानः । सार्वधातुकप्रदेशाः—"सार्वधातुके यक्" इत्येवमादयः ॥

## आर्द्धधातुकं शेषः ॥ ११४ ॥

तिङः शितश्च वर्जयित्वाऽन्यः प्रत्ययः शेषो धातुसंशब्दनेन विहित आर्द्धधातुकसंज्ञो भवति । लविता । लवितुम् । लवितव्यम् । धातोः इत्येव—वृक्षत्वम्, वृक्षताऽस्ति । लूभ्याम्, लूभिः । जुगुप्सते ॥

## लिट् च ॥ ११५ ॥

लिडादेशस्तिङार्द्धधातुकसंज्ञो भवति । सार्वधातुकसंज्ञाया अपवादः । पेचिथ । शेकिथ । जग्ले । मम्ले । ननु चैकसंज्ञाधिकारादन्यत्र समावेशो भवति ? सत्यम् । इह त्वेवकारोऽनुवर्त्तते, स नियमं करिष्यति ॥

## लिङाशिषि ॥ ११६ ॥

आशिषि विषये यो लिङ् स आर्द्धधातुकसंज्ञो भवति । सार्वधातुकसंज्ञाया अपवादः ।

---

**लङः**—आकारान्तोत्तरवर्त्ती लङादेश झि के स्थान में जुस् आदेश केवल शाकटायन आचार्य के मत में ही होता है ।

**द्विषश्च**—'द्विष' धातु से विहित लङादेश झि के स्थान में भी शाकटायन के मत में ही जुस् आदेश होता है ।

**तिङ्शित्**—तिङ् तथा शित प्रत्ययों की 'सार्वधातुक' संज्ञा होती है ।

**आर्द्धधातुकम्**—तिङ् तथा शित से भिन्न धात्वधिकारोक्त प्रत्ययों की 'आर्धधातुक' संज्ञा होती है ।

**लिट्**—लिडादेश तिङ् की भी 'आर्धधातुक' संज्ञा हो जाती है ।

**लिङाशिषि**—आशीरर्थक लिङ् की भी 'आर्धधातुक' संज्ञा होती है ।

---

(१) यद्यपि बहुषु मुद्रितमूलपुस्तकेषु अयादिति एकवचनान्तरूपमुपलभ्यते तथाऽपि तस्य प्रयोजनाभावात् तत् परिवर्त्तितम् ।

समावेशश्चैवकारानुवृत्तेर्न भवति। लविषीष्ट(१), पविषीष्ट। आशिषीति किम्? लुनीयात्, पुनीयात्॥

## छन्दस्युभयथा॥ ११७॥

छन्दसि विषये उभयथा भवति, सार्वधातुकमार्द्धधातुकं च। किं लिङेवानन्तरः संबद्ध्यते? नैतदस्ति, सर्वमेव प्रकरणमपेक्ष्यैतदुच्यते–तिङ्शिदादि छन्दस्युभयथा भवति। वर्धन्तु त्वा सुष्टुतयः—आर्धधातुकत्वाण्णिलोपः, वर्धयन्त्विति प्राप्ते। शेषं च सार्वधातुकम्–स्वस्तये(२) नावमिवारुहेम। क्तिनः सार्वधातुकत्वादस्तेर्भूभावो न भवति। लिट् सार्वधातुकम्–ससृवांसो विशृण्विरे, सोममिन्द्राय सुन्विरे। लिङ् उभयथा भवति–उपस्थेयाम शरणं बृहन्तम्। सार्वधातुकत्वाल्लिङः सलोपः, आर्द्धधातुकत्वादेत्वम्। "व्यत्ययो बहुलम्" इत्यस्यैवायं प्रपञ्चः॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ तृतीयाध्यायस्य
चतुर्थः पादः॥ ३। ४॥ समाप्तश्च तृतीयोऽध्यायः॥



---

छन्दस्युभयथा—परन्तु वेद में तिङ्, शित् आदि प्रत्ययों की यथायोग्य 'सार्वधातुक' एवम् 'आर्धधातुक' दोनों ही संज्ञाएँ होती हैं।

तृतीय अध्याय का चतुर्थ पाद समाप्त हुआ।

तृतीयाध्याय समाप्त हुआ।



---

(१) अत्र लविषीष्ठा इत्युदाहरणमधिकम्।

(२) स्वस्तय इति–अस् भुवि इत्यस्मात् स्त्रियां क्तिन् इति क्तिन्। तस्य च सार्वधातुकत्वात् अस्तेर्भूभावो न भवति। अत्र लिङः सार्वधातुकत्वात् इति सर्वेषु मुद्रितमूलपुस्तकेषु प्राप्तः पाठोऽपपाठः।

# अथ चतुर्थाध्यायस्य प्रथमः पादः ॥

## ङ्याप्प्रातिपदिकात् ॥ १ ॥

अधिकारोऽयम्। यदित ऊर्ध्वमनुक्रमिष्याम आपञ्चमाध्यायपरिसमाप्तेङ्याप्प्रातिपदिकादित्येवं तद्वेदितव्यम्। स्वादिषु कप्पर्यन्तेषु प्रकृतिरधिक्रियते। ङीब्ङीष्ङीनां सामान्येन ग्रहणं ङीति, टाब्डाप्चापामाबिति। प्रातिपदिकमुक्तमर्थवत्कृत्तद्धितसमासाश्चेति। तेषां समाहारनिर्देशो ङ्याप्प्रातिपदिकादिति। यद्यपि च प्रत्ययपरत्वेन पारिशेष्यादियमेव प्रकृतिर्लभ्यते, तथापि वृद्धा(१)वृद्धावर्णस्वरद्वयजलक्षणप्रत्ययविधौ तत्संप्रत्ययार्थं ङ्याप्प्रातिपदिकग्रहणं कर्त्तव्यम्, इतरथा हि समर्थविशेषणमेतत् स्यात्। अथ ङ्याब्ग्रहणं, किम्, न प्रातिपदिकग्रहणेन लिङ्गविशिष्टस्यापि ग्रहणं भवतीत्येव सिद्धम्? नैतदस्ति। स्वरूपविधिविषये परिभाषेयं प्रातिपदिकस्वरूपग्रहणे सति लिङ्गविशिष्टग्रहणं भवतीति। तथाच "युवा खलतिपलितवलिनजरतीभिः" इति ज्ञापकमस्यास्तादृशमेव। किञ्च तदन्तात्तद्धितविधानार्थं ङ्याब्ग्रहणम्—कालितरा, हरिणितरा, खट्वातरा, मालातरा इति। विप्रतिषेधाद्धि तद्धितबलीयस्त्वं स्यात्॥

## स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङसोसाम्ङ्योस्सुप् ॥ २ ॥

ङ्याप्प्रातिपदिकादित्यधिकृतम्। ङ्याप्प्रातिपदिकात् स्वादयः प्रत्यया भवन्ति। उकारादयोऽनुबन्धा यथायोगमुच्चारणविशेषणार्थाः। (२)औटष्टकारः "सुट्" इति प्रत्याहारग्रहणार्थः। पकारः "सुप्" इति प्रत्याहारार्थः। संख्याकर्मादयश्च स्वादीनामर्थाः शास्त्रान्तरे विहितास्तेन सहास्यैकवाक्यता। ङ्यन्तात्तावत्—कुमारी, गौरी, शार्ङ्गरवी। ङीब्ङीष्ङीनां क्रमेणोदाहरणम्—कुमारी, कुमार्यौ, कुमार्यः; कुमारीम्, कुमार्यौ, कुमारीः; कुमार्या, कुमारीभ्याम्, कुमारीभिः; कुमार्यै, कुमारीभ्याम्, कुमारीभ्यः; कुमार्याः, कुमारीभ्याम्, कुमारीभ्यः; कुमार्याः, कुमार्योः, कुमारीणाम्; कुमार्याम्, कुमार्योः, कुमारीषु। एवं गौरी शार्ङ्गरवी चोदाहार्ये। आपः खल्वपि—खट्वा, बहुराजा, कारीषगन्ध्या। टाब्डाप्चापां क्रमेणोदाहरणम्—खट्वा, खट्वे, खट्वाः; खट्वाम्, खट्वे, खट्वाः; खट्वया, खट्वाभ्याम्, खट्वाभिः; खट्वायै, खट्वाभ्याम्, खट्वाभ्यः; खट्वायाः, खट्वाभ्याम्, खट्वाभ्यः; खट्वायाः, खट्वयोः, खट्वानाम्; खट्वायाम्, खट्वयोः, खट्वासु। एवं बहुराजाकारीषगन्ध्ये चोहादार्ये। एवं प्रातिपदिकात्—दृषद्, दृषदौ, दृषदः; दृषदम्,

---

**ङ्याप्**—यहाँ से पञ्चमाध्यायसमाप्तिपर्यन्त 'ङ्याप्प्रातिपदिकात्' का अधिकार समझना चाहिए (अर्थात् ङ्यन्त, आबन्त तथा प्रातिपदिक को प्रकृति समझना चाहिए)।

**स्वौजसमौट्**—ङ्यन्त, आबन्त तथा प्रातिपदिक से (१) सु, औ, जस्; (२) अम्, औट्, शस्; (३) टा, भ्याम्, भिस्; (४) ङे, भ्याम्, भ्यस्; (५) ङसि, भ्याम्, भ्यस्; (६) ङस्, ओस्, आम्; (७) ङि, ओस्, सुप् प्रत्यय होते हैं।

---

(१) वृद्धावृद्धेत्यादि—वृद्धादयो लक्षणं चिह्नं कारणं वा यस्य प्रत्ययविधेः स तथोक्तः। प्रत्ययविधिशब्दः प्रत्येकमभिसंबध्यते। तत्संप्रत्ययार्थम्—ङ्याप्प्रातिपदिकसम्प्रत्यार्थम्। एतदुक्तं भवति—वृद्धादीनि ङ्याप्प्रातिपदिकविशेषणानीत्येव सम्प्रत्ययो यथा स्यादित्येवमर्थं ङ्याप्प्रातिपदिकग्रहणं कर्त्तव्यम्।

(२) न्याससम्मतोऽयं पाठः पदमञ्जरीसम्मतोऽपि।

दृषदौ, दृषदः; दृषदा, दृषद्भ्याम्, दृषद्भिः; दृषदे, दृषद्भ्याम्, दृषद्भ्यः; दृषदः, दृषद्भ्याम्, दृषद्भ्यः; दृषदः, दृषदोः, दृषदाम्; दृषदि, दृषदोः, दृषत्सु ॥

## स्त्रियाम् ॥ ३ ॥

अधिकारोऽयम्। यदित ऊर्ध्वमनुक्रमिष्यामः स्त्रियामित्येवं तद्वेदितव्यम्। ङ्याप्प्रातिपदिकादिति सर्वाऽधिकारेऽपि प्रातिपदिकमात्रमत्र प्रकरणे संबध्यते, ङ्यापोरनेनैव विधानात्। स्त्रियामित्युच्यते, केयं स्त्री नाम? सामान्यविशेषाः (१)स्त्रीत्वादयो गोत्वादय इव (२)बहुप्रकारव्यक्तयः। क्वचिदाश्रयविशेषाभावादुपदेशव्यङ्ग्या एव भवन्ति, यथा ब्राह्मणत्वादयः। स्त्रीत्वं च प्रत्ययार्थः प्रकृत्यर्थविशेषणं चेत्युभयथापि युज्यते। स्त्रियामभिधेयायां स्त्रियां वा यत्प्रातिपदिकं वर्त्तत इति, वक्ष्यति–"अजाद्यतष्टाप्"—अजा, देवदत्ता। स्त्रियामिति किम्? अजः, देवदत्तः ॥

## अजाद्यतष्टाप् ॥ ४ ॥

अजादिभ्यः प्रातिपदिकेभ्योऽकारान्ताच्च प्रतिपदिकात् स्त्रियां टाप् प्रत्ययो भवति। पकारः सामान्यग्रहणार्थः। टकारः सामान्यग्रहणाविघातार्थः। अजा। एडका। कोकिला। चटका। अश्वा। खट्वा। देवदत्ता। तपरकरणं तत्कालार्थम्। शुभंयाः। कीलालपाः ब्राह्मणी। "हल्ङ्याब्भ्यः" इति सुलोपः स्यात्। अजादिग्रहणं तु क्वचिज्जातिलक्षणे ङीषि प्राप्ते, क्वचित्त पुंयोगलक्षणे, क्वचित्तु पुष्पफलोत्तरपदलक्षणे, क्वचित्तु वयोलक्षणे ङीपि, क्वचिट्टिल्लक्षणे। हलन्तानां त्वप्राप्त एव कस्मिंश्चिदाब् विधीयते। *शूद्रा चामहत्पूर्वा जातिः* इति पठ्यते। तस्यायमर्थः–शूद्रशब्दष्टापमुत्पादयति जातिश्चेद्भवति। शूद्रा। पुंयोगे ङीषेव भवितव्यम्–शूद्रस्य भार्या शूद्री। महत्पूर्वस्य प्रतिषेधः–महाशूद्री। महाशूद्रशब्दो ह्याभीरजातिवचनः, तत्र तदन्तविधिना टाप् प्राप्तः प्रतिषिध्यते। ग्रहणवता(३) प्रातिपदिकेन तदन्तविधिर्नेति कथं तदन्तविधिः? एतदेव ज्ञापकं भवति—अस्मिन् प्रकरणे तदन्तविधिरिति, तेन अतिधीवरी, अतिपीवरी, अतिभवती, अतिमहती इति भवति। अजा, एडका, चटका, अश्वा, मूषिकेति जातिः। बाला, होडा, पाका, वत्सा, मन्दा, विलातेति वयः। पूर्वापहाणा, अपरापहाणा। टित्, निपातनाण्णत्वम्। *संभस्त्राजिनशणपिण्डेभ्यः फलात्* संफला। भस्त्रफला। अजिनफला। शणफला। पिण्डफला। त्रिफला—द्विगौ। बहुव्रीहौ—त्रिफली संहतिः। (४)*सत्प्राक्काण्डप्रान्तशतैकेभ्यः

---

स्त्रियाम्—यहाँ से 'स्त्रियाम्' का अधिकार है।

अजाद्यतः—अजादि एवम् अदन्त प्रातिपदिक से स्त्रीत्वविवक्षा में टाप् प्रत्यय होता है।

शूद्रा—जातिवाचक अमहत्पूर्वक शूद्र शब्द से भी टाप् होता है।

संभस्त्रा—सम्, भस्त्र, अजिन, शण तथा पिण्ड शब्दों से परवर्त्ती फल शब्द से टाप् प्रत्यय होता है।

सत्—सत्, प्राक्, काण्ड, प्रान्त, शत तथा एक शब्दों से परवर्त्ती पुष्प शब्द से टाप् प्रत्यय होता है।

---

(१) सामान्यविशेषा इति—समानानां भावः सामान्यम्, तुल्यजातीयपदार्थसाधारणत्वात्। विशिष्यन्ते—परस्परं विजातीयेभ्यश्च व्यावर्त्यन्ते इति विशेषाः। सामान्यञ्च विशेषाश्चेति सामान्यविशेषाः।

(२) बहुप्रकारव्यक्तय इति—व्यज्यन्त आभिरिति व्यक्तयः, सामान्यविशेषाणामाश्रयाः। बहुप्रकारा व्यक्तयो येषां सामान्यविशेषाणां ते तथोक्ताः।

(३) एष पाठो न्यासासम्मतः।

(४) सदच्काण्डेति पदमञ्जरीसम्मतः पाठः।

पुष्पात्॥ । सत्पुष्पा । प्राक्पुष्पा । काण्डपुष्पा । प्रान्तपुष्पा । शतपुष्पा । एकपुष्पा । "पाककर्ण" इति ङीषोऽपवादः । क्रुञ्चा, उष्णिहा, देवविशा—हलन्ताः, ज्येष्ठा, कनिष्ठा, मध्यमा—पुंयोगः । कोकिला जातिः । ॥मूलान्नञः॥ । अमूला ॥

## ऋन्नेभ्यो ङीप् ॥ ५ ॥

ऋकारान्तेभ्यो नकारान्तेभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीप् प्रत्ययो भवति । ङकारः सामान्यग्रहणार्थः । कर्त्री । हर्त्री । दण्डिनी । छत्रिणी ॥

## उगितश्च ॥ ६ ॥

उग् इयत्र संभवति यथाकथञ्चित् तदुगिच्छब्दरूपम् , तदन्तात् स्त्रियां ङीप् प्रत्ययो भवति । भवती । अतिभवती । पचन्ती । यजन्ती । ॥धातोरुगितः प्रतिषेधो वक्तव्यः॥ ॥ उखास्रत् , पर्णध्वत् ब्राह्मणी ॥ ॥अञ्चतेश्चोपसंख्यानम्॥ । प्राची । प्रतीची । उदीची ॥

## वनो र च ॥ ७ ॥

वन्नन्तात्प्रातिपादिकात्स्त्रियां ङीप् प्रत्ययो भवति रेफश्चान्तादेशः । धीवरी । पीवरी । शर्वरी । परलोकदृश्वरी । "ऋन्नेभ्यः" इत्येव ङीपि सिद्धे तत्सन्नियोगेन रेफविधानार्थं वचनम् । ॥वनो न हशः॥ । प्राप्तौ ङीब्रावुभावपि प्रतिषिद्ध्येते । सहयुध्वा ब्राह्मणी ॥

## पादोऽन्यतरस्याम् ॥ ८ ॥

पाद इति कृतसमासान्तः पादशब्दो निर्दिश्यते । पादन्तात्प्रातिपदिकादन्यतरस्यां स्त्रियां ङीप् प्रत्ययो भवति । द्विपात् , द्विपदी । त्रिपात् , त्रिपदी । चतुष्पाद् , चतुष्पदी ॥

## टाबृचि ॥ ९ ॥

पाद इत्येव । ऋचीत्यभिधेयनिर्देशः । ऋचि वाच्यायां पादन्तात्प्रातिपदिकात् स्त्रियां टाप् प्रत्ययो भवति । ङीपोऽपवादः । द्विपदा ऋक् । त्रिपदा ऋक् । चतुष्पदा ऋक् । ऋचीति किम् ? द्विपदी देवदत्ता ॥

---

मूलात्—नञ्पूर्वक मूल शब्द से टाप् प्रत्यय होता है ।

ऋन्नेभ्यः—ऋकारान्त तथा नकारान्त प्रातिपदिकों से स्त्रीत्वविवक्षा में ङीप् प्रत्यय होता है ।

उगितश्च—उगिदन्त प्रातिपदिक से भी स्त्रीत्वविवक्षा में ङीप् प्रत्यय होता है ।

धातोः—उगित् धातु से ङीप् का प्रतिषेध समझना चाहिए ।

अञ्चतेः—'अञ्चू' धातु से भी ङीप् का विधान समझना चाहिए ।

वनो—वन्नन्त प्रातिपदिक से स्त्रीलिङ्ग में ङीप् प्रत्यय भी होता है और अन्त में रेफादेश भी हो जाता है ।

वनो न—हशन्त धातुओं से विहित वन् ( वनिप् ) प्रत्यय से विशिष्ट प्रातिपदिक से ङीप् तथा अन्त को रेफादेश नहीं होते हैं ।

पादोन्य—कृतसमासान्तपादशब्दान्त प्रातिपदिक से स्त्रीलिङ्ग मे विकल्प से ङीप् होता है ।

टाबृचि—ऋक् के वाच्य होने पर पादशब्दान्त प्रातिपदिक से स्त्रीलिङ्ग में टाप् प्रत्यय होता है ।

## न षट्स्वस्रादिभ्यः ॥ १० ॥

षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च प्रातिपदिकेभ्यः स्त्रीप्रत्ययो न भवति। यो यः(१) प्राप्नोति स सर्वः प्रतिषिध्यते। पञ्च ब्राह्मण्यः। सप्त। नव। दश। स्वस्रादिभ्यः-स्वसा, दुहिता, ननान्दा, याता, माता, तिस्रः, चतस्रः॥

षट्संज्ञानामन्ते लुप्ते टाबुत्पत्तिः कस्मान्न स्यात्।
प्रत्याहाराच्चापा सिद्धं दोषस्त्वित्वे तस्मान्नोभौ॥

## मनः ॥ ११ ॥

मन्नन्तात्प्रातिपदिकान्ङीप् प्रत्ययो न भवति। "ऋन्नेभ्यो ङीप" इति ङीप् प्राप्तो "मनः" इति सूत्रेण प्रतिषिध्यते। दामा, दामानौ, दामानः। पामा, पामानौ, पामानः। अनिनस्मिन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति—सीमा, सीमानौ, सीमानः। अतिमहिमा, अतिमहिमानौ, अतिमहिमानः॥

## अनो बहुव्रीहेः १२ ॥

अन्नन्ताद् बहुव्रीहेः स्त्रियां ङीप् प्रत्ययो न भवति। अनुपधालोपी बहुव्रीहिरिहोदाहरणम्, उपधालोपिनो हि विकल्पं वक्ष्यति। सुपर्वा, सुपर्वाणौ, सुपर्वाणः। सुचर्मा, सुचर्माणौ सुचर्माणः। बहुव्रीहेरिति किम्? अतिक्रान्ता राजानमतिराजी(२)॥

## डाबुभाभ्यामन्यतरस्याम् ॥ १३ ॥

डाप् प्रत्ययो भवति उभाभ्याम्-मन्नन्तात्प्रातिपदिकादन्नन्ताच्च बहुव्रीहेरन्यतरस्याम्। पामा, पामे, पामाः। सीमा, सीमे, सीमाः। न च भवति-पामानः, सीमानः। बहुव्रीहौ—बहुराजा, बहुराजे, बहुराजाः; बहुतक्षा, बहुतक्षे, बहुतक्षाः। न च भवति-बहुराज्ञानः, बहुतक्षाणः। अन्यतरस्यांग्रहणं किमर्थम्? बहुव्रीहौ "वनो र च" इत्यस्यापि विकल्पो यथा स्यात्—बहुधीवा, बहुधीवरी; बहुपीवा, बहुपीवरी॥

## अनुपसर्जनात् ॥ १४ ॥

अधिकारोऽयम्। उत्तरसूत्रेषूपसर्जने प्रतिषेधं करोति। यदित ऊर्ध्वमनुक्रमिष्यामोऽनुपसर्जनादित्येवं तद्वेदितव्यम्। वक्ष्यति-"टिड्ढाणञ्" इति ङीप्—कुरुचरी, मद्रचरी। अनुपसर्जनादिति किम्? बहुकुरुचरा, बहुमद्रचरा मधुरा। जातेरिति ङीष्—कुक्कुटी, शूकरी। अनुपसर्जनादिति किम्? बहुकुक्कुटा, बहुशूकरा मधुरा। कथं पुनरुपसर्जनाऽप्रत्ययप्रसङ्गः? तदन्तविधिना ज्ञापितं चैतत्-अस्त्यत्र प्रकरणे तदन्तविधिरिति। तथा च प्रधानेन तदन्तविधिर्भवति—कुम्भकारी, नगरकारी। न चाणिति कृद्ग्रहणम्, तद्धितोऽप्यणस्ति॥

---

न षट्—षट्संज्ञक तथा स्वसृ आदि प्रातिपदिकों से स्त्री प्रत्यय नहीं होता है।
मनः—मन्नन्त ( मनिप्प्रत्ययान्त ) प्रातिपदिक से ङीप् नहीं होता है।
अनो—अन्नन्त बहुव्रीहि से स्त्रीलिङ्ग में ङीप् नहीं होता है।
डाप्—मन्नन्त प्रातिपदिक तथा अन्नन्त बहुव्रीहि से विकल्प से डाप् प्रत्यय होता है।
अनुप—यहाँ से आगे 'अनुपसर्जनात्' का अधिकार है।

---

( १ ) यत इति पाठः।
( २ ) अतिराज्ञीति पदमञ्जरीसम्मतः पाठः।

## टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ॥ १५ ॥

अत इति सर्वत्रानुवर्त्तते, तत् सति सम्भवे विशेषणं भवति । टिदादिभ्यः प्रातिपदिकेभ्यः स्त्रियां ङीप् प्रत्ययो भवति । टापोऽपवादः । टितस्तावत्–कुरुचरी, मद्रचरी । इह कस्मान्न भवति—पचमाना, यजमाना ? द्व्यनुबन्धकत्वाल्लटः । ल्युडादिषु कथम् ? टित्करणसामर्थ्यात् । इतरत्र तु टेरेत्वं फलम् । पठिता त्रियेति आगमटित्वमनिमित्तम्, "च्युट्युलौ तुट् च्" इति लिङ्गात् । ढ–सौपर्णेयी, वैनतेयी । निरनुबन्धको ढशब्दः स्त्रियां नास्तीति निरनुबन्धकपरिभाषा न प्रवर्तते । अण्–कुम्भकारी, नगरकारी, औपगवी । णेऽपि क्वचिदणकृतं कार्यं भवति–चौरी, तापसी । दण्डा, मौष्टेत्यत्र न भवति । अञ्–औत्सी, औदपादी । "शार्ङ्गरवाद्यञः" इति पुनरञो ग्रहणं जातिलक्षणं ङीषं बाधितुम् । द्वयसच्–ऊरुद्वयसी, जानुद्वयसी । दघ्नच्–उरुदघ्नी, जानुदघ्नी । मात्रच्–ऊरुमात्री, जानुमात्री । तयप्–पञ्चतयी, दशतयी । ठक्–आक्षिकी, शालाकिकी । ठञ्–लावणिकी । ठक्ठञोर्भेदेन ग्रहणं ठनादिनिवृत्त्यर्थम् । कञ्–यादृशी, तादृशी । क्वरप्–इत्वरी, नश्वरी । ॐनञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम्ॐ । स्त्रैणी । पौंस्नी । आणयङ्करणी । सुभगंकरणी । शाक्तीकी । याष्टीकी । तरुणी । तलुनी ॥

## यञश्च ॥ १६ ॥

ङीबित्येव । यञन्ताच्च प्रतिपदिकात् स्त्रियां ङीप् प्रत्ययो भवति । गार्गी । वात्सी । (१)ॐअपत्यग्रहणं कर्त्तव्यम्ॐ । इह मा भूत्—"द्वीपादनुसमुद्रं यञ्"–द्वैप्या । पृथग्योगकरणमुत्तरार्थम् ॥

## प्राचां ष्फ तद्धितः ॥ १७ ॥

यञ इत्येव । प्राचामाचार्याणां मतेन यञन्तात् स्त्रियां ष्फः प्रत्ययो भवति, स च तद्धितसंज्ञः । षकारो ङीषर्थः । प्रत्ययद्वयेनेह स्त्रीत्वं व्यज्यते । तद्धितग्रहणं प्रहिपदिकसंज्ञार्थम् । गार्ग्यायणी । वात्स्यायनी । अन्येषाम्–गार्गी, वात्सी । सर्वत्रग्रहणमुत्तरसूत्रादिहापकृष्यते बाधकबाधनार्थम् । आवट्याच्चापं वक्ष्यति, तमपि बाधित्वा प्राचां ष्फ एव यथा स्मात्–आवट्यायनी ॥

## सर्वत्र लोहितादिकतन्तेभ्यः ॥ १८ ॥

यञ इत्येव । पूर्वेण विकल्पे प्राप्ते नित्यार्थं वचनम् । सर्वत्र लोहितादिभ्यः कतपर्यन्तेभ्यो यञन्तेभ्यः स्त्रियां ष्फः प्रत्ययो भवति । कतशब्दः स्वतन्त्रं यत्प्रातिपदिकं तदवधित्वेन परिगृह्यते–कपिशब्दात्परः कपिकतेति, न प्रातिपदिकावयवः कुरुकतेति । लौहित्यायनी । शांसित्यायनी । बाभ्रव्यायणी ॥

---

**टिड्ढाणञ्**—टित्प्रत्ययान्त आदि प्रातिपदिकों से स्त्रीत्वविवक्षा में ङीप् प्रत्यय होता है ।

**नञ्**—नञ्प्रत्ययान्त, स्नञ्प्रत्ययान्त, ईकक्प्रत्ययान्त, ख्युन्प्रत्ययान्त, तरुण तथा तलुन शब्दों से भी ङीप् समझना चाहिए ।

**यञश्च**—यञन्त प्रातिपदिक से भी स्त्रीलिङ्ग में ङीप् प्रत्यय होता है ।

**अपत्य**—यहाँ अपत्यार्थक यञ् प्रत्यय का ग्रहण है ।

**प्राचाम्**—प्राचीन आचार्यों के मत में यञन्त प्रातिपदिक से स्त्रीलिङ्ग में तद्धितसंज्ञक ष्फ प्रत्यय होता है ।

**सर्वत्र**—लोहित से लेकर कत-पर्यन्त यञन्त प्रातिपदिक से भी स्त्रीलिङ्ग में ष्फ प्रत्यय होता है ।

---

(१) आपत्य इति पदमञ्जरीसम्मतः पाठः, न्यासे तु अपत्य इत्येव दृश्यते ।

कण्वात्तु शकलः पूर्वः कतादुत्तर इष्यते ।
पूर्वोत्तरौ(१) तदन्तादी ष्फाणौ तत्र प्रयोजनम् ॥

प्रातिपदिकेष्वन्यथा पाठः स एवं व्यवस्थापयितव्य इति मन्यते । कतन्तेभ्य इति बहुव्रीहितत्पुरुषयोरेकशेषः । तथा "कण्वादिभ्यो गोत्रे" इति । तत्र तत्पुरुषवृत्त्या सङ्गृहीतो मध्यपाती शकलशब्दो यञन्तः प्रत्ययद्वयमपि प्रतिपद्यते—शाकल्यायनी, शाकल्यस्येमे छात्राः शाकलाः ॥

## कौरव्यमाण्डूकाभ्यां च ॥ १९ ॥

कौरव्य, माण्डूक इत्येताभ्यां स्त्रियां ष्फः प्रत्ययो भवति । कुर्वादिभ्यो ण्ये कृते "ढक्च मण्डूकात्" इत्यणि च । यथाक्रमं टाब्ङीपोरपवादः । कौरव्यायणी । माण्डूकायनी । कथं कौरवी सेना ? तस्येदंविवक्षायामणि कृते । ॐकौरव्यमाण्डूकयोरासुरेरुपसंख्यानम्ॐ । आसुरायणी । शैषिकेष्वर्थेषु "इञश्च" इत्यणि प्राप्ते छप्रत्यय इष्यते—आसुरीयः कल्पः ॥

## वयसि प्रथमे ॥ २० ॥

कालकृतशरीरावस्था यौवनादिर्वयः । प्रथमे वयसि यत्प्रातिपदिकं श्रुत्या(२)वर्तते ततः स्त्रियां ङीप् प्रत्ययो भवति । कुमारी । किशोरी । वर्करी । प्रथम इति किम् ? स्थविरा, वृद्धा । अत इत्येव—शिशुः । ॐवयस्यचरम इति वक्तव्यम्ॐ । वधूटी । चिरण्टी । द्वितीयवयोवचनावेतौ । प्राप्तयौवना स्त्र्यभिधीयते । कथं कन्या ? "कन्यायाः कनीन च" इति ज्ञापकात् । उत्तानशया, लोहितपादिकेति नैता वयःश्रुतयः ॥

## द्विगोः ॥ २१ ॥

द्विगुसंज्ञकात् प्रातिपदिकात् स्त्रियां ङीप् प्रत्ययो भवति । पञ्चपूली । दशपूली । कथं त्रिफला ? अजादिषु दृश्यते ॥

## अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि ॥ २२ ॥

पूर्वेण ङीप् प्राप्तः प्रतिषिध्यते । अपरिमाणान्ताद् द्विगोर्बिस्ताचितकम्बल्यान्ताच्च तद्धितलुकि सति ङीप् प्रत्ययो न भवति । बिस्तादीनां परिमाणार्थं ग्रहणम् । सर्वतो मानं परिमाणम् । अपरिमाणान्तात्तावत्—पञ्चभिरश्वैः क्रीता पञ्चाश्वा, दशाश्वा । कालः संख्या च न परिमाणम्—द्विवर्षा, त्रिवर्षा । द्वाभ्यां शताभ्यां क्रीता द्विशता, त्रिशता । बिस्तादिभ्यः-द्विबिस्ता, त्रिबिस्ता, द्व्याचिता, त्र्याचिता, द्विकम्बल्या, त्रिकम्बल्या । अपरिमाणेति किम् ? द्व्याढकी, त्र्याढकी । तद्धितलुकीति किम् ? समाहारे—पञ्चाश्वी, दशाश्वी ॥

---

**कौरव्य**—कौरव्य तथा माण्डूक शब्दों से स्त्रीलिङ्ग में ष्फ प्रत्यय होता है ।

**कौरव्यमाण्डूकयोः**—कौरव्य तथा माण्डूक के साथ-साथ आसुरि शब्द से भी ष्फ प्रत्यय का विधान समझना चाहिए ।

**वयसि**—प्रथमवयोवाची प्रातिपदिक से स्त्रीलिङ्ग में ङी् प्रत्यय होता है ।

**वयस्यचरमे**—चरमवयोभिन्नवयोवाचक प्रातिपदिक से ङीप् का विधान समझना चाहिए ।

**द्विगोः**—द्विगुसंज्ञक प्राकिपदिक से स्त्रीलिङ्ग में ङीप् प्रत्यय होता है ।

**अपरिमाण**—अपरिमाणान्त द्विगु से और बिस्त, अचित एवम् कम्बल्य शब्दान्त प्रातिपदिकों से तद्धितप्रत्यय के लुक् होने पर ङीप् प्रत्यय नहीं होता है ।

---

( १ ) पूर्वोत्तरावित्यादि—शकलशब्दोऽन्त आदिश्य यथाक्रमम् ययोः पूर्वोत्तरयोर्गणयोस्तौ तथोक्तौ, पूर्वो गणो लोहितादिः शकलशब्दान्तो भवति, उत्तरश्च गणः शकलशब्दादिर्भवतीत्यर्थः ।

( २ ) श्रुत्येत्यादि—श्रवणमात्रेण प्रकरणाद्यनपेक्षयेत्यर्थः ।

## काण्डान्ताद् क्षेत्रे ॥ २३ ॥

काण्डशब्दान्ताद् द्विगोस्तद्धितलुकि सति क्षेत्रे वाच्ये ङीप् प्रत्ययो न भवति। द्वे काण्डे प्रमाणमस्याः क्षेत्रभक्तेः, "प्रमाणे द्वयसच्" इति विहितस्य तद्धितस्य" प्रमाणे लो द्विगोर्नित्यम्" इति लुकि कृते-द्विकाण्डा क्षेत्रभक्तिः, त्रिकाण्डा क्षेत्रभक्तिः। काण्डशब्दस्यापरिमाणवाचित्वात् पूर्वेणैव प्रतिषेधे सिद्धे क्षेत्रे नियमार्थं वचनम्, इह मा भूत्-द्विकाण्डी रज्जुः, त्रिकाण्डी रज्जुरिति। प्रमाणविशेषः काण्डम् ॥

## पुरुषात् प्रमाणेऽन्यतरस्याम् ॥ २४ ॥

द्विगोस्तद्धितलुकीत्येव। प्रमाणे यः पुरुषशब्दस्तदन्ताद् द्विगोस्तद्धितलुकि सति अन्यतरस्यां न ङीप् प्रत्ययो भवति। द्वौ पुरुषौ प्रमाणमस्याः परिखाया द्विपुरुषा, द्विपुरुषी। त्रिपुरुषा, त्रिपुरुषी। अपरिमाणान्तत्वान्नित्ये प्रतिषेधे प्राप्ते विकल्पार्थं वचनम्। प्रमाण इति किम्? द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरुषा, त्रिपुरुषा। तद्धितलुकीत्येव-समाहारे—द्विपुरुषी, त्रिपुरुषी ॥

## बहुव्रीहेरूधसो ङीष् ॥ २५ ॥

ऊधस्शब्दान्तान्ताद्बहुव्रीहेः स्त्रियां ङीष् प्रत्ययो भवति। "ऊधसोऽनङ्" इति समासान्ते कृते, "अनो बहुव्रीहेः" इति ङीप्प्रतिषेधयोः प्राप्तयोरिदमुच्यते। घटोध्नी। कुण्डोध्नी। बहुव्रीहेरिति किम्? प्राप्ता ऊधः प्राप्तोधाः। "अन उपधालोपिनः" इत्यस्यापि ङीपोऽयमुत्तरत्रानुवृत्तेर्बाधक इष्यते। समासान्तश्च स्त्रियामेव, इह न भवति-महोधाः पर्जन्य इति ॥

## संख्याऽव्ययादेर्ङीप् ॥ २६ ॥

पूर्वेण ङीषि प्राप्ते ङीब्विधीयते। संख्यादेरव्ययादेश्च बहुव्रीहेरूधःशब्दान्तात् ङीप् प्रत्ययो भवति। संख्यादेस्तावत्-द्व्यूध्नी, त्र्यूध्नी। अव्ययादेः-अत्यूध्नी, निरूध्नी। आदिग्रहणं किम्? द्विविधोध्नी, त्रिविधोध्नीत्यत्रापि यथा स्यात् ॥

## दामहायनान्ताच्च ॥ २७ ॥

**ऊधस इति निवृत्तम्। संख्याग्रहणमनुवर्त्तते, नाव्ययग्रहणम्। संख्यादेर्बहुव्रीहेर्दामशब्दान्ताद्धायनशब्दान्ताच्च स्त्रियां ङीप् प्रत्ययो भवति। दामान्तात् डाप्प्रतिषेधविकल्पेषु प्राप्तेषु नित्यार्थं वचनम्—द्विदाम्नी, त्रिदाम्नी। हायनान्तादपि प्राप्ते—द्विहायनी, त्रिहायणी, चतुर्हायणी। ॐहायनो वयसि स्मृतःॐ। तेनेह न भवति-द्विहायना शाला, त्रिहायना, चतुर्हायना। णत्वमपि "त्रिचतुर्भ्यां हायनस्य" इति वयस्येव स्मर्यते ॥**

---

काण्डान्तात्—तद्धितप्रत्यय के लुक् होने पर काण्डशब्दान्त द्विगु से क्षेत्र अर्थ में ङीप् प्रत्यय नहीं होता है।

पुरुषात्—प्रमाणार्थकपुरुषशब्दान्त द्विगु से तद्धितलुक् होने पर विकल्प से ङीप् प्रत्यय का प्रतिषेध होता है।

बहुव्रीहेः—ऊधस्शब्दान्त बहुव्रीहि से स्त्रीलिङ्ग में ङीष् प्रत्यय होता है।

संख्या—संख्यादि तथा अव्ययादि ऊधस् शब्दान्त बहुव्रीहि से ङीप् प्रत्यय होता है।

दाम—संख्यादि दामशब्दान्त एवम् संख्यादि हायनशब्दान्त बहुव्रीहि से ङीप् प्रत्यय होता है।

हायनो—हायनान्त बहुव्रीहि से वयस् अर्थ में ही ङीप् प्रत्यय समझना चाहिए।

## अन उपधालोपिनोऽन्यतरस्याम् ॥ २८ ॥

बहुव्रीहेरित्येव। अन्नन्तो यो बहुव्रीहिरुपधालोपी तस्मादन्यतरस्यां ङीप् प्रत्ययो भवति। ङीपा मुक्ते डाप्प्रतिषेधौ भवतः। ननु सिद्धा एव डाप्प्रतिषेधङीपः? अनुपधालोपिनो ङीप्प्रतिषेधार्थं वचनम्। बहुराजा, बहुराज्ञी, बहुराजे। बहुतक्षा, बहुतक्ष्णी, बहुतक्षे। अन इति किम्? बहुमत्स्या। उपधालोपिन इति किम्? सुपर्वा, सुपर्वे; सुपर्वा, सुपर्वाणौ, सुपर्वाणः। डाप्प्रतिषेधावेवात्र भवतः॥

## नित्यं संज्ञाछन्दसोः ॥ २९ ॥

अन्नन्ताद् बहुव्रीहेरुपधालोपिनः संज्ञायां विषये छन्दसि च नित्यं ङीप् प्रत्ययो भवति। विकल्पस्यापवादः। सुराज्ञी, अनिराज्ञी नाम ग्रामः। छन्दसि–गौः पञ्चदाम्नी, एकदाम्नी, द्विदाम्नी, एकमूर्ध्नी, समानमूर्ध्नी॥

## केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च ॥ ३० ॥

संज्ञाछन्दसोरित्येव। केवलादिभ्यः प्रातिपदिकेभ्यः संज्ञायां छन्दसि विषये स्त्रियां ङीप् प्रत्ययो भवति। केवली। केवलेति भाषायाम्। मामकी। मामिकेति भाषायाम्। मित्रावरुणयोर्भागधेयी। भागधेयेति भाषायाम्। पापी त्वियम्। पापेति भाषायाम्। उतापरीभ्यो मघवा विजिग्ये। अपरेति भाषायाम्। समानी प्रवाणी। समानेति भाषायाम्। आर्यकृती। आर्यकृतेति भाषायाम्। सुमङ्गली। सुमङ्गलेति भाषायाम्। भेषजी। भेषजेति भाषायाम्॥

## रात्रेश्चाजसौ ॥ ३१ ॥

जस्विषयादन्यत्र संज्ञायां छन्दसि च रात्रिशब्दान् ङीप् प्रत्ययो भवति। या रात्री सृष्टा। रात्रीभिः। अजसाविति किम्? यास्ता रात्रयः। *अजसादिष्विति वक्तव्यम्*। रात्रिं सहोषित्वा। कथं "तिमिरपटलैरवगुण्ठिताश्च रात्र्यः"? ङीषयं बह्वादिलक्षणः, तत्र हि पठ्यते 'कृदिकारादक्तिनः', 'सर्वतोऽक्तिन्नर्थादित्येके' इति॥

## अन्तर्वत्पतिवतोर्नुक् ॥ ३२ ॥

प्रकृतिर्निपात्यते, नुगागमस्तु विधीयते। अन्तर्वत्पतिवतोर्नुग्भवति ङीप् च प्रत्ययः, स तु नकारान्तत्वादेव सिद्धः। निपातनसामर्थ्याच्च विशेषे वृत्तिर्भवति। अन्तर्वत्पतिवदिति गर्भभर्तृसंयोगे। इह तु न भवति–अन्तरस्यां शालायां विद्यते, पतिमती पृथिवी। अन्तर्वदिति मतुब्निपात्यते, वत्वं सिद्धम्। पतिवदिति वत्वं निपात्यते, मतुप् सिद्धः। अन्तर्वत्नी गर्भिणी। पतिवत्नी जीवत्पतिः॥

---

अनः—उपधालोपी अन्नन्त बहुव्रीहि से विकल्प से ङीप् प्रत्यय होता है।

नित्यम्—संज्ञा तथा वेद में उपधालोपी अनन्त बहुव्रीहि से नित्य ङीप् प्रत्यय होता है।

केवल—संज्ञा तथा वेद में केवल, मामक, भागधेय, पाप, अपर, समान, आर्य, कृत, सुमङ्गल तथा भेषज शब्दों से ङीप् प्रत्यय होता है।

रात्रेः—संज्ञा तथा वेद में रात्रि शब्द से जस् विभक्ति के विषय को छोड़कर ङीप् प्रत्यय होता है।

अजसादिष्विति—जस् आदि विभक्तियों के विषय को छोड़कर रात्रिशब्द से ङीप् का विधान समझना चाहिए।

अन्तर्वत्—अन्तर्वत् तथा पतिवत् शब्दों से ङीप् प्रत्यय तथा उन्हें नुक् का आगम भी हो जाता है।

अन्तर्वत्पतिवतोस्तु मतुब्वत्वे निपातनात्।
गर्भिण्यां जीवत्पत्यां च वा छन्दसि तु नुग्विधिः॥

सान्तर्वत्नी देवानुपैत्। सान्तर्वती देवानुपैत्। पतिवत्नी तरुणवत्सा। पतिवती तरुणवत्सा॥

## पत्युर्नो यज्ञसंयोगे॥ ३३॥

पतिशब्दस्य नकारादेशः स्त्रियां विधीयते, ङीष् प्रत्ययस्तु नकारान्तत्वादेव सिद्धः, यज्ञसंयोगे। यज्ञेन संयोगो यज्ञसंयोगः, तत्साधनत्वात्फल(१)ग्रहीतृत्वाद्वा। यजमानस्य पत्नी। पत्नि! वाचं यच्छ। यज्ञसंयोग इति किम्? ग्रामस्य पतिरियं ब्राह्मणी। कथं वृषलस्य पत्नी? उपमानाद्भविष्यति॥

## विभाषा सपूर्वस्य॥ ३४॥

पत्युर्न इति वर्त्तते। पतिशब्दान्तस्य प्रातिपदिकस्य सपूर्वस्यानुपर्जनस्य स्त्रियां विभाषा नकारादेशो भवति, ङीप् तु लभ्यत एव। वृद्धपतिः। वृद्धपत्नी। स्थूलपतिः। स्थूलपत्नी। अप्राप्तविभाषेयम्, अयज्ञसंयोगत्वात्। सपूर्वस्येति किम्? पतिरियं ब्राह्मणी ग्रामस्य॥

## नित्यं सपत्न्यादिषु॥ ३५॥

सपत्न्यादिषु नित्यं पत्युर्नकारादेशो भवति, ङीप् तु लभ्यत एव। पूर्वेण विकल्पे प्राप्ते वचनम्। नित्यग्रहणं विस्पष्टार्थम्। समानः पतिरस्याः सपत्नी। एकपत्नी। समानादिष्विति वक्तव्ये समानस्य सभावार्थं वचनम्। समान। एक। वीर। पिण्ड। भ्रातृ। पुत्र। ॐदासाच्छन्दसिॐ॥

## पूतक्रतोरै च॥ ३६॥

पूतक्रतुशब्दस्य स्त्रियामैकारश्चान्तादेशो भवति ङीप् च प्रत्ययः। पूतक्रतोः स्त्री पूतक्रतायी। त्रय एते योगाः पुंयोगप्रकरणे द्रष्टव्याः। यया हि पूताः क्रतवः पूतक्रतुः सा भवति॥

## वृषाकप्यग्निकुसितकुसीदानामुदात्तः॥ ३७॥

वृषाकप्यादीनामुदात्त ऐकारादेशो भवति स्त्रियां ङीप् च प्रत्ययः। वृषाकपिशब्दो मध्योदात्त उदात्तत्वं प्रयोजयति। अग्न्यादिषु पुनरन्तोदात्तेषु स्थानिवद्भावादेव सिद्धम्। वृषाकपेः स्त्री वृषाकपायी। अग्नायी। कुसितायी। कुसीदायी। पुंयोग इत्येव—वृषाकपिः स्त्री॥

---

**पत्युः**—यज्ञसंयोग अर्थ में स्त्रीत्वविवक्षा में पतिशब्द को नकारादेश हो जाता है।

**विभाषा**—सपूर्वक पतिशब्द को उक्त नकारादेश विकल्प से हो जाता है।

**नित्यम्**—सपत्नी आदि शब्दों में पति शब्द को नित्य नकारादेश हो जाता है।

**दासात्**—दासशब्दोत्तरवर्त्ती पतिशब्द हो अन्त में जिसके ऐसे प्रातिपदिक को स्त्रीत्वविषय में नकारादेश हो जाता है छन्दोविषय प्रयोग में।

**पूत**—स्त्रीत्व-विवक्षा में पूतक्रतु शब्द से ङीप् प्रत्यय एवम् अन्त में ऐकारादेश हो जाता है।

**वृषाकप्यग्नि**—वृषाकपी आदि शब्दों से स्त्रीलिङ्ग में ङीप् प्रत्यय तथा अन्त में उदात्त ऐकारादेश भी हो जाता है।

---

(१) तत्फलेति न्यासपाठः।

## मनोरौ वा ॥ ३८ ॥

ऐ, उदात्त इति च वर्त्तते। मनुशब्दात् स्त्रियां ङीप् प्रत्ययो भवति औकारश्चान्तादेश ऐकारश्चोदात्तः। वाग्रहणेन द्वावपि विकल्प्येते, तेन त्रैरूप्यं भवति—मनोः स्त्री मनायी, मनावी, मनुः। मनुशब्द आद्युदात्तः॥

## वर्णादनुदात्तात्तोपधात्तो नः ॥ ३९ ॥

वेति वर्त्तते। वर्णवाचिनः प्रातिपदिकादनुदात्तान्तात्तकारोपधाद्वा ङीप् प्रत्ययो भवति, तकारस्य नकारादेशो भवति। एता, एनी। श्येता, श्येनी। हरिता, हरिणी। सर्व एते आद्युदात्ताः "वर्णानां तणतिनितान्तानाम्" इति वचनात्। वर्णादिति किम्? प्रहृता(१), प्ररुता। गतिस्वरेणाद्युदात्तः। अनुदात्तादिति किम्? श्वेता। घृतादित्वादन्तोदात्तः। तोपधादिति किम्? अन्यतो ङीषं वक्ष्यति। अत इत्येव—शितिर्ब्राह्मणी। ॐपिशङ्गादुपसंख्यानम्ॐ। पिशङ्गी। ॐअसितपलितयोः प्रतिषेधःॐ। असिता। पलिता। ॐछन्दसि क्नमित्येकेॐ। असिक्नी। पलिक्नी। भाषायामपीष्यते-गतो गणस्तूर्णमसिक्निकानाम्॥

## अन्यतो ङीष् ॥ ४० ॥

वेति निवृत्तम्, वर्णादनुदात्तादिति वर्त्तते, तोपधापेक्षमन्यत्वम्। वर्णवाचिनः प्रातिपदिकादनुदात्तान्तात् स्त्रियां ङीष् प्रत्ययो भवति। स्वरे विशेषः। सारङ्गी। कल्माषी। शबली। वर्णादित्येव—खट्वा। अनुदात्तादित्येव—कृष्णा, कपिला॥

## षिद्गौरादिभ्यश्च ॥ ४१ ॥

ङीषनुवर्त्तते। षिद्भ्यः प्रातिपदिकेभ्यो गौरादिभ्यश्च स्त्रियां ङीष् प्रत्ययो भवति। "शिल्पिनि ष्वुन्"-नर्त्तकी, खनकी, रजकी। गौरादिभ्यः-गौरी, मत्सी। गौर। मत्स्य। मनुष्य। शृङ्ग। हय। गवय। मुकय। ऋष्य। पुट। द्रुण। द्रोण। हरिण। कण। पटर। उकण। आमलक। कुवल। बदर। बिम्ब। तर्कार। शर्कार। पुष्कर। शिखण्ड। सुषम। सलन्द। गडुज। आनन्द। सृपाट। सृगेठ। आढक। शष्कुल। सूर्म। सुब। सूर्य्य। पूष। मूष। घातक। सकलूक। सल्लक। मालक। मालत। साल्वक। वेतस। अतस। पृस। मह। मठ। छेद। श्वन्। तक्षन्। अनडुही। अनड्वाही। एषणः करणे। देह। काकादन। गवादन। तेजन। रजन। लवण। पान। मेध। गौतम। आयस्थूण। भौरि। भौलिकि।

---

**मनोरौ**—मनु शब्द से स्त्रीलिङ्ग में ङीप् प्रत्यय होता है और अन्त में विकल्प से औकारादेश एवम् उदात्त ऐकारादेश भी हो जाता है।

**वर्णात्**—वर्णवाचक अनुदात्तान्त तकारोपध प्रातिपदिक से विकल्प से ङीप् प्रत्यय तथा तकार के स्थान में नकारादेश हो जाता है।

**पिशङ्गात्**—पिशङ्ग शब्द से भी ङीप् प्रत्यय समझना चाहिए।

**असित**—असित तथा पलित शब्दों से उपर्युक्त ङीप् तथा नकारादेश का विधान नहीं होता है।

**छन्दसि**—कुछ आचार्य वेद में असित तथा पलित शब्दों से ङीप् तथा इनके तकार के स्थान मे क्नम् आदेश मानते हैं।

**अन्यतो**—अन्य वर्णवाची अनुदात्तान्त प्रातिपदिक से स्त्रीलिङ्ग में ङीष् प्रत्यय होता है।

**षिद्गौरादि**—षित् तथा गौरादि प्रातिपदिकों से स्त्रीलिङ्ग में ङीष् प्रत्यय होता है।

---

(१) प्रकृतेति न्यासपाठः।

भौलिङ्ग । औद्वाहमानि । (१)आलिङ्गि । आपिच्छिक । आरट । टोट । नट । नाट । मूलाट । शातन । पातन । पावन । आस्तरण । अधिकरण । एत । अधिकार । आग्रहायणी । प्रत्यवरोहिणी । सेवन । ॐसुमङ्गलात्संज्ञायाम्ॐ । सुन्दर । मण्डल । पट । पिण्ड । कुर्द । गूर्द । पाण्ट । लोफाण्ट । कन्दर । कन्दल । तरुण । तलुन । बृहत् । महत् । सौधर्म्म । रोहिणी, नक्षत्रे । रेवती, नक्षत्रे । विकल । निष्फल । पुष्कल । ॐकटाच्छ्रोणिवचने(२)ॐ । पिप्पल्यादयश्च । पिप्पली । हरीतकी । कोशातकी । शमी । करीरी । पृथिवी । क्रोष्ट्री । मातामह । पितामह । मातामहपितामहयोः "मातरि षिच्च" इति षित्त्वादेव सिद्धे ज्ञापनार्थं वचनम्—अनित्यः षिल्लक्षणो ङीषिति; तेन दंष्ट्रेत्युपपन्नं भवति ॥

## जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद् वृत्त्यमत्रा-वपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकार-मैथुनेच्छाकेशवेशेषु ॥ ४२ ॥

जानपदादिभ्य एकादशभ्यः प्रातिपादिकेभ्य एकादशसु वृत्त्यादिष्वर्थेषु यथासंख्यं ङीष् प्रत्ययो भवति । जानपदी भवति वृत्तिश्चेत् , जानपदी अन्या । स्वरे विशेषः । उत्सादिपाठादञि कृते ङीप्याद्युदात्तत्वं भवति । कुण्डी भवति अमत्रं चेत् , कुण्डान्या । गोणी भवत्यावपनं चेत्, गोणान्या । स्थली भवति अकृत्रिमा चेत् , स्थलान्या । भाजी भवति श्राणा चेत् , पक्वेत्यर्थः, भाजान्या । नागी भवति स्थौल्यं चेत् , नागाऽन्या । नागशब्दो गुणवचनः स्थौल्ये ङीषमुत्पादयति, अन्यत्र गुण एव टापम् । जातिवचनात्तु जातिलक्षणो ङीषेव भवति—नागी । काली भवति वर्णश्चेत् , कालाऽन्या । नीली भवति अनाच्छादनं चेत् , नीलाऽन्या । न च सर्वस्मिन्ननाच्छादन इष्यते, किं तर्हि ? ॐनीलादोषधौ, प्राणिनि चॐ । नीली औषधिः, नीली गौः, नीली वडवा । ॐसंज्ञायां वाॐ । नीली, नीला । कुशी भवत्ययोविकारश्चेत् , कुशान्या । कामुकी भवति मैथुनेच्छा चेत् , कामुकान्या । मैथुनेच्छावती भण्यते, नेच्छामात्रम् । कबरी भवति केशवेशश्चेत् , कबरान्या ॥

## शोणात् प्राचाम् ॥ ४३ ॥

शोणशब्दात्प्राचामाचार्याणां मतेन स्त्रियां ङीष् प्रत्ययो भवति । शोणी, शोणा वडवा ॥

## वोतो गुणवचनात् ॥ ४४ ॥

गुणमुक्तवान् गुणवचनः । गुणवचनात्प्रातिपदिकाद् उकारान्तात् स्त्रियां वा ङीष्

---

**सुमङ्गलात्**—सुमङ्गल शब्द से संज्ञा में ङीप् प्रत्यय होता है ।

**कटात्**—श्रोणी अर्थ में कट शब्द से ङीप् प्रत्यय होता है ।

**जानपद**—जानपद आदि ग्यारह प्रातिपदिकों से क्रमशः वृत्ति आदि अर्थों में ङीष् प्रत्यय होता है ।

**नीलात्**—नील शब्द से ओषधि तथा प्राणी अर्थों में ङीष् प्रत्यय का विधान समझना चाहिए ।

**संज्ञायाम्**—संज्ञाविषय में नील शब्द से विकल्प से ङीप् प्रत्यय का विधान समझना चाहिए ।

**शोणात्**—प्राचीन आचार्यों के मत में शोण शब्द से स्त्रीत्वविवक्षा में ङीप् प्रत्यय होता है ।

**वोतो**—उकारान्त गुणवचन प्रातिपदिक से स्त्रीलिङ्ग में विकल्प से ङीप् प्रत्यय होता है ।

---

(१) आलिपि इति पाठान्तरम् ।

(२) कुत्रचित् अधिकाः पञ्च शब्दा ग्रन्थे दरीदृश्यन्ते । ते च यथा—पिङ्गल, भट्ट, दहन, कन्द, काकण इति ।

प्रत्ययो भवति। पटुः, पट्वी। मृदुः, मृद्वी। उत इति किम्? शुचिरियं ब्राह्मणी। गुणवचनादिति किम्? आखुः। ॐवसुशब्दात् गुणवचनाद् ङीबाद्युदात्तार्थम्ॐ। वस्वी। ॐखरुसंयोगोपधात्प्रतिषेधो वक्तव्यःॐ। (१)खरुरियं ब्राह्मणी। पाण्डुरियं ब्राह्मणी॥

(२)सत्त्वे निविशतेऽपैति पृथग् जातिषु दृश्यते।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः॥

## बह्वादिभ्यश्च ॥ ४५ ॥

बहु इत्येवमादिभ्यः प्रतिपदिकेभ्यः स्त्रियां वा ङीष् प्रत्ययो भवति। बहुः, बह्वी। बहु। पद्धति। अङ्कति। अञ्चति। अहंति। अंहति। वहति। शकटि। शक्तिः शस्त्रे। शारि। वारि। गति। अहि। कपि। मुनि। यष्टि। ॐइतः प्राण्यङ्गात्ॐ। ॐकृदिकारादक्तिनःॐ। ॐसर्वतोऽक्तिन्नर्थादित्येकेॐ। चण्ड। अराल। कमल। कृपाण। धिकट। विशाल। विशङ्कट। भरुज। ध्वज। ॐचन्द्रभागान्नद्याम्ॐ। कल्याण। उदार। पुराण। अहन्। बहुशब्दो गुणवचन एव, तस्येह पाठ उत्तरार्थः॥

## नित्यं छन्दसि ॥ ४६ ॥

बह्वादिभ्यश्छन्दसि विषये नित्यं स्त्रियां ङीष् प्रत्ययो भवति। बह्वीषु हित्वा प्रपिबन्। बह्वी नाम औषधी भवति। नित्यग्रहणमुत्तरार्थम्॥

## भुवश्च ॥ ४७ ॥

छन्दसि विषये स्त्रियां भुवो नित्यं ङीष् प्रत्ययो भवति। विभ्वी च। प्रभ्वी च।

---

**वसुशब्दात्**—परन्तु आद्युदात्तत्व के लिए गुणवचन वसु शब्द से ङीष् प्रत्यय ही होता है।

**खरुसंयोगोप**—खरु शब्द तथा संयोगोपध शब्दों से ङीष् नहीं होता है।

**बह्वादि**—बहु आदि प्रातिपदिकों से स्त्रीलिङ्ग में विकल्प से ङीष् प्रत्यय होता है।

**इतः**—प्राण्यङ्गवाची इकारान्त प्रातिपदिक से विकल्प से ङीष् प्रत्यय होता है।

**कृदिकारात्**—क्तिन्भिन्नकृदन्तर्गत इकारान्त प्रातिपदिक से विकल्प से ङीष् प्रत्यय होता है।

**सर्वतः**—कुछ लोगों को कहना है कि क्तिन्नर्थक प्रत्यय से भिन्न सभी कृत्प्रत्ययों से युक्त प्रातिपदिक से विकल्प से ङीष् प्रत्यय होता है।

**चन्द्र**—चन्द्रभागा शब्द से नदी अर्थ में विकल्प से ङीष् प्रत्यय होता है।

**नित्यम्**—वेद में बहु आदि शब्दों से नित्य ङीष् प्रत्यय होता है।

**भुवश्च**—वेद में 'भु' शब्द से नित्य ङीष् प्रत्यय होता है।

---

(१) खरुः-कन्या पतिंवरेति निघण्टुः।

(२) अस्यार्थः—सत्वे = द्रव्ये, निविशते = समवायेन सम्बध्यते, पुनश्च पाकादिवशात् द्रव्यात् अपैति = अपगच्छति, यथा पाकात् पूर्वम् घटे श्यामत्वम् सदपि पाकानन्तरम् तत एव घटादपगच्छति गुणान्तरं च रक्तता तत्र समवैति इति स्थितिः। पृथक् = पृथग्भूतासु, जातिषु = जात्याश्रयेषु घटपटमठादिषु, दृश्यते। एतत्सर्वं कर्मण्यपि समानम्, प्रयत्नादिना एकस्मिन् घटे समुत्पन्नत्वं कर्मणः समवायेन पुनश्च तस्य कर्मणो नाशात्तदपैत्यपि, पृथग्जात्याश्रयेषु घट-पटादिषु दृश्यतेऽपि इत्यतो व्यवच्छेदेकान्तरमाह—आधेयश्चेत्यादि। आधेयः = उत्पाद्यः, एतदपि क्रिया-साधारणमित्यत आह—अक्रियाजश्चेति। क्रियानुत्पाद्य इत्यर्थः। स च जलादिपरमाणूनां रूपादिः। तथा च विशेषणद्वयेन गुणे उत्पाद्यत्वम् अनुत्पाद्यत्वं चेत्युभयं विवक्षितम्, क्रियायां तु उत्पाद्यत्वमेव नानुत्पाद्यत्वम्, तस्या नित्यत्वाभावात्। अक्रियाजश्चेत्यत्र क्रिया प्रयत्नः न तु कर्म, तथा सति कर्मणः कर्मजन्यत्वस्यासम्मततया तावताऽतिव्याप्तिनिवारणासम्भवादिति ध्येयम्। असत्त्वप्रकृतिरिति द्रव्यव्यवच्छेदाय, अक्रियाजश्चेत्यन्तस्य द्रव्यसाधारणत्वात्। अधिक-माकरग्रन्थेभ्यो ज्ञेयमिति। (श्रीना०)

शर्व्वी च। इह कस्मान्न भवति—स्वयम्भूः ? उत इति तपरकरणमनुवर्त्तते। ह्रस्वादेवेयं पञ्चमी। "भुव" इति सौत्रो निर्द्देशः॥

## पुंयोगादाख्यायाम् ॥ ४८ ॥

पुंसा योगः पुंयोगः। पुंयोगाद्धेतोर्यत्प्रातिपदिकं स्त्रियां वर्त्तते पुंस आख्याभूतं तस्मात् ङीष् प्रत्ययो भवति। गणकस्य स्त्री गणकी। महामात्री। प्रष्ठी। प्रचरी। पुंसि शब्दप्रवृत्तिनिमित्तस्य सम्भवात् पुंशब्दा एते, तद्योगात्स्त्रियां वर्त्तन्ते। पुंयोगादिति किम् ? देवदत्ता, यज्ञदत्ता। आख्याग्रहणं किम् ? परिसृष्टा(१), प्रजाता। पुंयोगादेते शब्दाः स्त्रियां वर्त्तन्ते, न तु पुमांसमाचक्षते। ॐगोपालिकादीनां प्रतिषेधःॐ। गोपालकस्य स्त्री गोपालिका। ॐसूर्याद्देवतायां चाब्वक्तव्यःॐ। सूर्यस्य स्त्री देवता सूर्या। देवतायामिति किम् ? सूरी॥

## इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ॥४९॥

इन्द्रादिभ्यः प्रातिपदिकेभ्यः स्त्रियां ङीष् प्रत्ययो भवति, आनुक्चागमः। येषामत्र पुंयोग एवेष्यते तेषामानुगागममात्रं विधीयते, प्रत्ययस्तु पूर्वेणैव सिद्धः। अन्येषां तूभयं विधीयते। इन्द्राणी। वरुणानी। भवानी। शर्वाणी। रुद्राणी। मृडानी। ॐहिमारण्ययोर्महत्त्वेॐ। महद्धिमं हिमानी। महदरण्यमरण्यानी। ॐयवाद्दोषेॐ। दुष्टो यवो यवानी। ॐयवनाल्लिप्याम्ॐ। यवनानां लिपिर्यवनानी। ॐउपाध्यायमातुलाभ्यां वाॐ। उपाध्यायी, उपाध्यायानी। मातुली, मातुलानी। ॐआचार्यादणत्वं चॐ। आचार्यानी। आचार्या। ॐअर्यक्षत्रियाभ्यां वाॐ। अर्याणी, अर्या। क्षत्रियाणी, क्षत्रिया। विना पुंयोगेन स्वार्थ एवायं विधिः। पुंयोगे तु ङीषैव भवितव्यम्—अर्यी, क्षत्रियी। ॐमुद्गलाच्छन्दसि लिच्चॐ। रथीरभून्मुद्गलानी गविष्टौ॥

---

**पुंयोगात्**—पुंयोग के कारण स्त्रीलिङ्ग में वर्त्तमान पुम्वाचक प्रातिपदिक से ङीष् प्रत्यय होता है।

**गोपालिका**—गोपालिका आदि शब्दों में ङीष् नहीं होता है।

**सूर्यात्**—सूर्य शब्द से पुंयोग में देवता अर्थ में चाप् प्रत्यय होता है।

**इन्द्र**—इन्द्र आदि प्रातिपदिकों से स्त्रीत्वविवक्षा में ङीष् प्रत्यय होता है और आनुक् का आगम भी।

**हिमारण्ययोः**—हिम तथा अरण्य शब्दों से ङीष् तथा आनुक् महत्त्व अर्थ में ही होते हैं।

**यवाद्दोषे**—यव शब्द से दोष अर्थ में ही ङीष् तथा आनुक् का विधान होता है।

**यवनात्**—यवन शब्द से लिपि अर्थ में ही ङीष् तथा आनुक् का विधान होता है।

**उपाध्याय**—उपाध्याय तथा मातुल शब्दों से विकल्प से ङीष् तथा आनुगागम होते हैं।

**आचार्यात्**—आचार्य शब्द से ङीष् एवम् आनुगागम के विधान के साथ-साथ णत्व का प्रतिषेध भी समझना चाहिए।

**अर्य**—अर्य तथा क्षत्रिय शब्दों से विकल्प से ङीष् तथा आनुगागम का विधान होता है।

**मुद्गलाच्छन्दसि**—मुद्गल शब्द से छन्द में ङीष् तथा आनुगागम का विधान होता है और ङीष् लित् भी हो जाता है।

---

(१) परिसृष्टा, प्रजाता—प्रसूतेत्यर्थः। एते शब्दा इति बहुवचनम् येऽन्येप्येवञ्जातीयाः शब्दास्तानपेक्ष्य वेदितव्यम्।

## क्रीतात् करणपूर्वात् ॥ ५० ॥

करणं पूर्वमस्मिन्निति करणपूर्वं प्रातिपदिकम् । क्रीतशब्दान्तात्प्रातिपदिकात्करणपूर्वात्स्त्रियां ङीष् प्रत्ययो भवति । वस्त्रेण क्रीयते सा वस्त्रक्रीती । वसनक्रीती । करणपूर्वादिति किम् ? सुक्रीता, दुष्क्रीता । इह कस्मान्न भवति—

"सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसी ।" इति ?

टाबन्तेन समासः, अत इति चानुवर्त्तते । 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति, बहुलं तदुच्यते—"कर्तृकरणे कृता बहुलम्" इति ॥

## क्तादल्पाख्यायाम् ॥ ५१ ॥

करणपूर्वादित्येव । करणपूर्वात्प्रातिपदिकात् क्तान्तादल्पाख्यायां ङीष् प्रत्ययो भवति । अल्पाख्यायामिति समुदायोपाधिः । अभ्रविलिप्ती द्यौः । सूपविलिप्ती पात्री । अल्पसूपेत्यर्थः । अल्पाख्यायामिति किम् ? चन्दनानुलिप्ता(१) ब्राह्मणी ॥

## बहुव्रीहेश्चान्तोदात्तात् ॥ ५२ ॥

क्तादित्येव । बहुव्रीहिर्योऽन्तोदात्तस्तस्मात्स्त्रियां ङीष् प्रत्ययो भवति । स्वाङ्गपूर्वपदो बहुव्रीहिरिहोदाहरणम् । अस्वाङ्गपूर्वपदाद्विकल्पं वक्ष्यति । शङ्खभिन्नी । ऊरुभिन्नी (२) । गलकोत्कृत्ती । केशलूनी । बहुव्रीहेरिति किम् ? पादपतिता । ॐअन्तोदात्ताज्जातप्रतिषेधः । दन्तजाता । स्तनजाता । ॐपाणिगृहीत्यादीनामर्थविशेषेॐ । पाणिगृहीती भार्या । यस्यास्तु कथंचित्पाणिर्गृह्यते पाणिगृहीता सा भवति । ॐअबहुनञ्सुकालसुखादिपूर्वादिति वक्तव्यम्ॐ । बहुकृता(३) । नञ्-अकृता । सु-सुकृता । काल-मासजाता, संवत्सरजाता । सुखादि-सुखजाता, दुःखजाता । "जातिकालसुखादिभ्योऽनाच्छादनात्" इत्येवमादिना बहुव्रीहेरन्तोदात्तत्वम् ॥

## अस्वाङ्गपूर्वपदाद्वा ॥ ५३ ॥

**अन्तोदात्तात्, क्तान्तादित्यनुवर्त्तते । अस्वाङ्गपूर्वपदादन्तोदात्तात् क्तान्ताद् बहुव्रीहेः स्त्रियां वा ङीष् प्रत्ययो भवति । पूर्वेण नित्ये प्राप्ते विकल्प उच्यते । शार्ङ्गजग्धी, शार्ङ्गजग्धा । पलाण्डुभक्षिती, पलाण्डुभक्षिता । सुरापीती, सुरापीता । अस्वाङ्गपूर्वपदादिति**

---

क्रीतात्—करणकारकपूर्वक क्रीतशब्दान्त प्रातिपदिक से स्त्रीत्व विवक्षा में ङीष् प्रत्यय होता है ।

क्तादल्पा—करणकारकपूर्वक क्तान्तान्त प्रातिपदिक से ङीष् प्रत्यय होता है ।

बहुव्रीहेः—अन्तोदात्त क्तान्तान्त बहुव्रीहि से स्त्रीत्व-विवक्षा में ङीष् प्रत्यय होता है ।

अन्तोदात्तात्—परन्तु अन्तोदात्त क्तान्तान्त बहुव्रीहि में जातशब्दान्त बहुव्रीहि से ङीष् नहीं होता है ।

पाणि—अर्थविशेष में ही पाणिगृहीत आदि शब्दों से ङीष् प्रत्यय होता है ।

अबहु—बहु-आदिपूर्वक क्तान्तान्त बहुव्रीहि से ङीष् नहीं होता है—ऐसा समझना चाहिए ।

अस्वाङ्ग—अस्वाङ्गपूर्वपदक अन्तोदात्त क्तान्त बहुव्रीहि से स्त्रीत्वविवक्षा में विकल्प से ङीष् प्रत्यय होता है ।

---

(१) चन्दनानुलिप्ता—बहुलेन चन्दनेनानुलिप्तेत्यर्थः ।

(२) गलोत्कृत्तीति पण्डितपत्रमुद्रितपुस्तके पाठः ।

(३) बहुकृता—बहूनि कृतान्यनयेति विग्रहः ।

किम् ? शङ्खभिन्नी, ऊरुभिन्नी । अन्तोदात्तादित्येव–वस्त्रच्छन्ना, वसनच्छन्ना । ॐबहुलं संज्ञाछन्दसोरिति वक्तव्यम्ॐ । प्रवृद्धविलूनी । प्रवृद्धविलूना । प्रवृद्धा चासौ विलूना चेति । नायं बहुव्रीहिः ॥

**स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ॥ ५४ ॥**

बहुव्रीहेः, क्तान्तादन्तोदात्तादिति सर्वं निवृत्तम् । वाग्रहणमनुवर्तते । स्वाङ्गं यदुपसर्जनमसंयोगोपधं तदन्तात् प्रातिपदिकात्स्त्रियां वा ङीष् प्रत्ययो भवति । चन्द्रमुखी, चन्द्रमुखा । अतिक्रान्ता केशान् अतिकेशी, अतिकेशा माला । स्वाङ्गादिति किम् ? बहुयवा । उपसर्जनादिति किम् ? अशिखा । असंयोगोपधादिति किम् ? सुगुल्फा, सुपार्श्वा । ॐअङ्गगात्रकण्ठेभ्य इति वक्तव्यम्ॐ । मृद्वङ्गी, मृद्वङ्गा । सुगात्री, सुगात्रा । स्निग्धकण्ठी, स्निग्धकण्ठा ॥

(१)अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम् ।
अतत्स्थं तत्र दृष्टं चेत्तेन चेत्तत्तथा युतम् ॥

**नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ॥ ५५ ॥**

स्वाङ्गाच्चोपसर्जनादित्येव । बह्वज्लक्षणे संयोगोपधलक्षणे च प्रतिषेधे प्राप्ते वचनम् । सहनञ्विद्यमानलक्षणस्तु प्रतिषेधो भवत्येव । नासिकाद्यन्तात्प्रातिपदिकात्स्त्रियां वा ङीष् प्रत्ययो भवति । तुङ्गनासिकी, तुङ्गनासिका । तिलोदरी, तिलोदरा । बिम्बोष्ठी, बिम्बोष्ठा । दीर्घजङ्घी, दीर्घजङ्घा । समदन्ती, समदन्ता । चारुकर्णी, चारुकर्णा । तीक्ष्णशृङ्गी, तीक्ष्णशृङ्गा । ॐपुच्छाच्चेति वक्तव्यम्ॐ । कल्याणपुच्छी, कल्याणपुच्छा । ॐकबरमणिविषशरेभ्यो नित्यम्ॐ । कबरपुच्छी(२) । मणिपुच्छी । विषपुच्छी । शरपुच्छी । ॐउपमानात्पक्षाच्च पुच्छाच्चॐ । उलूकपक्षी सेना । उलूकपुच्छी शाला ॥

---

**बहुलम्**—संज्ञा तथा वेद में उक्त ङीष् बहुल करके होता है ।

**स्वाङ्गात्**—स्वाङ्ग जो असंयोगोपध उपसर्जन तदन्त प्रातिपदिक से स्त्रीत्वविवक्षा में विकल्प से ङीष् होता है ।

**अङ्ग**—अङ्ग, गात्र तथा कण्ठ आदि उपसर्जन से ङीष् का विधान समझना चाहिए ।

**नासिकोदरौष्ठ**—नासिकाशब्दान्त, उदरशब्दान्त, ओष्ठशब्दान्त, जङ्घाशब्दान्त, दन्तशब्दान्त, कर्णशब्दान्त तथा शृङ्गशब्दान्त प्रातिपदिकों से स्त्रीत्वविवक्षा में विकल्प से ङीप् प्रत्यय होता है ।

**पुच्छाच्चेति**—उपसर्जनपुच्छान्त प्रातिपदिक से भी विकल्प से ङीष् समझना चाहिए ।

**कबर**—कबर, मणि, विष तथा शर शब्दों से उत्तर आनेवाले उपसर्जन पुच्छ शब्द से नित्य ङीष् प्रत्यय होता है ।

**उपमानात्**—उपमानपूर्वपदक पक्ष तथा पुच्छ शब्दों से नित्य ङीष् प्रत्यय होता है ।

---

( १ ) अत्र पारिभाषिकस्य स्वाङ्गस्य लक्षणत्रयम्—( क ) अद्रवं मूर्त्तिमत् स्वाङ्गम् प्राणिस्थमविकारजम्, ·( ख ) अतत्स्थं तत्र दृष्टं च, ( ग ) तेन चेत् तत् तथा युतम् इति । तत्र द्रवरहितं असर्वगतद्रव्यपरिमाणवत् (=मूर्तिमत्) प्राणिस्थम् विकारजन्यत्वरहितं च प्रथमं स्वाङ्गम् हस्तपादादि । प्राणिषु अवर्त्तमानमपि प्राक् तत्र प्राणिषु वर्त्तमानं वस्तु छिन्नकेशादि द्वितीयविधं स्वाङ्गम् । तृतीयलक्षणे च विशेषः भाष्यकृतैवोक्तः—'स्वाङ्गमप्राणिनोपि' इति । तथा च तेन = प्राणिस्थेन स्तनाद्यवयवसन्निवेशविशेषेण, तत् = प्राणरहितं प्रतिमादि द्रव्यम् अपि, चेत् = यदि, तथा = प्राणिवत्, युतम् तर्हि तदपि स्वाङ्गमित्यर्थः । तेन प्रतिमास्तनादेरपि स्वाङ्गत्वमुपपन्नमिति भावः । ( श्रीना० )

( २ ) कबरपुच्छी—कबरं पुच्छमस्याः सा मयूरी । मणिपुच्छी, विषपुच्छी–मणिः पुच्छमस्याः, विषं पुच्छमस्याः सा वृश्चिकी ।

## न क्रोडादिबह्वचः ॥ ५६ ॥

"स्वाङ्गात्" इति ङीष् प्राप्तः प्रतिषिद्ध्यते। क्रोडाद्यन्ताद् बह्वजन्ताच्च प्रातिपादिकात्स्त्रियां ङीष् प्रत्ययो न भवति। कल्याणक्रोडा(१)। कल्याणखुरा। कल्याणोखा(२)। कल्याणबाला। कल्याणशफा। कल्याणगुदा। कल्याणघोणा। कल्याणनखा। कल्याणमुखा। क्रोडादिराकृतिगणः। सुभगा। सुगला। बह्वचः खल्वपि-पृथुजघना, महाललाटा॥

## सहनञ्विद्यमानपूर्वाच्च ॥ ५७ ॥

"स्वाङ्गाच्चोपसर्जनात्" इति "नासिकोदरौष्ठजङ्घा" इति च प्राप्तो ङीष्प्रतिषिद्ध्यते। सह, नञ्, विद्यमान इत्येवंपूर्वात्प्रातिपदिकात्स्त्रियां ङीष् प्रत्ययो न भवति। सकेशा। अकेशा। विद्यमानकेशा। सनासिका। अनासिका। विद्यमाननासिका॥

## नखमुखात् संज्ञायाम् ॥ ५८ ॥

नखमुखान्तात् प्रातिपदिकात् संज्ञायां स्त्रियां विषये ङीष् प्रत्ययो न भवति। शूर्पणखा। वज्रणखा। गौरमुखा। कालमुखा। संज्ञायामिति किम्? ताम्रनखी कन्या, चन्द्रमुखी॥

## दीर्घजिह्वी च च्छन्दसि ॥ ५९ ॥

दीर्घजिह्वी इति छन्दसि विषये निपात्यते। संयोगोपधत्वादप्राप्तो ङीष् विधीयते। दीर्घजिह्वी वै देवानां हव्यमलेट्। चकारः संज्ञानुकर्षणार्थः। दीर्घजिह्वीति निपातनं नित्यार्थम्॥

## दिक्पूर्वपदान्ङीप् ॥ ६० ॥

"स्वाङ्गाच्चोपसर्जनात्" इत्येवमादिविधिप्रतिषेधविषयः सर्वोऽप्यपेक्ष्यते। यत्र ङीष् विहितस्तत्र तदपवादः। दिक्पूर्वपदात्प्रातिपदिकान् ङीप् प्रत्ययो भवति। स्वरे विशेषः। प्राङ्मुखी(३), प्राङ्मुखा। प्राङ्नासिकी, प्राङ्नासिका। इह न भवति—प्राग्गुल्फा, प्राक्क्रोडा, प्राग्जघनेति॥

## वाहः ॥ ६१ ॥

ङीषेव स्वर्यते न ङीप्। वहेरयं ण्विप्रत्ययान्तस्य निर्देशः। सामर्थ्यात्तदन्तविज्ञानम्। वाहन्तात्प्रातिपादिकात्स्त्रियां ङीष् प्रत्ययो भवति। दित्यौही। प्रष्ठौही॥

---

**न क्रोडादि**—क्रोड-आदिशब्दान्त तथा बह्वजन्त प्रातिपदिकों से ङीष् नहीं होता है।

**सहनञ्**—सहपूर्वक, नञ्पूर्वक तथा विद्यमानपूर्वक प्रातिपदिक से भी ङीष् प्रत्यय नहीं होता है।

**नख**—नखशब्दान्त तथा मुखशब्दान्त प्रातिपदिक से संज्ञा में स्त्रीत्वविवक्षा में ङीष् प्रत्यय नहीं होता है।

**दीर्घजिह्वी**—वेद में 'दीर्घजिह्वी' शब्द का निपातन होता है।

**दिक्**—दिक्पूर्वपदक प्रातिपदिक से ङीप् प्रत्यय होता है।

**वाहः**—वाहन्त प्रातिपदिक से स्त्रीत्वविवक्षा में विकल्प से ङीष् प्रत्यय होता है।

---

(१) कल्याणक्रोडेति। अश्वानामुरः क्रोडा, स्त्रीलिङ्गोऽयम्।

(२) एतच्च बहुपु पुस्तकेषु नोपलभ्यते।

(३) प्राङ्मुखीति—प्राच्यां भवमिति व्युतपत्तावस्तातिः, तस्याञ्चेरिति लुक्, लुक्तद्धितेति ङीब्लुक्, इति प्राक्; प्राङ् मुखं यस्याः सा प्रा मुखी।

## सख्यशिश्वीति भाषायाम् ॥ ६२ ॥

सखी, अशिश्वी इत्येतौ शब्दौ ङीषन्तौ भाषायां निपात्येते। सखीयं मे ब्राह्मणी। नास्याः शिशुरस्तीति अशिश्वी। भाषायामिति किम्? सखा सप्तपदी भव। अशिशुमिव मामयं शिशुरभिमन्यते॥

## जातेरस्त्रीविषयादयोपधात् ॥ ६३ ॥

जातिवाचि यत्प्रातिपादिकं न च स्त्रियामेव नियतमस्त्रीविषयमयकारोपधं च तस्मात् स्त्रियां ङीष् प्रत्ययो भवति॥

(१) आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक्।
सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह॥

कुक्कुटी। सूकरी(२)। ब्राह्मणी। वृषली। नाडायनी। चारायणी। कठी। बह्वृची। जातेरिति किम्? मुण्डा। अस्त्रीविषयादिति किम्? मक्षिका। अयकारोपधादिति किम्? क्षत्रिया। *योपधप्रतिषेधे हयगवयमुकयमत्स्यमनुष्याणामप्रतिषेधः*। हयी। गवयी। मुकयी। मत्सी। मनुषी॥

## पाककर्णपर्णपुष्पफलमूलबालोत्तरपदाच्च ॥ ६४ ॥

पाकाद्युत्तरपदाज्जातिवाचिनः प्रातिपदिकात्स्त्रियां ङीष् प्रत्ययो भवति। स्त्रीविषयत्वादेतेषां पूर्वेणाप्राप्तः प्रत्ययो विधीयते। ओदनपाकी। शङ्कुकर्णी। शालपर्णी। शङ्खपुष्पी। दासीफली। दर्भमूली। गोबाली। पुष्पफलमूलोत्तरपदात्त यतो नेष्यते तदजादिषु पठ्यते—'सत्प्राक्काण्डप्रान्तशतैकेभ्यः पुष्पात्', 'संभस्त्राजिनशणपिण्डेभ्यः फलात्', 'मूलान्नञः' इति॥

---

**सख्यशिश्वीति**—भाषा में ङीष् प्रत्ययान्त सखी तथा अशिश्वी शब्दों का निपातन होता है।

**जातेः**—स्त्रीलिंगमात्र में अनियत जातिवाचक यकारोपधभिन्न प्रातिपदिक से स्त्रीत्वविवक्षा में ङीष् प्रत्यय होता है।

**योपध**—यकारोपध प्रातिपदिकों में हय, गवय, मुकय, मत्स्य तथा मनुष्य शब्दों से ङीष् का प्रतिषेध नहीं होता है।

**पाक**—पाकाद्युत्तरपदक जातिवाची प्रातिपदिकों से स्त्रीत्वविवक्षा में ङीष् प्रत्यय होता है।

---

(१) अत्र लक्षणत्रयम्—(क) आकृतिग्रहणा जातिः, (ख) लिङ्गानाञ्च न सर्वभाक् सकृदाख्यात निर्ग्राह्या, (ग) गोत्रं च चरणैः सह इति। तत्र प्रथमलक्षणम् आकृतिग्रहणेति। अनुगतेन अवयवसन्निवेशेन व्यंग्येति तदर्थः। यथा गोत्वघटत्वमनुष्यत्वादयः। असर्वलिङ्गत्वे सति एकस्यां व्यक्तौ कथनेन व्यक्त्यन्तरे कथनं विनापि सुग्रहेति द्वितीयं लक्षणम्। यथा एकत्र वृषलव्यक्तौ वृषलत्वोपदेशानन्तरम् तत्पुत्रादौ उपदेशमन्तरैव वृषलत्वं सुग्रहम्, नपुंसकत्वनियतं चेति। यद्यपि तत्पुत्रादौ तत्पुत्रत्वग्रहणसापेक्षैव प्रमितिः वृषलत्वस्य तथापि तत्पुत्रादौ वृषलत्वग्रहणाय नोपदेशापेक्षेति भावः। पितर्यपि वृषलत्वस्य न प्रत्यक्षत्वम् उपदेशसहकृतम् अपि तु उपनीतभानमेव तस्य, वृषलत्वादेरतीन्द्रियत्वादित्येव तु युक्तम्। आकृतेश्च ब्राह्मणादावपि तुल्यतया न प्रथमलक्षणेन निर्वाहः। अपत्यप्रत्ययान्तत्वं शाखाध्येतृवाचित्वं चेति अन्त्यं लक्षणम्। तत्र कठत्वादिकं जातिः। एतच्च शब्दशास्त्रीयम् अनुशासनम्। दर्शनान्तररीत्या तु कठत्वादिकं न जातिः, साङ्कर्यात् इति अन्यतो ज्ञेयम्। तत्रापि साङ्कर्यस्य जातिबाधकता नेत्यपि नव्यानां मतं समालोचनीयमेव। (श्रीना०)

(२) अत्र मयूरीति न्यासेऽधिकमुदाहरणम्।

## इतो मनुष्यजातेः ॥ ६५ ॥

इकारान्तात्प्रातिपदिकान्मनुष्यजातिवाचिनः स्त्रियां ङीष् प्रत्ययो भवति । अवन्ती । कुन्ती । दाक्षी । प्लाक्षी । इत इति किम् ? विट्, दरत् । मनुष्यग्रहणं किम् ? तित्तिरिः । जातेरिति वर्त्तमाने पुनर्जातिग्रहणं योपधादपि यथा स्यात्—औदमेयी(१) । ॐइञ उपसंख्यानमजात्यर्थम्ॐ । सौतङ्गमी । मौनचित्ती । सुतङ्गमादिभ्यश्चातुरर्थिक इञ् न जातिः ॥

## ऊङुतः ॥ ६६ ॥

मनुष्यजातेरिति वर्त्तते । उकारान्तान्मनुष्यजातिवाचिनः प्रातिपदिकात्स्त्रियामूङ् प्रत्ययो भवति । कुरूः । ब्रह्मबन्धूः । वीरबन्धूः(२) । ङकारो "नोङ्धात्वोः" इति विशेषणार्थः । दीर्घोच्चारणं कपो बाधनार्थम् । अयोपधादित्येतदत्रापेक्ष्यते—अध्वर्युर्ब्राह्मणी । ॐअप्राणिजातेश्चारज्ज्वादीनामिति वक्तव्यम्ॐ । अलाबूः । कर्कन्धूः । अप्राणिग्रहणं किम् ? कृकवाकुः । अरज्ज्वादीनामिति किम् ? रज्जुः, हनुः ।

## बाह्वन्तात् संज्ञायाम् ॥ ६७ ॥

बाहुशब्दान्तात्प्रातिपदिकात्संज्ञायां विषये स्त्रियामूङ् प्रत्ययो भवति । भद्रबाहूः । जालबाहूः । संज्ञायामिति किम् ? वृत्तौ बाहू यस्याः सा वृत्तबाहुः ॥

## पङ्गोश्च ॥ ६८ ॥

पङ्गुशब्दात्स्त्रियामूङ् प्रत्ययो भवति । पङ्गूः । ॐश्वशुरस्योकाराकारलोपश्च वक्तव्यःॐ । श्वश्रूः ॥

## ऊरूत्तरपदादौपम्ये ॥ ६९ ॥

उरूत्तरपदात्प्रातिपदिकादौपम्ये गम्यमाने स्त्रियामूङ् प्रत्ययो भवति । कदलीस्तम्भोरूः । नागनासोरूः । करभोरूः । औपम्य इति किम् ? वृत्तोरुः स्त्री ॥

## संहितशफलक्षणवामादेश्च ॥ ७० ॥

संहित, शफ, लक्षण, वाम इत्येवमादेः प्रातिपदिकादूरूत्तरपदात्स्त्रियामूङ् प्रत्ययो

---

**इतो**—मनुष्यजातिवाचक इकारान्त प्रातिपदिक से स्त्रीत्वविवक्षा में ङीष् प्रत्यय होता है ।

**इञः**—अजातिवाचक इञ्प्रत्ययान्त प्रातिपदिक से भी ङीष् का विधान समझना चाहिए ।

**ऊङुतः**—उकारान्त मनुष्यजातिवाची प्रातिपदिक से स्त्रीत्वविवक्षा में ऊङ् प्रत्यय होता है ।

**अप्राणि**—रज्ज्वादिभिन्न अप्राणिजातिवाचक प्रातिपदिक से भी ऊङ् प्रत्यय का विधान समझना चाहिए ।

**बाह्वन्तात्**—बाहुशब्दान्त प्रातिपदिक से संज्ञा में ऊङ् प्रत्यय होता है ।

**पङ्गोश्च**—पङ्गु शब्द से स्त्रीत्वविवक्षा में ऊङ् प्रत्यय होता है ।

**श्वसुरस्य**—श्वसुर शब्द से ऊङ् प्रत्यय तथा इसके इकार और ऊकार का लोप भी हो जाता है ।

**ऊरूत्तर**—उपमा के गम्यमान होने पर ऊरूत्तरपदक प्रातिपदिक से स्त्रीलिंग में ऊङ् प्रत्यय होता है ।

**संहित**—संहित, शफ, लक्षण तथा वाम आदि पूर्वपदवाले ऊरूत्तरपदक प्रातिपदिकों से स्त्रीलिग में ऊङ् प्रत्यय होता है ।

---

(१) औदमेयीति—उदकं मेयमस्य इति उदमेयः, तस्यापत्यम् स्त्री औदमेयी । उदकस्योदभावः ।

(२) जीवबन्धूरिति पण्डितपत्रमुद्रितपुस्तके पाठः ।

भवति। अनौपम्यार्थ आरम्भः। संहितोरूः(१)। शफोरूः। लक्षणोरूः। वामोरूः। ॐसहितसहाभ्यां चेति वक्तव्यम्ॐ। सहितोरूः। सहोरूः॥

## कद्रुकमण्डल्वोश्छन्दसि॥ ७१॥

कद्रुशब्दात्कमण्डलुशब्दाच्च छन्दसि विषये स्त्रियामूङ् प्रत्ययो भवति। कद्रूश्च वै सुपर्णी च। मा स्म कमण्डलूं शूद्राय दद्यात्। छन्दसीति किम्? कद्रुः, कमण्डलुः। ॐगुग्गुलुमधुजतुपतयालूनामिति वक्तव्यम्ॐ। गुग्गुलूः। मधूः। जतूः। पतयालूः॥

## संज्ञायाम्॥ ७२॥

कद्रुकमण्डलुशब्दाभ्यां संज्ञायां विषये स्त्रियामूङ् प्रत्ययो भवति। अच्छन्दोर्थं वचनम्। कद्रूः। कमण्डलूः। संज्ञायामिति किम्? कद्रुः, कमण्डलुः॥

## शार्ङ्गरवाद्यञो ङीन्॥ ७३॥

शार्ङ्गरवादिभ्योऽञन्तेभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीन् प्रत्ययो भवति। शार्ङ्गरवी। कापटवी। अञन्तेभ्यः—बैदी, और्वी। जातिग्रहणं चेहानुवर्तते, तेन जातिलक्षणो ङीषनेन बाध्यते, न पुंयोगलक्षणः। बैदस्य स्त्री बैदी। शार्ङ्गरव। कापटव। गौगुलव। ब्राह्मण। गौतम। एतेऽणन्ताः। कालण्डलेय। ब्राह्मकृतेय। आनिचेय। आनिधेय। आशोकेय। एते ढगन्ताः। वात्स्यायन। मौञ्जायन। एतौ फगन्तौ जातिः। कैकसेयो ढगन्तः। काव्यशैव्यौ ष्यङन्तौ। एहि, पर्येहि। कृदिकारान्तौ। आश्मरथ्यो यञन्तः। औदपानः। उदपानशब्दः शुण्डिकाद्यणन्तः प्रयोजयति। अराल। चण्डाल। वतण्ड। जातिः। ॐभोगवद्गौरिमतोः संज्ञायाम् घादिषु नित्यं ह्रस्वार्थम्ॐ। ॐनृनरयोर्वृद्धिश्चॐ। अत्र यथायोगं ङीबादिषु प्राप्तेषु ङीन् विधीयते॥

## यङश्चाप्॥ ७४॥

यङन्तात्प्रातिपदिकात्स्त्रियां चाप् प्रत्ययो भवति। ञ्यङः ष्यङश्च सामान्यग्रहणमेतत्। आम्बष्ठ्या। सौवीर्या। कौसल्या। ष्यङ्—कारीषगन्ध्या, वाराह्या, बालाक्या। ॐषाच्च यञःॐ। षात्परो यो यञ् तदन्ताच्चाप् वक्तव्यः। शार्कराक्ष्या। पौतिमाष्या। गौकक्ष्या। उत्तरसूत्रे चकारोऽनुक्तसमुच्चयार्थः, तेन वा भविष्यति॥

---

**सहित**—सहित तथा शफ पूर्वपदवाले ऊरूत्तरप्रातिपदिकों से भी स्त्रीलिंग में ऊङ् प्रत्यय समझना चाहिए।

**कद्रु**—वेद में कद्रु शब्द तथा कमण्डलु शब्द से स्त्रीत्वविवक्षा में ऊङ् प्रत्यय होता है।

**गुग्गुलु**—गुग्गुलु, मधु, जतु तथा पतयालु शब्दों से भी ऊङ् प्रत्यय का विधान समझना चाहिए।

**संज्ञायाम्**—संज्ञा में कद्रु तथा कमण्डलु शब्दों से ऊङ् प्रत्यय होता है।

**शार्ङ्ग**—शार्ङ्गरव आदि अञ्प्रत्ययान्त प्रातिपदिक से स्त्रीत्वविवक्षा में ङीन् प्रत्यय होता है।

**भोगवत्**—संज्ञा में भोगवत् तथा गौरिमत् शब्दों से नित्य ह्रस्व-विधान के लिए ङीन् प्रत्यय होता है घ (तरप्-तमप्), रूपप् आदि प्रत्ययों के परे रहते।

**नृनरयोः**—नृ तथा नर शब्दों से ङीन् तथा आदि अच् को वृद्धि का विधान समझना चाहिए।

**यङश्चाप्**—यङन्त प्रातिपदिक से स्त्रीत्वविवक्षा में चाप् प्रत्यय होता है।

**षाच्च**—ष से पर यञ्प्रत्ययान्त प्रातिपदिक से भी चाप् प्रत्यय होता है।

---

(१) संहितोरूः-संश्लिष्टोरूरित्यर्थः। सहोरूः-सहेते इति सहौ, तादृशावूरू यस्याः सा।

## आवट्याच्च ॥ ७५ ॥

अवटशब्दो गर्गादिः । तस्माद्यञि कृते ङीपि प्राप्ते वचनमेतत् । आवट्याच्च स्त्रियां चाप् प्रत्ययो भवति । आवट्या । प्राचां ष्फ एव, सर्वत्रग्रहणात् । आवट्यायनी ॥

## तद्धिताः ॥ ७६ ॥

अधिकारोऽयम् । आपञ्चमाध्यायपरिसमाप्तेर्यानित ऊर्ध्वमनुक्रमिष्यामस्तद्धितसंज्ञास्ते वेदितव्याः । वक्ष्यति–"यूनस्तिः"—युवतिः । बहुवचनमनुक्ततद्धितपरिग्रहार्थम्–"पृथिव्या ञाञौ", "अग्रादिपश्चाड्डिमच्" इत्येवमादि लब्धं भवति । तद्धितप्रदेशाः—"कृत्तद्धितसमासाश्च" इत्येवमादयः ॥

## यूनस्तिः ॥ ७७ ॥

युवन्शब्दात्प्रातिपदिकात्स्त्रियां तिः प्रत्ययो भवति, स च तद्धितसंज्ञो भवति । ङीपोऽपवादः । युवतिः ॥

## अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ॥ ७८ ॥

गोत्रे यावणिञौ विहितावनार्षौ तदन्तयोः प्रातिपदिकयोर्गुरूपोत्तमयोः स्त्रियां ष्यङादेशो भवति । 'निर्दिश्यमानस्यादेशा भवन्ति' इत्यणिञोरेव विज्ञायते, न तु समुदायस्य । ङकारः सामान्यग्रहणार्थः । षकारस्तदविघातार्थः–"यङश्चाप्" इति । उत्तमशब्दः स्वभावात् त्रिप्रभृतीनामन्त्यमक्षरमाह । उत्तमस्य समीपमुपोत्तमम्, गुरु उपोत्तमं यस्य तद्गुरूपोत्तमं प्रातिपदिकम् । करीषस्येव गन्धोऽस्य करीषगन्धिः, कुमुदगन्धिः, "तस्यापत्यम्" इत्यण्, तस्य ष्यङादेशः–कारीषगन्ध्या, कौमुदगन्ध्या । वराहस्यापत्यम्, "अत इञ्" वाराहिः, तस्य ष्यङादेशः–वाराह्या, बालाक्या । अणिञोरिति किम् ? ऋतभागस्यापत्यम्, बिदादित्वादञ्, आर्त्तभागी । गुरूपोत्तमादिकं सर्वमस्तीति न त्वणिञौ । "टिड्ढाणञ्"(१) इति ङीबेव भवति । अनार्षयोरिति किम् ? वाशिष्ठी, वैश्वामित्री । गुरूपोत्तमयोरिति किम् ? औपगवी, कापटवी । गोत्र इति किम् ? "तत्र जातः"—आहिच्छत्री, कान्यकुब्जी ॥

## गोत्रावयवात् ॥ ७९ ॥

अणिञोरित्येव । गोत्रायवा गोत्राभिमताः कुलाख्याः पुणिकभुणिकमुखरप्रभृतयः, ततो गोत्रे विहितयोरणिञोः स्त्रियां ष्यङादेशो भवति । अगुरूपोत्तमार्थ आरम्भः । पौणिक्या । भौणिक्या । मौखर्या । येषां त्वनन्तरापत्येऽपीष्यते दैवदत्त्या याज्ञदत्त्येति ते क्रौड्यादिषु द्रष्टव्याः ॥

---

आवट्याच्च—आवट्य शब्द से भी स्त्रीलिंग में चाप् प्रत्यय होता है ।

तद्धिताः—यहाँ से तद्धित संज्ञा का अधिकार है ।

यूनस्तिः—युवन् शब्द से स्त्रीत्वविवक्षा में तद्धितसंज्ञक ति प्रत्यय होता है ।

अणिञोः—अनार्ष गोत्रविहित जो अण् तथा इञ् प्रत्यय तदन्त गुरूपोत्तम प्रातिपदिकों को स्त्रीत्वविवक्षा में ष्यङ् आदेश हो जाता है ।

गोत्रावयवात्—गोत्र में विहित जो अण् तथा इञ् प्रत्यय तदन्त कुलवाचक पुणिक, भुणिक, मुखर आदि प्रातिपदिकों से विहित अण् तथा इञ् का स्त्रीत्वविवक्षा में ष्यङ् आदेश हो जाता है ।

(१) टिड्ढाणञित्यादि–प्राप्तिमात्राभिप्रायेणैतदुक्तम्, अत्र हि जातित्वाच्छार्ङ्गरवादीति ङीना भाव्यम् ।

## क्रौड्यादिभ्यश्च ॥ ८० ॥

क्रौडि इत्येवमादिभ्यश्च स्त्रियां ष्यङ् प्रत्ययो भवति। अगुरूपोत्तमार्थ आरम्भः, अनणिजर्थश्च। क्रौड्या। लाड्या। क्रौडि। लाडि। व्याडि। आपिशलि। आपक्षिति। चौपयत। चैटयत। शैकयत। बैल्वयत। वैकल्पयत। सौधातकि। सूत, युवत्याम्। भोज, क्षत्रिये। भौरिकि। भौलिकि। शाल्मलि। शालास्थलि। कापिष्ठलि। गौलक्ष्य। गौकक्ष्य ॥

## (१)दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योऽन्यतरस्याम् ॥ ८१ ॥

दैवयज्ञि, शौचिवृक्षि, सात्यमुग्रि, काण्ठेविद्धि इत्येतेषामन्यतरस्यां ष्यङ् प्रत्ययो भवति। इञन्ता एते, गोत्रग्रहणं च नानुवर्त्तते। तेन उभयत्र विभाषेयम्। गोत्रे पूर्वेण ष्यङादेशः प्राप्तो विकल्प्यते। अगोत्रे त्वनन्तरेऽपत्ये पक्षे विधीयते। तेन मुक्ते "इतो मनुष्यजातेः" इति ङीषेव भवति—दैवयज्ञ्या, दैवयज्ञी। शौचिवृक्ष्या, शौचिवृक्षी। सात्यमुग्र्या, सात्यमुग्री। काण्ठेविद्ध्या, काण्ठेविद्धी ॥

## समर्थानां प्रथमाद्वा ॥ ८२ ॥

त्रयमप्यधिक्रियते—समर्थानामिति प्रथमादिति च वेति च, स्वार्थिकप्रत्ययावधिश्चाय-मधिकारः "प्राग्दिशो विभक्तिः" इति यावत्। स्वार्थिकेषु ह्यस्योपयोगो नास्ति, विकल्पोऽपि तत्रानवस्थितः। केचिन्नित्यमेव भवन्ति। लक्षणवाक्यानि—"तस्यापत्यम्", "तेन रक्तं रागात्," "तत्र भवः" इत्येवमादीनि भविष्यन्ति। तेषु सामर्थ्ये सति प्रथमनिर्दिष्टादेव विकल्पेन प्रत्ययो भवतीति वेदितव्यम्। समर्थानामिति निर्द्धारणे षष्ठी। समर्थानां मध्ये प्रथमः प्रत्ययप्रकृतित्वेन निर्द्धार्यते। तस्येति सामान्यं विशेषलक्षणार्थम्, तदीयं प्राथम्यं विशेषाणां विज्ञायते। उपगोरपत्यम् औपगवः। समर्थानामिति किम्? कम्बलमुपगोः, अपत्यं देवदत्तस्य। प्रथमादिति किम्? षष्ठ्यन्ताद्यथा स्यात् प्रथमान्तान्मा भूत्। वेति किम्? वाक्यमपि यथा स्यात्—उपगोरपत्यमिति। यद्येवं समासवृत्तिस्तद्धितवृत्त्या बाध्येत—उपग्वपत्यमिति? नैष दोषः। पूर्वसूत्रादन्यतरस्यांग्रहणमनुवर्त्तते, तेनैतदपि भविष्यति ॥

## प्राग्दीव्यतोऽण् ॥ ८३ ॥

"तेन दीव्यति" इति वक्ष्यति। तदेकदेशो दीव्यच्छब्दोऽवधित्वेन गृह्यते, प्राग्दीव्य-त्संशब्दनाद् यानित ऊर्ध्वमनुक्रमिष्यामोऽण्प्रत्ययस्तत्र भवतीति वेदितव्यम्। अधिकारः परिभाषा विधिर्वेति त्रिष्वपि दर्शनेष्वपवादविषयं परिहृत्याण् प्रवर्त्तते। वक्ष्यति—"तस्या-पत्यम्"—औपगवः, कापटवः ॥

## अश्वपत्यादिभ्यश्च ॥ ८४ ॥

अश्वपत्यादिभ्यः प्रातिपदिकेभ्यः प्राग्दीव्यतीयेष्वर्थेष्वण् प्रत्ययो भवति। पत्युत्त-

---

**क्रौड्यादिभ्यः**—क्रौडि आदि प्रातिपदिकों से स्त्रीत्वविवक्षा में ष्यङ् प्रत्यय होता है।

**दैवयज्ञि**—दैवयज्ञि, शौचिवृक्षि, सात्यमुग्रि तथा काण्ठेविद्धि शब्दों से स्त्रीत्वविवक्षा में ष्यङ् प्रत्यय होता है।

**समर्थानाम्**—अब 'समर्थानाम्', 'प्रथमात्' तथा 'वा' का अधिकार है।

**प्राग्**—यहाँ से उत्तर 'दीव्यत्' शब्द से पूर्व अण् प्रत्यय होता है—यह समझना चाहिए।

**अश्व**—अश्वपति आदि शब्दों से प्राग्दीव्यतीय अर्थों में अण् प्रत्यय होता है।

---

(१) देवा यज्ञा यष्टव्या अस्य देवयज्ञः। शुचिर्वृक्षोऽस्य शुचिवृक्षः। सत्यमुग्रमस्य सत्यमुग्रः। कण्ठे विद्धमस्य कण्ठे वा विद्धः कण्ठेविद्धः।

रपदाण्ण्यं वक्ष्यति, तस्यापवादः। आश्वपतम्। शातपतम्। अश्वपति। शतपति। धनपति। गणपति। राष्ट्रपति। कुलपति। गृहपति। धान्यपति। पशुपति। धर्मपति। सभापति। प्राणपति। क्षेत्रपति (१)॥

## दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः॥ ८५॥

प्राग्दीव्यत इत्येव। दिति, अदिति, आदित्य इत्येतेभ्यः पत्युत्तरपदाच्च प्रातिपदिकात्प्राग्दीव्यतीयेष्वर्थेषु ण्यः प्रत्ययो भवति। दैत्यः। आदित्यः। पत्युत्तरपदात्-प्राजापत्यम्, सैनापत्यम्। ॐयमाच्चेति वक्तव्यम्ॐ। याम्यम्। ॐवाङ्मतिपितृमतां छन्दस्युपसंख्यानम्ॐ। वाच्यम्। मात्यम्। पैतृमत्यम्। ॐपृथिव्या ञाञौॐ। पार्थिवा। पार्थिवी। ॐदेवाद्यञञौॐ। दैव्यम्। दैवम्। ॐबहिषष्टिलोपश्चॐ। बाह्यः। ॐईकक्चॐ। बाहीकः। ॐईकञ् छन्दसिॐ। बाहीकः। स्वरे विशेषः। टिलोपवचनमव्ययानां भमात्रे टिलोपस्यानित्यत्वज्ञापनार्थम्—आरातीयः। ॐस्थाम्नोऽकारःॐ। अश्वत्थामः। ॐलोम्नोऽपत्येषु बहुषुॐ। उडुलोमाः। शरलोमाः बहुष्विति किम्? औडुलोमिः, शारलोमिः। ॐसर्वत्र गोरजादिप्रत्ययप्रसङ्गे यत्ॐ। गव्यम्। अजादिप्रत्ययप्रसङ्ग इति किम्? गोभ्यो हेतुभ्य आगतं गोरूप्यम्, गोमयम्। ॐण्यादयोऽर्थविशेषलक्षणादपवादात्पूर्वविप्रतिषेधेनॐ। दितेरपत्यं दैत्यः। वनस्पतीनां समूहो वानस्पत्यम्। कथं दैतेयः? दितिशब्दात् 'कृदिकारादक्तिनः,' 'सर्वतोऽक्तिन्नर्थादित्येके' इति ङीषं कृत्वा "स्त्रीभ्यो ढक्" क्रियते, (२)लिङ्गविशिष्टपरिभाषा चानित्या॥

## उत्सादिभ्योऽञ्॥ ८६॥

प्राग्दीव्यत इत्येव। उत्सादिभ्यः प्राग्दीव्यतीयेष्वर्थेष्वञ् प्रत्ययो भवति। अणस्तदपवादानां च बाधकः। औत्सः। औदपानः। उत्स। उदपान। विकर। विनोद। महानद। महानस। महाप्राण। तरुण। तलुन। वष्कयाऽसे। धेनु। पृथिवी। पङ्क्ति।

---

**दित्यदित्या**—दिति, अदिति, आदित्य तथा पत्युत्तरपदक प्रातिपदिकों से प्राग्दीव्यतीय अर्थों में ण्य प्रत्यय होता है।

**यमाच्चेति**—यम शब्द से भी ण्य प्रत्यय समझना चाहिए।

**वाङ्मति**—वेद में वाक्, मति तथा पितृमत शब्दों से भी ण्य प्रत्यय समझना चाहिए

**पृथिव्याः**—पृथिवी शब्द से ञ तथा अञ् प्रत्यय होते हैं—ऐसा समझना चाहिए।

**देवात**—देव शब्द से यञ् तथा अञ् प्रत्ययों का विधान समझना चाहिए।

**बहिषः**—बहिस् शब्द से अञ् प्रत्यय तथा टिलोप समझना चाहिए।

**ईकक् च**—बहिस् शब्द से ईकक् प्रत्यय भी अवगन्तव्य है।

**ईकञ्**—वेद में ईकञ् प्रत्यय भी समझना चाहिए।

**स्थाम्नः**—स्थामन् शब्दान्त प्रातिपदिक से अ प्रत्यय समझना चाहिए।

**लोम्नः**—लोमन् शब्द से बहुत्वविशिष्ट अपत्य अर्थ में अ प्रत्यय का विधान अवगन्तव्य है।

**सर्वत्र**—अच् आदि प्रत्ययों के प्रसंग में गो शब्द से अपत्य तथा अनपत्य अर्थों में यत् प्रत्यय होता है।

**ण्यादयः**—अर्थविशेषनिमित्तक प्रत्ययों के प्रसंग में पूर्वविप्रतिषेध के कारण ण्य आदि प्रत्यय ही होते है।

**उत्सादिभ्यः**—उत्स आदि शब्दों से प्राग्दीव्यतीय अर्थों में अञ् प्रत्यय होता है।

---

(१) स्थानपति, यज्ञपति, धन्वपति, अधिपति, बन्धुपति, एते शब्दाः क्वचिधिकाः।

(२) विधानसामर्थ्यादेव टिलोपाभाव इत्यधिकं पुस्तकान्तरे।

जगती । त्रिष्टुप् । अनुष्टुप् । जनपद । भरत । उशीनर । ग्रीष्म । पीलु । कुल । उदस्थान, देशे । पृष, दंशे । भल्लकीय । रथन्तर । मध्यंदिन । बृहत् । महत् । सत्वन्तु । सच्छब्दो मतुबन्त आगतनुम्को गृह्यते—सत्वन्त्विति । कुरु । पञ्चाल । इन्द्रावसान । उष्णिक् । ककुप् । सुवर्ण । देव । ॐग्रीष्मादच्छन्दसीति वक्तव्यम्ॐ इह मा भूत्—ग्रैष्मी त्रिष्टुप् । छन्दश्चेह वृत्तं गृह्यते, न वेदः ॥

## स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ॥ ८७ ॥

"धान्यानां भवने" इति वक्ष्यति । तस्य प्रागित्यनेनैव सम्बन्धः । प्राग्भवनसंशब्दनाद्येऽर्थास्तेषु स्त्रीशब्दात् पुंस्शब्दाच्च यथाक्रमं नञ्स्नञौ प्रत्ययौ भवतः । स्त्रीषु भवं स्त्रैणम् । पौंस्नम् । स्त्रीणां समूहः स्त्रैणम् । पौंस्नम् । स्त्रीभ्य आगतं स्त्रैणम् । पौंस्नम् । स्त्रीभ्यो हितं स्त्रैणम् । पौंस्नम् "स्त्रियाः पुंवत्" इति ज्ञापकाद्वत्यर्थे न भवति । योगापेक्षं च ज्ञापकमिति स्त्रीवदित्यपि सिद्धम् ॥

## द्विगोर्लुगनपत्ये ॥ ८८ ॥

प्राग्दीव्यत इति वर्त्तते न भवनादिति । द्विगोरिति षष्ठी । द्विगोर्यः सम्बन्धी निमित्तत्वेन तद्धितः प्राग्दीव्यतीयोऽपत्यप्रत्ययं वर्जयित्वा तस्य लुग्भवति । पञ्चसु कपालेषु संस्कृतः पञ्चकपालः । दशकपालः । द्वौ वेदावधीयते द्विवेदः । त्रिवेदः । अनपत्य इति किम् ? द्वैदेवदत्तिः, त्रैदेवदत्तिः । प्राग्दीव्यत इत्येव—द्वैपारायणिकः । द्विगुनिमित्तविज्ञानादिह न भवति—पञ्चकपालस्येदं पाञ्चकपालम् । अथवा द्विगोरेवायं लुग्विधीयते, द्विगोरिति स्थानषष्ठी । ननु च प्रत्ययादर्शनस्यैषा संज्ञा ? सत्यमेतत् । उपचारेण तु लक्षणया द्विगुनिमित्तभूतः प्रत्यय एव द्विगुस्तस्य लुग्भवति । द्विगुनिमित्तकोऽपि तर्हि गुणकल्पनया कस्मान्न द्विगुरुच्यते—पाञ्चकपालमिति ? न तस्य द्विगुत्वे निमित्तम्, इतरस्तु द्विगुत्वस्यैव निमित्तमित्यस्ति विशेषः । यद्येवमिह कथम्—पञ्चकपाल्यां संस्कृतः पञ्चकपाल इति ? नैवात्र तद्धित उत्पद्यते, वाक्यमेव भवति, त्रैशब्द्यं हि साध्यम्—पञ्चसु कपालेषु संस्कृतः, पञ्चकपाल्यां संस्कृतः, पञ्चकपाल इति । तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः, अपरस्मादुत्पत्तिर्भविष्यति । अथेह कस्मान्न भवति—पञ्चभ्यो गर्गेभ्य आगतं पञ्चगर्गरूप्यम्, पञ्चगर्गमयमिति ? वेत्यनुवर्त्तते । सा च व्यवस्थितविभाषा विज्ञायते ॥

## गोत्रेऽलुगचि ॥ ८९ ॥

प्राग्दीव्यत इत्येव । "यस्कादिभ्यो गोत्रे" इत्यादिना येषां गोत्रप्रत्ययानां लुगुक्तस्तेषामजादौ प्राग्दीव्यतीये विषयभूते प्रतिषिद्ध्यते । गर्गाणां छात्रा गार्गीयाः । वात्सीयाः । आत्रेयीयाः । खारपायणीयाः । गोत्र इति किम् ? कौवलम्, वादरम् । अचीति किम् ? गर्गेभ्य आगतम् गर्गरूप्यम्, गर्गमयम् । प्राग्दीव्यत इत्येव—गर्गेभ्यो हितम् गार्गीयम् । गोत्रस्य बहुषुलोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुक् । बिदानामपत्यं युवा युवानौ बैदः, बैदौ । बिदशब्दात् अत इञि कृते तस्य च इञः "यञञोश्च"—"ण्यक्षत्रियार्षञितः" इति लुकि रूपम् । एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि । बैदस्य बैदयोर्वाऽपत्यं बहवो माणवकाः बिदाः । नद्यत्रास्ति बहुषूत्पन्नः ॥

---

ग्रीष्मात्—ग्रीष्म शब्द से छन्दोभिन्न विषय में अञ् प्रत्यय समझना चाहिए।

स्त्रीपुंसाभ्याम्—स्त्री तथा पुंस् शब्दों से 'धान्यानां भवने' से पूर्व निर्दिष्ट अर्थों में क्रमशः नञ् तथा स्नञ् प्रत्यय होते हैं।

द्विगोः—अपत्यप्रत्यय से भिन्न द्विगुनिमित्तक तद्धित प्रत्ययों का लुक् हो जाता है।

गोत्रे—'यस्कादिभ्यो गोत्रे' सूत्र से जिन गोत्रप्रत्ययों का लुक् विहित है उन प्रत्ययों का अजादि प्राग्दीव्यतीय प्रत्यय के विधान के बुद्धिस्थ होने पर लुक् नहीं होता है।

## यूनि लुक् ॥ ९० ॥

प्राग्दीव्यत इति वर्त्तते, अचीति च। प्राग्दीव्यतीयेऽजादौ प्रत्यये विवक्षिते बुद्धिस्थेऽनुत्पन्न एव युवप्रत्ययस्य लुग्भवति। तस्मिन्निवृत्ते सति यो यतः प्राप्नोति स ततो भवति। फाण्टाहतस्यापत्यं फाण्टाहतिः, तस्यापत्यं युवा, "फाण्टाहृतिमिमताभ्यां णफिञौ"—फाण्टाहृतः, तस्य छात्रा इति विवक्षितेऽर्थे बुद्धिस्थे युवप्रत्ययस्य लुग्भवति, तस्मिन्निवृत्ते इञन्तं प्रकृतिरूपं संपन्नम्, तस्मात् "इञश्च" इत्यण् भवति-फाण्टाहृताः। भागवित्तस्यापत्यं भागवित्तिः, तस्यापत्यं युवा, "वृद्धाट्ठक् सौवीरेषु बहुलम्" इति ठक्—भागवित्तिकः, तस्य छात्राः, पूर्ववद् युवप्रत्यये निवृत्ते 'इञश्च' इत्यञ्—भागवित्ताः। तिकस्यापत्यम् "तिकादिभ्यः फिञ्"—तैकायनिः, तस्यापत्यं युवा, "फेश्छ च" इति छः—तैकायनीयः, तस्य छात्राः, युवप्रत्यये निवृत्ते, "वृद्धाच्छः"—तैकायनीयाः। कपिञ्जलादस्यापत्यं कापिञ्जलादिः, तस्यापत्यं युवा, "कुर्वादिभ्यो ण्यः"—कापिञ्जलाद्यः, तस्य छात्राः, ण्ये निवृत्ते, "इञश्च"इत्यण्—कापिञ्जलादाः। ग्लुचुकस्यापत्यम्, "प्राचामवृद्धात् फिन् बहुलम्" इति ग्लुचुकायनिः तस्यापत्यं युवा, "प्राग्दीव्यतोऽण्"—ग्लौचुकायनः, तस्य छात्राः, युवप्रत्यये निवृत्ते स एवाण्—ग्लौचुकायनाः। अचीत्येव—फाण्टाहृतरूप्यम्, फाण्टाहृतमयम्। प्राग्दीव्यत इत्येव—भागवित्तिकाय हितं भागवित्तिकीयम् ॥

## फक्फिञोरन्यतरस्याम् ॥ ९१ ॥

यूनीत्येव। पूर्वसूत्रेण नित्ये लुकि प्राप्ते विकल्प उच्यते। फक्फिञोर्युवप्रत्यययोः प्राग्दीव्यतीयेऽऽजादौ प्रत्यये विवक्षितेऽन्यतरस्यां लुग्भवति। गर्गादिभ्यो यञि कृते "यञिञोश्च" इति फक्—गार्ग्यायणः, तस्य छात्राः गार्गीयाः, गार्ग्यायणीयाः। वात्सीयाः, वात्स्यायनीयाः। फिञः खल्वपि-यस्कस्यापत्यम्—"शिवादिभ्योण्"—यास्कः, तस्यापत्यं युवा "अणो द्व्यचः" इति फिञ्—यास्कायनिः, तस्य छात्राः यास्कीयाः, यास्कायनीयाः ॥

## तस्यापत्यम् ॥ ९२ ॥

अर्थनिर्देशोऽयम् पूर्वैरुत्तरैश्च प्रत्ययैरभिसंबध्यते। तस्येति षष्ठीसमर्थादपत्यमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। प्रकृत्यर्थविशिष्टष्षष्ठ्यर्थोऽपत्यमात्रञ्चेह गृह्यते। लिङ्गवचनादिकमन्यत्सर्वमविवक्षितम्। उपगोरपत्यमौपगवः। आश्वपतः। दैत्यः। औत्सः। स्त्रैणः। पौंस्नः ॥

तस्येदमित्यपत्येऽपि बाधनार्थं कृतं भवेत्।
उत्सर्गः शेष एवासौ वृद्धान्यस्य प्रयोजनम् ॥

भानोरपत्यं भानवः। श्यामगवः ॥

## एको गोत्रे ॥ ९३ ॥

अपत्यं पौत्रप्रभृति गोत्रम्, तस्मिन् विवक्षिते भेदेन प्रत्यपत्यं प्रत्ययोत्पत्तिप्रसङ्गे नियमः क्रियते-गोत्रे एक एव प्रत्ययो भवति, सर्वेऽपत्येन युज्यन्ते। अपतनादपत्यम्, योऽपि

---

यूनि—प्राग्दीव्यतीयार्थक अजादि प्रत्यय के विधान के बुद्धिस्थ होने पर युव प्रत्यय का लुक् हो जाता है।

फक्—प्राग्दीव्यतीयार्थक अजादि प्रत्यय के विधान के बुद्धिस्थ होने पर फक् तथा फिञ् इन दोनों युवप्रत्ययों का विकल्प से लुक् होता है।

तस्यापत्यम्—षष्ठीसमर्थ से अपत्यार्थ में यथाविहित प्रत्यय होते हैं।

एको—गोत्र में एक ही अपत्यप्रत्यय होता है।

व्यवहितेन जनितः सोऽपि प्रथमप्रकृतेरपत्यं भवत्येव। गर्गस्यापत्यं गार्गिः। गार्गेरपत्यं गार्ग्यः। तत्पुत्रोऽपि गार्ग्यः। सर्वस्मिन् व्यवहितजनितेऽपि गोत्रापत्ये गर्गशब्दाद् यञेव भवतीति प्रत्ययो नियम्यते। अथवा गोत्रापत्ये विवक्षिते एक एव शब्दः प्रथमा प्रकृतिः प्रत्ययमुत्पादयतीति प्रकृतिर्नियम्यते—गार्ग्यः, नाडायनः॥

## गोत्राद्यून्यस्त्रियाम् ॥ ९४ ॥

अयमपि नियमः। यून्यपत्ये विवक्षिते गोत्रादेव प्रत्ययो भवति न परमप्रकृत्यनन्तरयुवभ्यः। गार्ग्यस्यापत्यं युवा गार्ग्यायणः। वात्स्यायनः। दाक्षायणः। प्लाक्षायणः। औपगविः। नाडायनिः। अस्त्रियामिति किम्? दाक्षी, प्लाक्षी। किं पुनरत्र प्रतिषिद्ध्यते? यदि नियमः, स्त्रियाम् अनियमः प्राप्नोति। अथ युवप्रत्ययः, स्त्रियां गोत्रप्रत्ययेनाभिधानं न प्राप्नोति, गोत्रसंज्ञाया युवसंज्ञया बाधितत्वात्। तस्माद्योगविभागः कर्तव्यः—"गोत्राद्यूनि प्रत्ययो भवति", ततः "अस्त्रियाम्"। यूनि यदुक्तं तत् स्त्रियां न भवति, युवसंज्ञैव प्रतिषिद्ध्यते, तेन स्त्री गोत्रप्रत्ययेनाभिधास्यते॥

## अत इञ् ॥ ९५ ॥

तस्यापत्यमित्येव। अकारान्तात् प्रातिपदिकादिञ् प्रत्ययो भवति अणोऽपवादः। दक्षस्यापत्यं दाक्षिः। तपकरणं किम्? शुभंयाः, कीलालपाः—इत्यतो मा भूत्। कथं 'प्रदीयतां दाशरथाय मैथिली'? शेषविवक्षया भविष्यति॥

## बाह्वादिभ्यश्च ॥ ९६ ॥

बाहु इत्येवमादिभ्यः शब्देभ्योऽपत्ये इञ् प्रत्ययो भवति। बाहविः। औपबाहविः। अनकारार्थ आरम्भः। क्वचिद्बाधकबाधनार्थः। बाहु। उपबाहु। विवाकु। शिवाकु। वटाकु। उपबिन्दु। वृक। चूडाला। मूषिका। बलाका। भगला। छगला। ध्रुवका। धुवका। सुमित्रा। दुर्मित्रा। पुष्करसद्। अनुहरत्। देवशर्मन्। अग्निशर्मन्। कुनामन्। सुनामन्। पञ्चन्। सप्तन्। अष्टन्। ॐअमितौजसः सलोपश्चॐ। उदञ्चु। शिरस्। शराविन्। क्षेमवृद्धिन्। शृङ्खलातोदिन्। खरनादिन्। नगरमर्दिन्। प्राकारमर्दिन्। लोमन्। अजीगर्त्त। कृष्ण। सलक। युधिष्ठिर। अर्जुन। साम्ब। गद। प्रद्युम्न। राम(१)। ॐउदङ्कः संज्ञायाम्ॐ। ॐसंभूयोम्भसोः सलोपश्चॐ। ॐबाह्वादिप्रभृतिषु येषां दर्शने गोत्रभावे लौकिके तत्रोऽन्यत्र तेषां प्रतिषेधःॐ। बाहुर्नाम कश्चित्तस्यापत्यं बाहवः।

---

**गोत्रात्**—युवार्थक अपत्य प्रत्यय के विवक्षित होने पर गोत्रप्रत्ययान्त से ही प्रत्यय होता है।

**अत इञ्**—अकारान्त प्रातिपदिक से अपत्यार्थ में इञ् प्रत्यय होता है।

**बाह्वादिभ्यः**—बाहु आदि शब्दों से भी अपत्यार्थ में इञ् प्रत्यय होता है।

**अमितौजसः**—अमितौजस् शब्द से इण् प्रत्यय तथा इसके अन्त्य सकार का लोप भी हो जाता है।

**उदङ्कः**—संज्ञा में उदङ्क शब्द से अपत्यार्थक इञ् प्रत्यय होता है।

**सम्भूयो**—सम्भूयस् तथा अम्भस् शब्दों से अपत्यार्थ में इञ् प्रत्यय तथा इनके सकार का लोप भी हो जाता है।

**बाह्वादि**—लौकिक गोत्र में बाहु आदि शब्दों से जिन प्रत्ययों की प्रसिद्धि है उन प्रत्ययों से भिन्न प्रत्ययों का प्रतिषेध समझना चाहिए।

---

(१) निवाकु। अवाकु। बिन्दु। चूडा। वृकला। भद्रशर्मन्। सुशर्मन्। सुधावन्। माष। एते शब्दाः क्वचिदुपलब्धा अत्र।

ॐसंबन्धिशब्दानां च तत्सदृशात् प्रतिषेधः ॐ। संज्ञाश्वशुरस्यापत्यं श्वाशुरिः(१)। चकारोऽनुक्तसमुच्चयार्थः आकृतिगणतामस्य बोधयति—जाम्बिः, ऐन्द्रशर्मिः, आजधेनविः, आजबन्धविः, औडुलोमिः॥

## सुधातुरकङ् च ॥ ९७ ॥

सुधातृशब्दादपत्ये इञ् प्रत्ययो भवति, तत्सन्नियोगेन च तस्याऽकङादेशो भवति। सुधातुरपत्यं सौधातकिः। ॐव्यासवरुडनिषादचण्डालबिम्बानामिति वक्तव्यम्ॐ। वैयासकिः। वारुडकिः। नैषादकिः। चाण्डालकिः। वैम्बकिः॥

## गोत्रे कुञ्जादिभ्यश्च्फञ् ॥ ९८ ॥

तस्यापत्यमित्येव। गोत्रसंज्ञकेऽपत्ये वाच्ये कुञ्जादिभ्यश्च्फञ् प्रत्ययो भवति। इञोऽपवादः। चकारो विशेषणार्थः "व्रातच्फञोरस्त्रियाम्" इति। ञकारो वृद्ध्यर्थः। कौञ्जायन्यः, कौञ्जायन्यौ, कौञ्जायनाः। व्राध्नायन्यः, व्राध्नायन्यौ, व्राध्नायनाः। गोत्र इति किम्? कुञ्जस्यापत्यमनन्तरं कौञ्जिः। एकवचनद्विवचनयोः सति शिष्टत्वाद् ञित्स्वरेणैव भवितव्यम्। बहुवचने तु कौञ्जायना इति परमपि ञित्स्वरं त्यक्त्वा चित्स्वर एवेष्यते। गोत्राधिकारश्च "शिवादिभ्योऽण्" इति यावत्। कुञ्ज। ब्रध्न। शङ्ख। भस्मन्। गण। लोमन्। शठ। शाक। शाकट। शुण्डा। शुभ। विपाश। स्कन्द। स्कम्भ(२)॥

## नडादिभ्यः फक् ॥ ९९ ॥

नड इत्येवमादिभ्यः प्रतिपदिकेभ्यो गोत्रापत्ये फक् प्रत्ययो भवति। नाडायनः। चारायणः। गोत्र इत्येव—नाडिः। शलङ्कु शलङ्कं चेत्यत्र पठ्यते—शालङ्कायनाः, पैलादिषु च शालङ्किशब्दः पठ्यते—शालङ्किः पिता, शालङ्किः पुत्त्रः। तत्कथम्? गोत्रविशेषे कौशिके फकं स्मरन्ति। इञेवान्यत्र—शालङ्किरिति। अथवा पैलादिपाठ एक ज्ञापक इञो भावस्य। नड। चर। बक। मुञ्ज। इतिक। इतिश। उपक। लमक। ॐशलङ्कु शलङ्कं चॐ। सप्तल। वाजप्य। तिक। अग्निशर्मन्। वृषगणे। प्राण। नर। सायक। दास। मित्त्र। द्वीप। पिङ्गर। पिङ्गल। किङ्कर। किङ्कल। कातर। कातल। काश्य। काश्यप। काव्य। अज। अमुष्य। ॐकृष्णरणौ ब्राह्मणवासिष्ठयोःॐ। अमित्त्र। लिगु। चित्र। कुमार। ॐक्रोष्टु क्रोष्टञ्चॐ। लोह। दुर्ग। स्तम्भ। शिंशपा। अग्र। तृण। शकट।

---

**सम्बन्धि**—श्वशुर आदि सम्बन्धिशब्दों से जिन प्रत्ययों का विधान किया गया है उन प्रत्ययों का विधान श्वसुर आदि संज्ञा-शब्दों से नहीं होता है।

**सुधातुः**—सुधातु शब्द से अपत्यार्थ में इञ् प्रत्यय होता है और उसके सन्नियोग में अकङ् आदेश भी हो जाता है।

**व्यास**—व्यास वरुड़, निषाद, चण्डाल तथा बिम्ब शब्दों से भी इञ् तथा अकङ् आदेश का विधान समझना चाहिए।

**गोत्रे**—गोत्र अर्थ में कुञ्ज आदि शब्दों से चफञ् प्रत्यय हो जाता है।

**नडादि**—नड़ आदि शब्दों से फक् प्रत्यय होता है।

**शलङ्कु**—शलङ्कु शब्द के स्थान में शलङ्क आदेश तथा फक् प्रत्यय भी होते हैं।

**कृष्ण**—ब्राह्मण तथा वाशिष्ठ अर्थों में कृष्ण तथा रण शब्दों से फक् प्रत्यय होता है।

**क्रोष्टु**—क्रोष्टृ शब्द से फक् प्रत्यय तथा उसके स्थान में क्रोष्ट आदेश भी हो जाता है।

---

(१) श्वाशुरिः इत्यस्यानन्तरं राजश्वशुरात् इति यत् न भवति इत्यधिकः पाठः क्वचित्।

(२) शुम्भा, शिव, शुभंया इति कचित् पाठोऽधिकः।

सुमनस् । सुमत । मितत । ऋक् । जत् । युगन्धर । हंसक । दण्डिन् । हस्तिन् । पञ्चाल । चमसिन् । सुकृत्य । स्थिरक । ब्राह्मण । चटक । बदर । अश्वक । खरप । कामुक । ब्रह्मदत्त । उदुम्बर । शोण । अलोह । दण्ड(१) ॥

## हरितादिभ्योऽञः ॥ १०० ॥

हरितादिर्बिदाद्यन्तर्गणः । हरितादिभ्योऽञन्तेभ्योऽपत्ये फञ् प्रत्ययो भवति । इञोऽपवादः । हरितस्यापत्यं हारितायनः । कैदासायनः । ननु च गोत्र इति वर्त्तते, न च गोत्राद् परो गोत्रप्रत्ययो भवति, "एको गोत्रे" इति वचनात् ? सत्यमेतत् । इह तु गोत्राधिकारेऽपि सामर्थ्याद्यनि प्रत्ययो विज्ञायते । गोत्राधिकारस्तूत्तरार्थः ॥

## यञिञोश्च ॥ १०१ ॥

यञन्तादिञन्ताच्च प्रातिपदिकादपत्ये फक् प्रत्ययो भवति । गार्ग्यायणः । वात्स्यायनः । इञन्तात्–दात्तायणः, प्लाक्षायणः । "द्वीपादनुसमुद्रं यञ्", "सुतङ्गमादिभ्य इञ्" इत्यतो न भवति, गोत्रग्रहणेन यञिञौ विशेष्येते । तदन्तात्तु यून्येवायं प्रत्ययः, "गोत्राद्यूनि" इति वचनात् ॥

## शरद्वच्छुनकदर्भाद् भृगुवत्साग्रायणेषु ॥ १०२ ॥

गोत्र इत्येव । शरद्वत, शुनक, दर्भ इत्येतेभ्यो गोत्रापत्ये फक् प्रत्ययो भवति यथासंख्यं भृगुवत्साग्रायणेष्वर्थेष्वपत्यविशेषेषु । शारद्वतायनो भवति भार्गवश्चेत्, शारद्वतोऽन्यः । शौनकायनो भवति वात्स्यश्चेत्, शौनकोऽन्यः । दार्भायणो भवति आग्रायणश्चेत्, दार्भिरन्यः । शरद्वच्छुनकशब्दौ बिदादी, ताभ्यामञोऽपवादः फक् ॥

## द्रोणपर्वतजीवन्तादन्यतरस्याम् ॥ १०३ ॥

गोत्र इत्येव । द्रोणादिभ्यः प्रातिपदिकेभ्यो गोत्रापत्येऽन्यतरस्यां फक् प्रत्ययो भवति । इञोऽपवादः । द्रौणायनः, द्रौणिः । पार्वतायनः, पार्वतिः । जैवन्तायनः, जैवन्तिः । कथमनन्तरोऽश्वत्थामा द्रौणायन इत्युच्यते ? नैवात्र महाभारतद्रोणो गृह्यते, किं तर्ह्यनादिः । तत इदं गोत्रे प्रत्ययविधानम् । इदानीं श्रुतिसामान्यादध्यारोपेण तथाभिधानं भवति ॥

## अनृष्यानन्तर्ये बिदादिभ्योऽञ् ॥ १०४ ॥

गोत्र इत्येव । बिदादिभ्यो गोत्रापत्येऽञ्प्रत्ययो भवति । बैदः । और्वः । ये पुनरत्रानृषिशब्दाः पुत्रादयस्तेभ्योऽनन्तरापत्ये एव भवति—पौत्रः, दौहित्रः । अनृष्यानन्तर्ये इत्यस्यायमर्थः–अनृषिभ्योऽनन्तरे भवतीति । यद्ययमर्थः, ऋष्यपत्ये नैरन्तर्यप्रतिषेधो न कृतः

---

**हरितादिभ्यः**—अञ्प्रत्ययान्त हरित आदि शब्दों से अपत्यार्थ में फञ् प्रत्यय होता है ।

**यञिञोश्च**—यञन्त तथा इञन्त प्रातिपदिक से अपत्यार्थ में फक् प्रत्यय होता है ।

**शरद्वत्**—भृगु, वत्स तथा आग्रायण इन अर्थों में क्रमशः वर्त्तमान शरद्वत, शुनक तथा दर्भ शब्दों से गोत्रापत्य में फक् प्रत्यय होता है ।

**द्रोण**—द्रोण, पर्वत तथा जीवन्त शब्दों से गोत्रापत्य में विकल्प से फक् प्रत्यय होता है ।

**अनृष्यानन्तर्ये**—बिदादि से गोत्रापत्य में अञ् प्रत्यय होता है और इनमें जो अनृषि शब्द हैं उनसे आनन्तर्य अर्थ में ही प्रत्यय होता है ।

---

(१) एक, वानव्य, शावक, नाव्य, अन्वजत्, अन्तजन, इत्वरा, अशक, अश्वला, भध्वरा, दण्ड्य—एते क्वचिदधिका उपलभ्यन्ते ।

स्यात्, तत्रेदं न सिद्ध्यति—'(१)इन्द्रभूः सप्तमः काश्यपानाम्'? अनन्तरापत्यरूपेणैव ऋष्यणाभिधानं भविष्यति। अवश्यं चैतदेवं विज्ञेयम्। ऋष्यपत्ये नैरन्तर्यविषये प्रतिषेधे विज्ञायमाने कौशिकः, विश्वामित्र इति दुष्यति। गोत्र इत्येव—बैदिः। ननु च ऋष्यणा भवितव्यम्? बाह्वादिराकृतिगणः, तेनेञेव भवति। बिद। उर्व। कश्यप। कुशिक। भरद्वाज। उपमन्यु। किलालप। किदर्भ। विश्वानर। ऋष्टिषेण। ऋतभाग। हर्यश्व। प्रियक। आपस्तम्ब। कूचवार। शरद्वत्। शुनक। धेनु। गोपवन। शिग्रु। बिन्दु। भाजन। अश्वावतान। श्यामाक। श्यमाक। श्यापर्ण। हरित। किन्दास। वह्यस्क। अर्कलूष। वध्योष। विष्णुवृद्ध। प्रतिबोध। रथन्तर। रथीतर। गविष्ठिर। निषाद। मठर। मृद। पुनर्भू। पुत्र। दुहितृ। ननान्द। ❀परस्त्री परशुञ्च(२)❀॥

## गर्गादिभ्यो यञ्॥ १०५॥

गोत्र इत्येव। गर्गादिभ्यो गोत्रापत्ये यञ् प्रत्ययो भवति। गार्ग्यः। वात्स्यः। मनुशब्दोऽत्र पठ्यते, तत्र कथं मानवी प्रजा? गोत्र इत्युच्यते, अपत्यसामान्ये भविष्यति। कथमनन्तरो रामो जामदग्न्यः, व्यासः पाराशर्य इति? गोत्ररूपाध्यारोपेण भविष्यति। अनन्तरापत्यविवक्षायां तु ऋष्यणैव भवितव्यम्—जामदग्नः, पाराशर इति। गर्ग। वत्स। ❀वाजाऽसे(३)❀। संकृति। अज। व्याघ्रपात्। विदभृत्। प्राचीनयोग। अगस्ति। पुलस्ति। रेभ। अग्निवेश। शङ्ख। शठ। धूम। अवट। चमस। धनञ्जय। मनस। वृक्ष। विश्वावसु। जनमान। लोहित। संशित। बभ्रु। मण्डु। मक्षु। अलिगु। शङ्कु। लिगु। गुलु। मन्तु। जिगीषु। मनु। तन्तु। मनायी। भूत। कथक। कष। तण्ड। वतण्ड। कपि। कत। कुरुकत। अनडुह। कण्व। शकल। गोकक्ष। अगस्त्य। कुण्डिन। यज्ञवल्क। उभय। जात। विरोहित। वृषगण। रहूगण। शण्डिल। वण। कचुलुक। मुद्गल। मुसल। पराशर। जतूकर्ण। मन्त्रित। संहित। अश्मरथ। शर्कराक्ष। पूतिमाष। स्थूण। अररक। पिङ्गल। कृष्ण। गोलुन्द। उलूक। तितिक्ष। भिषज्। भडित। भण्डित। दल्भ। चिकित। देवहू। इन्द्रहू। एकलू। पिप्पलू। बृदग्नि। जमदग्नि। सुलोभिन्। उकत्थ। कुटीगु॥(४)

## मधुबभ्र्वोर्ब्राह्मणकौशिकयोः॥ १०६॥

मधुशब्दाद् बभ्रुशब्दाच्च गोत्रापत्ये यञ् प्रत्ययो भवति यथासंख्यं ब्राह्मणे कौशिके च वाच्ये। माधव्यो भवति ब्राह्मणश्चेत्, माधव एवान्यः। बाभ्रव्यो भवति कौशिकश्चेत्, बाभ्रव एवान्यः। बभ्रुशब्दो गर्गादिषु पठ्यते, ततः सिद्धे यञि कौशिके नियमार्थं

---

**परस्त्री**—परस्त्री शब्द से अञ् प्रत्यय होता है तथा परस्त्री शब्द के स्थान में परशु आदेश भी हो जाता है।

**गर्गादिभ्यः**—गर्ग आदि शब्दों से गोत्रापत्यार्थ में यञ् प्रत्यय होता है।

**वाजाऽसे**—असमास में वाजशब्द से यञ् प्रत्यय होता है।

**मधु**—ब्राह्मण तथा कौशिक अर्थ में क्रमशः मधु एवम् बभ्रु शब्दों से यञ् प्रत्यय होता है।

---

(१) इन्द्रहूः इति पदमञ्जर्याम्, मित्रहूः इति च न्यासे पाठः।

(२) किलात, शम्बक, शावली, श्यायक, अलस—इत्यधिकः पाठः।

(३) असे इत्यस्याग्रे-असमासे। असे इति किम्? सौवाजिः इति पाठोऽधिकः।

(४) पथ, कन्थु, श्रुव, सुनु, कर्कटक, रुक्ष, तरुक्ष, तलुक्ष, प्रचुल, विलम्ब, विष्णुज—एते अत्राधिकाः पुस्तकान्तरे।

वचनम् । गर्गादिषु पाठोऽप्यन्तर्गणकार्यार्थः—"सर्वत्र लोहितादिकतन्तेभ्यः" इति—बाभ्रव्यायणी ॥

## कपिबोधादाङ्गिरसे ॥ १०७ ॥

कपिबोधशब्दाभ्यामाङ्गिरसेऽपत्यविशेषे गोत्रे यञ् प्रत्ययो भवति । काप्यः । बौध्यः । आङ्गिरस इति किम् ? कापेयः, बौधिः । कपिशब्दो गर्गादिषु पठ्यते, तस्य नियमार्थं वचनम्—आङ्गिरसे यथा स्यात् । लोहितादिकार्यार्थं गणे पाठः—काप्यायनी ॥

## वतण्डाच्च ॥ १०८ ॥

आङ्गिरस इत्येव । वतण्डशब्दादाङ्गिरसेऽपत्यविशेषे गोत्रे यञ् प्रत्ययो भवति । वातण्ड्यः । आङ्गिरस इति किम् ? वातण्डः । किमर्थमिदम्, यावता गर्गादिष्वयं पठ्यते ? शिवादिष्वप्ययं पठ्यते, तत्राङ्गिरसे शिवाद्यणोऽपवादार्थं पुनर्वचनम् । अनाङ्गिरसे तूभयत्र पाठसामर्थ्यात् प्रत्ययद्वयमपि भवति—वातण्ड्यः, वातण्डः ॥

## लुक् स्त्रियाम् ॥ १०९ ॥

आङ्गिरस इत्येव । वतण्डशब्दादाङ्गिरस्यां स्त्रियां यञ्प्रत्ययस्य लुग्भवति । लुकि-कृते शार्ङ्गरवादिपाठान्ङीन् भवति—वतण्डी । आङ्गिरस इति किम् ? वातण्ड्यायनी । शिवाद्यणि तु वातण्डी ॥

## अश्वादिभ्यः फञ् ॥ ११० ॥

आङ्गिरस इति निवृत्तम् । अश्वादिभ्यो गोत्रापत्ये फञ् प्रत्ययो भवति । आश्वायनः । आश्मायनः । ये त्वत्र प्रत्ययान्ताः पठ्यन्ते तेभ्यः सामर्थ्याद्यूनि प्रत्ययो विज्ञायते । अश्व । अश्मन् । शङ्ख । विद । पुट । रोहिण । खर्जूर । खर्जूल । पिञ्जूर । भडिल । भण्डिल । भडित । भण्डित । भण्डिक । प्रहृत । रामोद । क्षत्र । ग्रीवा । काश । गोलाङ्क्य । अर्क । स्वन । ध्वन । पाद । चक्र । कुल । पवित्र । गोमिन् । श्याम । धूम । धूम्र । वाग्मिन् । विश्वानर । कुट । वेश । (१)आत्रेय । नत्त । तड । नड । ग्रीष्म । अर्ह । विशम्य । विशाला । गिरि । चपल । चुनम् । दासक । वैल्य । धर्म । आनडुह्य । पुंसिजात । अर्जुन । शूद्रक । सुमनस् । दुर्मनस् । क्षान्त । प्राच्य । कित । काण । चुम्प । श्रविष्ठा । वीचय । पविन्दा । ॐआत्रेय भारद्वाजेॐ । कुत्स । आतव । कितव । शिव । खदिर । ॐ(२)भारद्वाज आत्रेये(३)ॐ ॥

---

**कपि**—कपि तथा बोध शब्दों से आङ्गिरस अर्थ में गोत्रापत्यार्थक यञ् प्रत्यय होता है ।

**वतण्डाच्च**—आङ्गिरस अर्थ में बतण्ड शब्द से गोत्रापत्यार्थक यञ् प्रत्यय होता है ।

**लुक्**—वतण्ड शब्द से विहित यञ् प्रत्यय का स्त्रीलिङ्ग में लुक् हो जाता है ।

**अश्वादिभ्यः**—अश्व आदि शब्दों से गोत्रापत्य के फञ् प्रत्यय होता है ।

**आत्रेय**—भारद्वाज अर्थ में आत्रेय शब्द से भी फञ् प्रत्यय समझना चाहिए ।

**भारद्वाज**—आत्रेयविशेष के अपत्यार्थ में भारद्वाज शब्द से भी फञ् प्रत्यय अवगन्तव्य है ।

---

(१) अस्य स्थाने पदमञ्जर्यां शय आत्रेये इति, न्यासे च शप आत्रेये इति गणसूत्रं दृश्यते ।

(२) यदा भारद्वाजगोत्रजेन जनेन अत्रिगोत्रोत्पन्नस्य पुत्रत्वेन स्वीकारः तदा प्रत्ययो विधीयते इति बोध्यम् । (श्रीना०)

(३) जन, वद, खड, खेड, जड, ओजस्—पुस्तकान्तरे अधिका एते शब्दाः ।

## भर्गात् त्रैगर्त्ते ॥ १११ ॥

भर्गशब्दादपत्यविशेषे त्रैगर्ते गोत्रे फञ् प्रत्ययो भवति । भार्गायणो भवति त्रैगर्त्तश्चेत्, भार्गिरन्यः ॥

## शिवादिभ्योऽण् ॥ ११२ ॥

गोत्र इति निवृत्तम् । अतः प्रभृति सामान्येन प्रत्यया विज्ञायन्ते । शिवादिभ्योऽपत्येऽण् प्रत्ययो भवति । यथायथमिञादीनामपवादः । शैवः । प्रौष्ठः । तक्षन्शब्दोऽत्र पठ्यते कारिलक्षणमुदीचामिञं बाधितुम् । ण्यप्रत्ययस्य तु बाधो नेष्यते-ताक्षणः, ताक्षण्यः । गङ्गाशब्दः पठ्यते तिकादिफिञा शुभ्रादिढका च समावेशार्थम् । तेन त्रैरूप्यं भवति-गाङ्गः, गाङ्गायनिः, गाङ्गेयः । विपाशशब्दः पठ्यते कुञ्जादिलक्षणेन च्फञा समावेशार्थम्-वैपाशः, वैपाशायन्यः । शिव । प्रौष्ठ । प्रौष्ठिक । चण्ड । जम्भ(१) । मुनि । सन्धि । भूरि । कुठार । अन(२)भिम्लान् । ककुत्स्थ । कहोड । लेख । रोध । खञ्जन । कोहड । पिष्ट । हेहय । खञ्जार । खञ्जाल । सुरोहिका । पर्ण । कहूष । परिल । वतण्ड । तृण । कर्ण । क्षीरहृद । जलहृद । परिषिक । जटिलिक । गोफिलिक । बधिरिका । मञ्जीरक । वृष्णिक । रेख । आलेखन । विश्रवण । रवण । वर्त्तनाक्ष । पिटक । पिटाक । तृक्षाक । नभाक । ऊर्णनाभ । जरत्कारु । उत्क्षिपा । रोहितिक । आर्यश्वेत । सुपिष्ठ । खर्ज्जूरकर्ण । मसूरकर्ण । तूणकर्ण । मयूरकर्ण । खडरक । तक्षन् । ऋष्टिषेण । गङ्गा । विपाश । यस्क । लह्य । द्रुघ । अयस्थूण । भलन्दन । विरूपाक्ष । भूमि । इला । सपत्नी । ॐद्व्यचो नद्याःॐ । ॐत्रिवेणी त्रिवणं च(३)ॐ ॥

## अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः ॥ ११३ ॥

"वृद्धिर्यस्याचामादिस्तद् वृद्धम्" । अवृद्धाभ्य इति शब्दधर्मः, नदीमानुषीभ्य इत्यर्थधर्मः, तेनाभेदात्प्रकृतयो निर्दिश्यन्ते । तन्नामिकाभ्य इति सर्वनाम्ना प्रत्ययप्रकृतेः प्रत्यवमर्शः । अवृद्धानि यानि नदीनां मानुषीणां च नामधेयानि तेभ्योऽपत्येऽण्प्रत्ययो भवति । ढकोऽपवादः । यमुनाया अपत्यं यामुनः । इरावत्या अपत्यम् ऐरावतः । वैतस्तः । नार्मदः । मानुषीभ्यः खल्वपि-शिक्षिताया अपत्यं शैक्षितः, चिन्तिताया अपत्यं चैन्तितः । अवृद्धाभ्य इति किम् ? चान्द्रभागाया अपत्यं चान्द्रभागेयः, वासवदत्तेयः । नदीमानुषीभ्य इति किम् ? सौपर्णेयः, वैनतेयः । तन्नामिकाभ्य इति किम् ? शोभनायाः शौभनेयः ॥

---

भर्गात्—भर्ग शब्द से गोत्रापत्य-विशेष त्रैगर्त्त अर्थ में फञ् प्रत्यय होता है ।

शिवादि—शिव आदि शब्दों से अपत्यार्थक अण् प्रत्यय होता है ।

द्व्यचो—नदीवाचक द्व्यच् प्रातिपदिक से अण् प्रत्यय होता है ।

त्रिवेणी—त्रिवेणी शब्द से अण् प्रत्यय तथा त्रिवेणी के स्थान में त्रिवण आदेश भी हो जाता है ।

अवृद्धाभ्यः—वृद्धसंज्ञकभिन्न नदीनाम तथा मनुष्यनाम के वाचक शब्दों से अपत्यार्थ में अञ् प्रत्यय होता है ।

---

(१) जम्भ इत्यस्य स्थाने भण्ड इति पाठान्तरम् ।

(२) अनभिग्लान इति पाठान्तरम् ।

(३) त्रिवेणी रेवाप्रभृतेस्तन्नामिकाणोपवादस्य द्व्यच इति ढकोऽपवाद इति क्वचिदधिकमुपलभ्यते । तथा अत्रान्येधिकाः शब्दा उपलभ्यन्ते, ते च यथा—कह्वय, कबोध, परल, ग्रीवाक्ष, गोभिलिक, राजल, तडाक, वडाक इति ।

## ऋष्यन्धकवृष्णिकुरुभ्यश्च ॥ ११४ ॥

ऋषयः प्रसिद्धा वसिष्ठादयः। अन्धकाः, वृष्णयः, कुरव इति वंशाख्याः। ऋष्यादिकुर्वन्तेभ्यः प्रातिपदिकेभ्योऽपत्येऽण्प्रत्ययो भवति। इञोऽपवादः। अत्र्यादिभ्यस्तु परत्वाड्ढगादिभिरेव भवितव्यम्। ऋषिभ्यस्तावत्—वासिष्ठः, वैश्वामित्रः। अन्धकेभ्यः—श्वाफल्कः, रान्धसः। वृष्णिभ्यः—वासुदेवः, आनिरुद्धः। कुरुभ्यः—नाकुलः, साहदेवः। कथं पुनर्नित्यानां शब्दानामन्धकादिवंशसमाश्रयणेनान्वाख्यानं युज्यते? केचिदाहुः—कथमपि काकतालीयन्यायेन कुर्वादिवंशेष्वसंकरेणैव नकुलसहदेवादयः शब्दास्सुबहवः संकलिताः, तानुपादाय पाणिनिना स्मृतिरुपनिबद्धेति। अथवाऽन्धकवृष्णिकुरुवंशा अपि नित्या एव, तेषु ये शब्दाः प्रयुज्यन्ते नकुलसहदेवादयस्तत्रेदं प्रत्ययविधानमित्यदोषः॥

## मातुरुत्संख्यासंभद्रपूर्वायाः ॥ ११५ ॥

मातृशब्दात्संख्यापूर्वात्संपूर्वाद्भद्रपूर्वाच्चापत्येऽण् प्रत्ययो भवति उकारश्चान्तादेशः। द्वयोर्मात्रोरपत्यं द्वैमातुरः। षाण्मातुरः। सांमातुरः। भाद्रमातुरः। उकारादेशार्थं वचनम्, प्रत्ययः पुनरुत्सर्गेणैव सिद्धः। स्त्रीलिङ्गनिर्देशोऽर्थापेक्षः, तेन धान्यमातुर्ग्रहणं न भवति। संख्यासंभद्रपूर्वाया इति किम्? सौमात्रः॥

## कन्यायाः कनीन च ॥ ११६ ॥

कन्याशब्दादपत्येऽण्प्रत्ययो भवति तत्सन्नियोगेन कनीनशब्द आदेशो भवति। ढकोऽपवादः। कन्याया अपत्यं कानीनः कर्णः। कानीनो व्यासः॥

## विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु ॥ ११७ ॥

विकर्णशुङ्गच्छगलशब्देभ्यो यथासंख्यं वत्सभरद्वाजात्रिष्वपत्यविशेषेष्वण्प्रत्ययो भवति। वैकर्णो भवति वात्स्यश्चेत्, वैकर्णिरन्यः। शौङ्गो भवति भारद्वाजश्चेत्, शौङ्गिरन्यः। छागलो भवत्यात्रेयश्चेत्, छागलिरन्यः। शुङ्गाशब्दं स्त्रीलिङ्गमन्ये पठन्ति, ते ढकं प्रत्युदाहरन्ति—शौङ्गेय इति। द्वयमपि चैतत्प्रमाणम्, उभयथा सूत्रप्रणयनात्॥

## पीलाया वा ॥ ११८ ॥

तन्नामिकाणो बाधके "द्व्यचः" इति ढकि प्राप्तेऽण्प्रत्ययः पक्षे विधीयते। पीलाया अपत्ये वाण्प्रत्ययो भवति। पीलाया अपत्यं पैलः, पैलेयः॥

## ढक् च मण्डूकात् ॥ ११९ ॥

मण्डूकशब्दादपत्ये ढक् प्रत्ययो भवति, चकारादण् च वा। तेन त्रैरूप्यं भवति—माण्डूकेयः, माण्डूकः, माण्डूकिः॥

---

ऋष्यन्धक—ऋषि, अन्धक, वृष्णि तथा कुरु शब्दों से अपत्यार्थ में अण् प्रत्यय होता है।

मातुः—संख्यापूर्वक, सम्पूर्वक तथा भद्रपूर्वक मातृशब्द से अण् प्रत्यय तथा उकार अन्तादेश भी हो जाता है।

कन्यायाः—कन्या शब्द से अपत्यार्थ में अण् प्रत्यय होता है और कन्या शब्द को कनीन आदेश भी हो जाता है।

विकर्ण—विकर्ण, शुङ्ग तथा छगल शब्दों से यथासंख्य वत्स, भरद्वाज तथा अत्रि—इन तीन अपत्यविशेष अर्थों में अण् प्रत्यय होता है।

पीलायाः—पीला शब्द से अपत्यार्थ में विकल्प से अण् प्रत्यय होता है।

ढक्—मण्डूक शब्द से अपत्यार्थ में पाक्षिक ढक् तथा अण् प्रत्यय होते हैं।

## स्त्रीभ्यो ढक् ॥ १२० ॥

स्त्रीग्रहणेन टाबादिप्रत्ययान्ताः शब्दा गृह्यन्ते । स्त्रीभ्योऽपत्ये ढक् प्रत्ययो भवति । सौपर्णेयः । वैनतेयः । स्त्रीप्रत्ययविज्ञापनादसत्य्यर्थग्रहणे इह न भवति–इडबिडोऽपत्यम्, दरदोऽपत्यम्, ऐडबिडः, दारदः इति । ॐवडवाया वृषे वाच्येॐ । वाडवेयो वृषः स्मृतः । अपत्ये प्राप्तस्ततोऽपकृष्य विधीयते, तेनापत्ये वाडव इति भवति । ॐअण् कुञ्चाकोकिलात्स्मृतःॐ । क्रुञ्चाया अपत्यं क्रौञ्चः । कौकिलः ॥

## द्व्यचः ॥ १२१ ॥

स्त्रीभ्य इत्येव । द्व्यचः स्त्रीप्रत्ययान्तादपत्ये ढक् प्रत्ययो भवति । तन्नामिकाणोऽपवादः । दत्ताया अपत्यं दात्तेयः । गौपेयः । द्व्यच इति किम् ? यामुनः ॥

## इतश्चानिञः ॥ १२२ ॥

स्त्रीग्रहणं निवृत्तम् । चकारो "द्व्यचः" इत्यस्यानुकर्षणार्थः । इकारान्तात्प्रातिपदिकादनिञन्तादपत्ये ढक् प्रत्ययो भवति । आत्रेयः । नैधेयः । इत इति किम् ? दाक्षिः, प्लाक्षिः । अनिञ इति किम् ? दाक्षायणः, प्लाक्षायणः । द्व्यच इत्येव—मरीचेरपत्यं मारीचः ॥

## शुभ्रादिभ्यश्च ॥ १२३ ॥

शुभ्र इत्येवमादिभ्यः प्रातिपदिकेभ्यो ढक् प्रत्ययो भवति । यथायोगमिञादीनामपवादः । शौभ्रेयः । वैष्टपुरेयः । चकारोऽनुक्तसमुच्चयार्थ आकृतिगणतामस्य बोधयति । तेन गाङ्गेयः, पाण्डवेय इत्येवमादि सिद्धं भवति । शुभ्र । विष्टपुर । ब्रह्मकृत । शतद्वार । शतावर । शलाका । शलाचल । शलाकाभ्रू । लेखाभ्रू । विमातृ । विधवा । कृकसा । रोहिणी । रुक्मिणी । दिशा । शालूक । अजबस्ति । शकन्धि । लक्ष्मणश्यामयोर्वसिष्ठे । गोधा । कृकलास । अणीव । प्रवाहण । भरत । भारम(१) । मृकण्डु । मघष्टु । मकष्टु । कर्पूर । इतर । अन्यतर । आलीढ । सुदत्त । सुचक्षस् । सुनामन् । कद्रु । तुद । अकशाप । कुमारिका । किशोरिका । कुवेणिका । जिह्माशिन । परिधि । वायुदत्त । ककल । खट्वा । अम्बिका । अशोका । शुद्धपिङ्गला । खण्डोन्मत्ता । अनुदृष्टि । जरतिन् । बलिवर्दिन् । विग्रज । बीज । श्वन् । अश्मन् । अश्व । अजिर(२) ॥

## विकर्णकुषीतकात् काश्यपे ॥ १२४ ॥

विकर्णशब्दात्कुषीतकशब्दाच्च काश्यपेपत्यविशेषे ढक् प्रत्ययो भवति । वैकर्णेयः । कौषीतकेयः । काश्यप इति किम्? वैकर्णिः, कौषीतकिः ॥

---

**स्त्रीभ्यो**—स्त्रीप्रत्ययान्त प्रातिपदिकों से अपत्यार्थ में ढक् प्रत्यय हो जाता है ।

**वडवायाः**—वृषभ अर्थ में बड़वा शब्द से अपत्यार्थक ढक् प्रत्यय हो जाता है ।

**अण्**—क्रुञ्चा तथा कोकिल शब्दों से अपत्यार्थक अण् प्रत्यय होता है ।

**द्व्यचः**—द्व्यच् स्त्रीप्रत्ययान्त शब्द से अपत्यार्थ में ढक् प्रत्यय होता है ।

**इतः**—इञ्प्रत्ययान्तभिन्न इकारान्त प्रातिपदिक से अपत्यार्थ में ढक् प्रत्यय हो जाता है ।

**शुभ्रादिभ्यः**—शुभ्र आदि शब्दों से अपत्यार्थ में ढक् प्रत्यय हो जाता है ।

**विकर्ण**—काश्यपात्मक अपत्यविशेषार्थ में विकर्ण तथा कुशीतक शब्दों से ढक् प्रत्यय हो जाता है ।

---

(१) भारतेति पाठः ।

(२) स्थूल । सुकण्डु । मकथु । यमष्दु । कष्टु । सृकण्ड । मृकण्ड । गुद । रुद । कुशेरिका । शकल । शबल । उग्र । अजिन । इत्यधिकं क्वचित् ।

## भ्रुवो वुक् च ॥ १२५ ॥

भ्रूशब्दादपत्ये ढक् प्रत्ययो भवति तत्सन्नियोगेन च वुगागमः । भ्रौवेयः ॥

## कल्याण्यादीनामिनङ् ॥ १२६ ॥

कल्याणी इत्येवमादीनां शब्दानामपत्ये ढक् प्रत्ययो भवति, तत्सन्नियोगेन च इनङादेशः । स्त्रीप्रत्ययान्तानामादेशार्थं ग्रहणम् , प्रत्ययस्य सिद्धत्वाद्, अन्येषामुभयार्थम् । काल्याणिनेयः । सौभागिनेयः । दौर्भागिनेयः । "हृद्भगसिन्ध्वन्ते" इत्युभयार्थम् । कल्याणी । सुभगा । दुर्भगा । बन्धकी । अनुदृष्टि । अनुसृष्टि । जरती । बलीवर्दी । ज्येष्ठा । कनिष्ठा । मध्यमा । परस्त्री ॥

## कुलटाया वा ॥ १२७ ॥

कुलान्यटतीति कुलटा, पररूपं (१) निपातनात् । कुलटाया अपत्ये ढक् प्रत्ययो भवति, तत्सन्नियोगेन च वा इनङादेशो भवति । आदेशार्थं वचनम्, प्रत्ययः पूर्वेणैव सिद्धः । कौलटिनेयः । कौलटेयः । या तु कुलान्यटन्ती शीलं भिनत्ति ततः "क्षुद्राभ्यो वा" इति परत्वाड्ढ्रका भवितव्यम्–कौलटेरः ॥

## चटकाया ऐरक् ॥ १२८ ॥

चटकाया अपत्ये ऐरक् प्रत्ययो भवति । चाटकैरः । ॐचटकाच्चेति वक्तव्यम्ॐ । चटकस्यापत्यं चाटकैरः । ॐस्त्रियामपत्ये लुग्वक्तव्यःॐ । चटकाया अपत्यं स्त्री चटका(२) ॥

## गोधाया ढ्रक् ॥ १२९ ॥

गोधाया अपत्ये ढ्रक् प्रत्ययो भवति । गौधेरः । शुभ्रादिष्वयं पठ्यते, तेन गौधेयोऽपि भवति ॥

## आरगुदीचाम् ॥ १३० ॥

गोधाया अपत्ये उदीचामाचार्याणां मतेन आरक् प्रत्ययो भवति । गौधारः । आचार्यग्रहणं पूजार्थम्, वचनसामर्थ्यादेव पूर्वेण समावेशो भविष्यति । आरग्वचनमनर्थकम्, रका सिद्धत्वात् । (३)ज्ञापकं त्वयमन्येभ्योऽपि भवतीति–जाडारः, पाण्डारः ॥

---

भ्रुवो—भ्रू शब्द से अपत्यार्थ में ढक् प्रत्यय होता है और वुक् का आगम भी ।

कल्याण्यादीनाम्—कल्याणी आदि शब्दों से अपत्यार्थ में ढक् प्रत्यय तथा इनङ् अन्तादेश भी हो जाता है ।

कुलटायाः—कुलटा शब्द से अपत्यार्थ में ढक् प्रत्यय तथा विकल्प से इनङ् अन्तादेश भी हो हो जाता है ।

चटकायाः—चटका शब्द से अपत्यार्थ में एरक् प्रत्यय हो जाता है ।

चटकाच्च—चटक शब्द से भी एरक् प्रत्यय समझना चाहिए ।

स्त्रियाम्—चटका शब्द से स्त्रीत्वविशिष्ट अपत्यार्थ में एरक् प्रत्यय का लुक् समझना चाहिए ।

गोधायाः—गोधा शब्द से अपत्यार्थ में ढ्रक् प्रत्यय हो जाता है ।

आरक्—गोधा शब्द से अपत्यार्थ में उदीच्य आचार्यों के अनुसार आरक् प्रत्यय भी होता है ।

---

(१) शकन्ध्वादित्वादिति भावः । (श्रीना०)

(२) चटकेत्यस्याग्रे अजादित्वाट्टाबित्यधिकं पुस्तकान्तरे ।

(३) ज्ञापकार्थं ज्ञापनार्थमिति वा पदमञ्जरीपाठः ।

## क्षुद्राभ्यो वा ॥ १३१ ॥

ढगनुवर्वते, न आरक् । क्षुद्राः-अङ्गहीना धर्महीनाश्च(१) । अर्थधर्मेण तदभिधायिन्यः स्त्रीलिङ्गाः प्रकृतयो निर्दिश्यन्ते । क्षुद्राभ्यो वाऽपत्ये ढ्क् प्रत्ययो भवति । ढकोऽपवादः । काणेरः, काणेयः । दासेरः, दासेयः ॥

## पितृष्वसुश्छण् ॥ १३२ ॥

पितृष्वसृशब्दादपत्ये छण्प्रत्ययो भवति । अणोऽपवादः । पैतृष्वस्रीयः ॥

## ढकि लोपः ॥ १३३ ॥

पितृष्वसुरपत्यप्रत्यये ढकि परतो लोपो भवति । पैतृष्वसेयः । कथं पुनरिह ढक् प्रत्ययः ? एतदेव ज्ञापकं ढको भावस्य ॥

## मातृष्वसुश्च ॥ १३४ ॥

पितृष्वसुरित्येतदपेक्षते, पितृष्वसुर्यदुक्तं तन्मातृष्वसुरपि भवति–छण्प्रत्ययो ढकि लोपश्च । मातृष्वस्रीयः । मातृष्वसेयः ॥

## चतुष्पाद्भ्यो ढञ् ॥ १३५ ॥

चतुष्पादभिधायिनीभ्यः प्रकृतिभ्योऽपत्ये ढञ्प्रत्ययो भवति । अणादीनामपवादः । कामण्डलेयः । शौन्तिवाहेयः । जाम्बेयः ॥

## गृष्ट्यादिभ्यश्च ॥ १३६ ॥

गृष्ट्यादिभ्यः शब्देभ्योऽपत्ये ढञ्प्रत्ययो भवति । अणादीनामपवादः । गार्ष्टेयः । हार्ष्टेयः । गृष्टिशब्दो यश्चतुष्पाद्वचनस्ततः पूर्वेणैव सिद्धः, अचतुष्पादर्थं वचनम् । गृष्टि । हृष्टि । हलि । बलि । विश्रि । कुद्रि । अजवस्ति । मित्रयु(२) ॥

## राजश्वशुराद्यत् ॥ १३७ ॥

राजन्श्वशुरशब्दाभ्यामपत्ये यत्प्रत्ययो भवति । यथाक्रममणिञोरपवादः । राजन्यः । श्वशुर्यः । ॐराज्ञोऽपत्ये जातिग्रहणम्ॐ । राजन्यो भवति क्षत्रियजातिश्चेत् । राजनोऽन्यः ॥

## क्षत्राद् घः ॥ १३८ ॥

क्षत्रशब्दादपत्ये घः प्रत्ययो भवति । क्षत्रियः । अयमपि जातिशब्द एव । क्षात्रिरन्यः ॥

---

क्षुद्राभ्यो—क्षुद्रा शब्द से अपत्यार्थ में विकल्प से ढ्क् प्रत्यय होता है ।

पितृष्वसुः—पितृष्वसृ शब्द से अपत्यार्थ में छण् प्रत्यय होता है ।

ढकि—पितृष्वसृ शब्द से विहित छण् प्रत्यय का ढक् प्रत्यय के परे रहते लोप हो जाता है ।

मातृ—मातृष्वसृ शब्द से भी अपत्यार्थ में छण् प्रत्यय तथा ढक् प्रत्यय के परे उसका लोप भी हो जाता है ।

चतुष्पाद्भ्यो—चतुष्पाद्वाची शब्दों से अपत्यार्थ में ढञ् प्रत्यय होता है ।

गृष्ट्यादि—गृष्टि आदि शब्दों से अपत्यार्थ में ढञ् प्रत्यय हो जाता है ।

राज—राजन् तथा श्वसुर शब्दों से अपत्यार्थ में यत् प्रत्यय होता है ।

राज्ञो—राजन् शब्द से अपत्यार्थ में घ प्रत्यय होता है ।

क्षत्रात्—क्षत्र शब्द से अपत्यार्थ में घ प्रत्यय होता है ।

---

(१) शीलहीनाश्चेति पाठः ॥

(२) फलि, अकि, दृष्टि—इत्यधिकं क्वचित् ॥

## कुलात् खः ॥ १३९ ॥

उत्तरसूत्रे पूर्वप्रतिषेधादिह तदन्तः केवलश्च दृश्यते । कुलशब्दान्तात्प्रातिपदिकात्केवलाच्चापत्ये खः प्रत्ययो भवति । आढ्यकुलीनः । श्रोत्रियकुलीनः । कुलीनः ॥

## अपूर्वपदादन्यतरस्यां यड्ढकञौ ॥ १४० ॥

कुलादित्येव । अविद्यमानं पूर्वपदं यस्य तदपूर्वपदम्, समासंबन्धिनः पूर्वपदस्याभावेन कुलशब्दो विशेष्यते । अपूर्वपदात् कुलशब्दादन्यतरस्यां यत् ढकञ् इत्येतौ प्रत्ययौ भवतः । ताभ्यां मुक्ते खोऽपि भवति । कुल्यः, कौलेयकः, कुलीनः । पदग्रहणं किम् ? बहुचपूर्वादपि यथा स्यात्–बहुकुल्यः, बाहुकुलेयकः, बहुकुलीनः ॥

## महाकुलादञ् खञौ ॥ १४१ ॥

अन्यतरस्यामित्यनुवर्त्तते । पक्षे खः(१) । माहाकुलः, माहाकुलीनः, महाकुलीनः ॥

## दुष्कुलाड्ढक् ॥ १४२ ॥

दुष्कुलशब्दादपत्ये ढक् प्रत्ययो भवति, अन्यतरस्यामित्यनुवृत्तेः खश्च । दौष्कुलेयः, दुष्कुलीनः ॥

## स्वसुश्छः ॥ १४३ ॥

स्वसृशब्दादपत्ये छः प्रत्ययो भवति । अणोऽपवादः । स्वसुरपत्यं स्वस्रीयः ॥

## भ्रातुर्व्यच्च ॥ १४४ ॥

भ्रातृशब्दादपत्ये व्यत् प्रत्ययो भवति, चकाराच्छश्च । अणोऽपवादः । भ्रातृव्यः, भ्रात्रीयः । तकारः स्वरार्थः ॥

## व्यन्सपत्ने ॥ १४५ ॥

सपत्नशब्दः शत्रुपर्यायः शब्दान्तरमव्युत्पन्नमेव । सपत्नीशब्दादपरेऽकारम् इवार्थे निपातयन्ति–सपत्नीव सपत्नः । भ्रातृशब्दाद् व्यन्प्रत्ययो भवति समुदायेन चेदमित्रः सपत्न उच्यते । अपत्यार्थोऽत्र नास्त्येव–पाप्मना भ्रातृव्येण, भ्रातृव्यः कण्टकः ॥

## रेवत्यादिभ्यष्ठक् ॥ १४६ ॥

रेवतीत्येवमादिभ्योऽपत्ये ठक् प्रत्ययो भवति । यथायोगं ढगादीनामपवादः । रैवतिकः । आश्वपालिकः । रेवती । अश्वपाली । मणिपाली । द्वारपाली । वृकवञ्चिन् । वृकग्राह । कर्णग्राह । दण्डग्राह । कुक्कुटाक्ष(२) ॥

---

**कुलात्**—कुल शब्द तथा कुलशब्दान्त प्रातिपदिक से अपत्यार्थ में ख प्रत्यय होता है ।

**अपूर्व**—पूर्वपदरहित कुल शब्द से विकल्प से यत् तथा ढकञ् प्रत्यय होते हैं ।

**महा**—महाकुल शब्द से विकल्प से अपत्यार्थ में अञ् तथा खञ् प्रत्यय होते हैं ।

**दुष्कुलात्**—दुष्कुल शब्द से अपत्यार्थ में विकल्प से ढक् तथा ख प्रत्यय होते हैं ।

**स्वसुश्छः**—स्वसृशब्द से अपत्यार्थ में छ प्रत्यय होता है ।

**भ्रातुः**—अपत्यार्थ में भ्रातृ शब्द से व्यत् तथा छ प्रत्यय होते हैं ।

**व्यन्**—भ्रातृशब्द से व्यन् प्रत्यय होता है यदि प्रत्ययान्त से सपत्न का अभिधान होता हो ।

**रेवत्यादिभ्यः**—रेवती आदि शब्दों से अपत्यार्थ में ठक् प्रत्यय होता है ।

---

(१) क्वचिदयं पाठ उपलभ्यते—महाकुलशब्दादञ्खञौ प्रत्ययौ भवतः । अन्यतरस्यां ग्रहणानुवृत्तेः खश्च इति ।

(२) शब्दा एतेऽधिकाः क्वचित्—वृकबन्धु, चामरग्राह, ककुदाक्ष इति ।

## गोत्रस्त्रियाः कुत्सने ण च ॥ १४७ ॥

अपत्यं पौत्रप्रभृति गोत्रं गृह्यते। गोत्रं या स्त्री तदभिधायिनः शब्दादपत्ये णः प्रत्ययो भवति चकाराट्ठक्च, कुत्सने गम्यमाने। पितुरसंविज्ञाने मात्रा व्यपदेशोऽपत्यस्य कुत्सा। गार्ग्या अपत्यं गार्गो जाल्मः। गार्गिकः। ग्लुचुकायन्या अपत्यं ग्लौचुकायनः। ग्लौचुकायनिकः। "गोत्राद्यूनि" इति यूनि प्रत्ययो भवति। गोत्रमिति किम्? कारिकेयो जाल्मः। स्त्रिया इति किम्? औपगविर्जाल्मः। कुत्सन इति किम्? गार्गेयो माणवकः॥

## वृद्धाट्ठक् सौवीरेषु बहुलम् ॥ १४८ ॥

कुत्सन इत्येव। सौवीरेष्विति प्रकृतिविशेषणम्। वृद्धात्सौवीरगोत्रादपत्ये बहुलं ठक् प्रत्ययो भवति कुत्सने गम्यमाने। भागवित्तेर्भागवित्तिकः। तार्णबिन्दवस्य तार्णबिन्दविकः। पक्षे—यथाप्राप्तं फक्—भागवित्तायनः। पक्षे—तार्णबिन्दविः। अकशापः शुभ्रादिः—आकशापेयः। तस्यापत्यमाकशापेयिकः। पक्षे—आकशापेयिः॥

भागपूर्वपदो वित्तिर्द्वितीयस्तार्णबिन्दवः।<br>
तृतीयस्त्वाकशापेयो गोत्राट्ठग्बहुलं ततः॥

वृद्धग्रहणं स्त्रीनिवृत्त्यर्थम्। सौवीरेष्विति किम्? औपगविर्जाल्मः। कुत्सन इत्येव—भागवित्तायनो माणवकः। बहुलग्रहणमुपाधिवैचित्र्यार्थम्। "गोत्रस्त्रियाः" इत्यारभ्य चत्वारो योगाः, तेषु प्रथमः कुत्सन एव, अन्त्यः सौवीरगोत्र एव, मध्यमौ द्वयोरपि। तदेतद् बहुलग्रहणाल्लभ्यते॥

## फेश्छ च ॥ १४९ ॥

कुत्सन इत्येव, सौवीरेष्विति च। फेरिति फिञो ग्रहणम् न फिनः, वृद्धाधिकारात्। फिञन्तात्प्रातिपदिकात्सौवीरगोत्रादपत्ये छः प्रत्ययो भवति, चकाराट्ठक् कुत्सने गम्यमाने। यमुन्दस्यापत्यम्, "तिकादिभ्यः फिञ्", तस्यापत्यम्—यामुन्दायनीयः, यामुन्दायनिकः। कुत्सन इत्येव—यामुन्दायनिः। फिञन्तादौत्सर्गिकस्याण आगतस्य "ण्यक्षत्रियार्षञितः" इति लुक्। सौवीरेष्वित्येव—तैकायनिः॥

यमुन्दश्च सुयामा च वार्ष्यायणिः फिञः स्मृताः।<br>
सौवीरेषु च कुत्सायां द्वौ योगौ शब्दवित् स्मरेत्॥

## फाण्टाहृतिमिमताभ्यां णफिञौ ॥ १५० ॥

सौवीरेष्वित्येव। कुत्सन इति निवृत्तम्। फाण्टाहृतिमिमतशब्दाभ्यां सौवीरविषयाभ्यामपत्ये णफिञौ प्रत्ययौ भवतः। फकोऽपवादः। अल्पाच्तरस्यापूर्वनिपातो लक्षणव्यभिचारचिह्नम्, तेन यथासंख्यमिह न भवतीति—फाण्टाहृतः, फाण्टाहृतायनिः। मैमतः, मैमतायनिः। सौवीरेष्वित्येव—फाण्टाहृतायनः, मैमतायनः। फाण्टाहृतेः "यञिञोश्च" इति फक्। मिमतशब्दोऽपि नडादिषु पठ्यते॥

---

गोत्र—स्त्रीत्वविशिष्ट गोत्रवाचक शब्द से कुत्सन ( निन्दा ) अर्थ में विकल्प से ण प्रत्यय तथा ठच् प्रत्यय होते हैं।

वृद्धात्—सौवीरगोत्राभिधायी वृद्धसंज्ञक प्रातिपदिक से अपत्यार्थ में कुत्सनार्थ के गम्यमान होने बर बहुल करके ठक् प्रत्यय होता है।

फेश्छ च—सौवीरगोत्राभिधायी फिञ्प्रत्ययान्त प्रातिपदिक से कुत्सा के गम्यमान होने पर अपत्यार्थ में छ प्रत्यय तथा पाक्षिक ठक् प्रत्यय होता है।

फाण्टा—फाण्टाहृति तथा मिमत शब्दों से सौवीरगोत्राभिधानार्थ में ण तथा फिञ् प्रत्यय होते हैं।

## कुर्वादिभ्यो ण्यः ॥ १५१ ॥

सौवीरेषु, बहुलमिति च निवृत्तम्। कुरु इत्येवमादिभ्यः शब्देभ्योऽपत्ये ण्यः प्रत्ययो भवति। कौरव्यः। गार्ग्यः। "कुरुनादिभ्यो ण्यः" इति कुरुशब्दादपरो ण्यप्रत्ययो भविष्यति, स तु क्षत्रियात्तद्राजसंज्ञकः, तस्य बहुषु लुका भवितव्यम्। अयं तु श्रूयत एव—कौरव्याः। कौरव्यशब्दस्य क्षत्रियवचनस्य तिकादिषु पाठात् फिञपि भवति—कौरव्यायणिः। रथकारशब्दोऽत्र पठ्यते, स जातिवचनः। त्रैवर्णिकेभ्यः किंचिन्न्यूना(१) रथकारजातिः। (२) कारिणस्तु रथकारशब्दादुत्तरसूत्रेणैव ण्यः सिद्धः। केशिनीशब्दः पठ्यते, तस्य कैशिन्यः। पुंवद्भावो न भवति, स्त्रीप्रत्ययनिर्देशसामर्थ्यात्। वेनाच्छन्दसीति पठ्यते, कथं भाषायां वैन्यो राजेति? छान्दस एवायं प्रमादात्कविभिः प्रयुक्तः। वामरथशब्दः पठ्यते, तस्य कण्वादिवत्कार्यमिष्यते स्वरं वर्जयित्वा, लुगादिकमतिदिश्यते। बहुषु—वामरथाः। स्त्री—वामरथी, वामरथ्यायनी। युवा—वामरथ्यायनः। वामरथ्यस्य छात्रा वामरथाः, वामरथानि संघाङ्कलक्षणानि। स्वरस्तु ण्यप्रत्ययस्यैव भवति, नातिदेशिकमाद्युदात्तत्वम्। कुरु। गर्ग। मङ्गुष। अजमारक। रथकार। वावदूक। सम्राजः क्षत्रिये। कवि। मति। वाक्। पितृमत्। इन्द्रजालि। दामोष्णीषि। गणकारि। कैशोरि। कापिञ्जलादि। कुट। शालाका। मुर। एरक। अभ्र। दर्भ। केशिनी। वेनाच्छन्दसि। शूर्पणाय। श्यावनाय। श्यावरथ। श्यावपुत्र। सत्यङ्कार। वडभीकार। शङ्कु। शाक। पथिकारिन्। मूढ। शकन्धु। कर्त्त। हर्तृ। शाकिन्। इनपिण्डी(३)। वामरथस्य कण्वादिवत् स्वरवर्जम्॥

## सेनान्तलक्षणकारिभ्यश्च ॥ १५२ ॥

सेनान्तात्प्रातिपदिकाल्लक्षणशब्दात्कारिवचनेभ्यश्चापत्ये ण्यः प्रत्ययो भवति। कारिशब्दः कारूणां तन्तुवायादीनां वाचकः। कारिषेण्यः। हारिषेण्यः। लाक्षण्यः। कारिभ्यः—तान्तुवाय्यः, कौम्भकार्यः, नापित्यः॥

## उदीचामिञ् ॥ १५३ ॥

ण्ये प्राप्ते इञपरो विधीयते। सेनान्तलक्षणकारिभ्योऽपत्ये इञ् प्रत्ययो भवति उदीचां मतेन। कारिषेणिः। हारिषेणिः। लाक्षणिः। तान्तुवायिः(४)। कौम्भकारिः। वचनसामर्थ्यादेव प्रत्ययसमावेशे लब्धे आचार्यग्रहणं वैचित्र्यार्थम्। तक्षन्शब्दः शिवादिः, तेनाणयमिञ् बाध्यते, न तु ण्यः। तक्ष्णोऽपत्यं ताक्ष्णः, ताक्ष्ण्यः॥

## तिकादिभ्यः फिञ् ॥ १५४ ॥

तिक इत्येवमादिभ्यः शब्देभ्योऽपत्ये फिञ् प्रत्ययो भवति। तैकायनिः। कैतवायनिः।

---

कुर्वादिभ्यो—कुरु आदि शब्दों से अपत्यार्थ में ण्य प्रत्यय होता है।

सेनान्त—सेनान्तप्रातिपदिक, लक्षण शब्द तथा शिल्पिवाचक शब्दों से अपत्यार्थ में ण्य प्रत्यय होता है।

उदीचाम्—उदीच्य आचार्य के मत में सेनान्त प्रातिपदिक आदि से इञ् प्रत्यय होता है।

तिकादिभ्यः—तिक आदि शब्दों से अपत्यार्थ में फिञ् प्रत्यय होता है।

---

(१) अत्र याज्ञवल्क्यः—'माहिष्येण करण्यान्तु रथकारः प्रजायते' (१।९५) इति। तत्र वैश्यायां क्षत्रियादुत्पन्नो माहिष्यः, शूद्रायां वैश्यादुत्पन्ना स्त्री तु करणीति ज्ञेयम्। (श्रीना०)

(२) कारी = रथनिर्माणकर्त्ता शिल्पी च। (श्रीना०)

(३) विस्फोटक, काक, स्फाण्टक, शाकिन्, घातकि, धेनुजि, बुद्धिकार—इत्यधिकं क्वचित्।

(४) तौन्नवायिरित्यधिकं पुस्तकान्तरे।

वृषशब्दोऽत्र पठ्यते, तस्य प्रत्ययसन्नियोगेन यकारान्तत्वमिष्यते । वार्ष्यायणिः । कौरव्य-शब्दः पठ्यते, स च क्षत्रियवचनः, औरशब्देन क्षत्रियप्रत्ययान्तेन साहचर्यात् । यस्तु कुर्वादिभ्यो ण्यस्तदन्ताद् इञैव भवितव्यम् । तथाच "ण्यक्षत्रियार्षञितः" इत्यत्रोदाहृतम्-कौरव्यः पिता, कौरव्यः पुत्र इति । तिक । कितव । संज्ञा । बाल । शिखा । उरस् । शाठ्य । सैन्धव । यमुन्द । रूप्य । ग्राम्य । नील । अमित्र । गौकक्ष्य । कुरु । देवरथ । तैतिल । औरस । कौरव्य । भौरिकि । भौलिकि । चौपयत । चैटयत । शैकयत । क्षैतयत । ध्वाजवत । चन्द्रमस् । शुभ । गङ्गा । वरेण्य । सुयामन् । आरद्ध । वह्यका । खल्या । वृष । लोमक । उदन्य । यज्ञ(१) ॥

## कौसल्यकार्मार्याभ्यां च ॥ १५५ ॥

कौसल्यकार्मार्यशब्दाभ्यामपत्ये फिञ् प्रत्ययो भवति । इञोऽपवादः । कौसल्यायनिः । कार्मार्यायणिः । परमप्रकृतेरेवायं प्रत्यय इष्यते-कौसलस्यापत्यम्, कर्मारस्यापत्यमिति । प्रत्ययसन्नियोगेन तु प्रकृतिरूपं निपात्यते । तथा च स्मृत्यन्तरम्-'दगुकोसलकर्मारच्छाग-वृषाणां युद्धादिष्टस्य' इति । दागव्यायनिः । कौसल्यायनिः । कार्मार्यायणिः । छाग्यायनिः । वार्ष्यायणिः ॥

## अणो द्व्यचः ॥ १५६ ॥

अणन्ताद् द्व्यचः प्रातिपदिकादपत्ये फिञ् प्रत्ययो भवति । इञोऽपवादः । कार्त्रायणिः । हार्त्रायणिः(२) । अण इति किम् ? दाक्षायणः । द्व्यच इति किम् ? औपगविः । *त्यदादीनां वा फिञ् वक्तव्यः* । त्यादायनिः । त्यादः । यादायनिः । यादः । तादायनिः । तादः । अणत्र प्राप्तः ॥

## उदीचां वृद्धादगोत्रात् ॥ १५७ ॥

वृद्धं यच्छब्दरूपमगोत्रं तस्मादपत्ये फिञ् प्रत्ययो भवति उदीचामाचार्याणां मतेन । आम्रगुप्तायनिः । ग्रामरक्षायणिः । कारिशब्दादपि वृद्धादगोत्रात्परत्वादनेनैव भवितव्यम्-नापितायनिः । उदीचामिति किम् ? आम्रगुप्तिः । वृद्धादिति किम् ? याज्ञदत्तिः । अगोत्रा-दिति किम् ? औपगविः ॥

## वाकिनादीनां कुक् च ॥ १५८ ॥

वाकिन इत्येवमादिभ्यः शब्देभ्योऽपत्ये फिञ् प्रत्ययो भवति, तत्सन्नियोगेन चैषां कुगागमः । यदिह वृद्धमगोत्रं शब्दरूपं तस्याऽऽगमार्थमेव ग्रहणम्, अन्येषामुभयार्थम् । वाकिनकायनिः । गारेधकायनिः । इञाद्यपवादो योगः । उदीचामित्यधिकारात्पक्षे

---

**कौशल्य**—कौशल्य तथा कार्मार्य शब्दों से अपत्यार्थ में फिञ् प्रत्यय होता है ।

**अणो**—अण्प्रत्ययान्त द्व्यच् प्रातिपदिक से अपत्यार्थ में फिञ् प्रत्यय होता है ।

**त्यदादीनाम्**—त्यद आदि अणन्त द्व्यच् प्रातिपदिक से फिञ् प्रत्यय होता है ।

**उदीचाम्**—गोत्रवाचकभिन्न वृद्धसंज्ञक शब्द से अपत्यार्थ में फिञ् प्रत्यय होता है उदीच्य आचार्यों के मत में ।

**वाकिनादीनाम्**—वाकिन आदि शब्दों से अपत्यार्थ में फिञ् प्रत्यय तथा प्रकृति को कुक् का आगम भी हो जाता है ।

---

(१) ऋष्य । भीत । जाजल । रस । लावक । ध्वजवद । वसु । बन्धु । अबन्धका । सुपामन् । एते शब्दाः क्वचित् अधिकाः ।

(२) यास्क इति शिवादिभ्योऽण् । यास्कस्यापत्यं यास्कायनिः इत्यधिकं क्वचित् ।

तेऽपि भवन्ति—वाकिनिः, गारेधिः । वाकिन । गारेध । कार्यव्य । काक । लङ्का । ॐचर्मि-वर्मिणोर्नलोपश्चॐ ॥

## पुत्रान्तादन्यतरस्याम् ॥ १५९ ॥

उदीचां वृद्धादिति वर्त्तते । पुत्रान्तमगोत्रमिति पूर्वेणैव प्रत्ययः सिद्धः, तस्मिन्ननेन कुगागमोऽन्यतरस्यां विधीयते । पुत्रान्तात्प्रातिपदिकाद्यः फिञ्प्रत्ययस्तस्मिन् परभूतेऽन्यतरस्यां कुगागमो भवति पुत्रान्तस्य । तेन त्रैरूप्यं संपद्यते—गार्गीपुत्रकायणिः, गार्गीपुत्रायणिः, गार्गीपुत्रिः । वात्सीपुत्रकायणिः, वात्सीपुत्रायणिः, वात्सीपुत्रिः ॥

## प्राचामवृद्धात् फिन् बहुलम् ॥ १६० ॥

अवृद्धाच्छब्दरूपादपत्ये फिन् प्रत्ययो भवति बहुलं प्राचां मतेन । ग्लुचुकायनिः । अहिचुम्बकायनिः । प्राचामिति किम् ? ग्लौचुकिः । अवृद्धादिति किम् ? राजदन्तिः । उदीचां प्राचामन्यतरस्यां बहुलमिति सर्व एते विकल्पार्थाः, तेषामेकेनैव सिद्ध्यंति, तत्राचार्यग्रहणं पूजार्थम् । बहुलग्रहणं वैचित्र्यार्थम् । क्वचिन्न भवत्येव—दाक्षिः, प्लाक्षिः ॥

## मनोर्जातावञ्यतौ षुक् च ॥ १६१ ॥

मनुशब्दादञ् यत् इत्येतौ प्रत्ययौ भवतस्तत्सन्नियोगेन षुगागमः, समुदायेन चेज्जातिर्गम्यते । मानुषः । मनुष्यः । जातिशब्दावेतौ । अपत्यार्थोऽत्र नास्त्येव । तथाच मानुषा इति बहुषु न लुग्भवति । अपत्यविवक्षायां त्वणैव भवितव्यम्—मानवी प्रजा ॥

अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः ।
नकारस्य च मूर्द्धन्यस्तेन सिद्ध्यति माणवः ॥

## अपत्यं पौत्रप्रभृति गोत्रम् ॥ १६२ ॥

पौत्रप्रभृति यदपत्यं तद्गोत्रसंज्ञं भवति । संबन्धिशब्दत्वादपत्यशब्दस्य यदपत्यं तदपेक्षया पौत्रप्रभृतेर्गोत्रसंज्ञा विधियते । गर्गस्यापत्यं पौत्रप्रभृति गार्ग्यः । वात्स्यः । अपत्यमिति व्यपदेशाय संज्ञिनः पौत्रप्रभृतेः । पौत्रप्रभृतीति किम् ? अनन्तरस्य मा भूत्—कौञ्जिः, गार्गिः । गोत्रप्रदेशाः—"एको गोत्रे" इत्येवमादयः ॥

## जीवति तु वंश्ये युवा ॥ १६३ ॥

अभिजनप्रबन्धो वंशः, तत्र भवो वंश्यः पित्रादिस्तस्मिञ्जीवति सति पौत्रप्रभृत्यपत्यं युवसंज्ञं भवति । पौत्रप्रभृतीति च न सामानाधिकरण्येनापत्यं विशेषयति, किं तर्हि षष्ठ्या विपरिणस्यते—पौत्रप्रभृतेर्यदपत्यमिति, तेन चतुर्थादारभ्य युवसंज्ञा विधीयते । गार्ग्यायणः । वात्स्यायनः । तुशब्दोऽवधारणार्थो युवैव, न गोत्रमिति ॥

---

चर्मि—चर्मिन् तथा वर्मिन् शब्दों से फिञ् प्रत्यय, कुगागम तथा इनके नकार का लोप समझना चाहिए ।

पुत्रान्तादन्य—पुत्रान्तप्रातिपदिक से विहित फिञ्प्रत्यय के परे रहते पुत्रान्त शब्द को विकल्प से कुक् का आगम हो जाता है ।

प्राचाम्—अवृद्ध शब्दों से अपत्यार्थ में प्राच्य आचार्यों के मत में बहुल करके फिन् प्रत्यय होता है ।

मनोः—मनु शब्द से विकल्प से अञ् तथा यत् प्रत्यय एवम् कुक् का आगम होता है यदि प्रत्ययान्त शब्द से जाति की प्रतीति होती हो ।

अपत्यम्—पौत्र से लेकर आगे के अपत्य को 'गोत्र' कहा जाता है ।

जीवति—पिता आदि के जीवित रहने पर पौत्रप्रभृति अपत्य युवसंज्ञक होते हैं ।

## भ्रातरि च ज्यायसि ॥ १६४ ॥

भ्रातरि ज्यायसि जीवति कनीयान् भ्राता युवसंज्ञो भवति पौत्रप्रभृतेरपत्यम् । गार्ग्यस्य द्वौ पुत्रौ, तयोः कनीयान् मृते पित्रादौ वंश्ये भ्रातरि ज्यायसि जीवति युवसंज्ञो भवति । अवंश्यार्थोऽयमारम्भः । पूर्वजाः पित्रादयो वंश्या इत्युच्यन्ते, भ्राता तु न वंश्यः, अकारणत्वात् । गार्ग्ये जीवति गार्ग्यायणोऽस्य कनीयान् भ्राता । वात्स्यायनः । दाक्षायणः । प्लाक्षायणः ॥

## वान्यस्मिन् सपिण्डे स्थविरतरे जीवति ॥ १६५ ॥

सप्तम(१)पुरुषावधयः सपिण्डाः स्मर्यन्ते । येषाम्—

(२)उभयत्र दशाहानि कुलस्यान्नं न भुज्यते ।

इत्येवमादिकायां क्रियायामनधिकारः । भ्रातुरन्यस्मिन् सपिण्डे स्थविरतरे जीवति पौत्रप्रभृतेरपत्यं जीवदेव युवसंज्ञं वा भवति । प्रकृतं जीवतिग्रहणं सपिण्डस्य विशेषणम्, इदं तु संज्ञिनः । तरब्निर्देश उभयोत्कर्षार्थः, स्थानेन वयसा चोत्कृष्टे सपिण्डे यथा स्यात् । पितृव्ये पितामहे भ्रातरि वयसाधिके जीवति—गर्गस्यापत्यं गार्ग्यायणः, गार्ग्यो वा । वात्स्यायनः, वात्स्यो वा । दाक्षायणः, दाक्षिर्वा । स्थविरतरेति किम् ? स्थानवयोन्यूने गार्ग्य एव भवति । जीवतीति किम् ? मृते मृतो वा गार्ग्य एव भवति ॥

## वृद्धस्य च पूजायाम् ॥ १६६ ॥

अपत्यमन्तर्हितं वृद्धमिति शास्त्रान्तरे परिभाषणाद्गोत्रं वृद्धमित्युच्यते । वृद्धस्य युवसंज्ञा वा भवति पूजायां गम्यमानायाम् । संज्ञासामर्थ्याद्गोत्रं युवप्रत्ययेन पुनरुच्यते । वृद्धस्येति षष्ठीनिर्देशो विचित्रा सूत्रस्य कृतिरिति । तत्र भवान् गार्ग्यायणः, गार्ग्यो वा । तत्र भवान् वात्स्यायनः, वात्स्यो वा । तत्र भवान् दाक्षायणः, दाक्षिर्वा । पूजायामिति किम् ? गार्ग्यः, वात्स्यः ॥

## यूनश्च कुत्सायाम् ॥ १६७ ॥

कुत्सायां गम्यमानायां यूनो वा युवसंज्ञा भवति । निवृत्तिप्रधानो विकल्पो युवसंज्ञायां

---

**भ्रातरि**—ज्येष्ठ भ्राता के जीवित रहने पर कनिष्ठ भ्राता की युवसंज्ञा होती है ।

**वान्यस्मिन्**—भ्रातृभिन्न वृद्धतर सपिण्ड के जीवित रहने पर पौत्रप्रभृति जीवित अपत्यों की विकल्प से युवसंज्ञा होती है ।

**वृद्धस्य**—पूजा के गम्यमान होने पर विकल्प से वृद्ध की युवसंज्ञा होती है ।

**यूनश्च**—कुत्सा के गम्यमान होने पर युवक की विकल्प से युवसंज्ञा होती है ।

---

(१) तदाह मनुः—

'सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते' (५।६०) इति । अत्र स्पष्टमुक्तं याज्ञवल्क्येन—

'पञ्चमात् सप्तमादूर्ध्वं मातृतः पितृतस्तथा' (१।५३) इति । तत्र सपिण्डता निवर्त्तते इति वाक्यशेषः । तथा चायं सपिण्डशब्दः पङ्कजादिवद् योगरूढ इति सिद्धम् । तत्रैवं व्यवस्था—पित्रादयः षट् पुत्रादयः षट् स्वयं च सप्तम इति पितृतः सप्तमत्वं स्वस्य । तथा च पूर्वजान् षट्पुरुषानपेक्ष्य स्वस्य प्रतियोगितया, पुत्रादीन् षट् पुरुषानपेक्ष्य च अनुयोगितया स्वस्य सापिण्ड्यम् इति स्थितिः । तदेवंविधं सापिण्ड्यम् समानजातीयानाम् । असमानजातीयानां तु त्रिपुरुषमेव सापिण्ड्यमिति विशेषः । यदाह शङ्खः—

'यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः । एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्त्तते त्रिषु ॥' इति । अधिकं धर्मशास्त्रनिबन्धे द्रष्टव्यम् ॥ (श्रीना०)

(२) उभयत्र—जनने मरणे चेत्यर्थः ।

प्रतिषिद्धायां पक्षे गोत्रसंज्ञैव भवति, प्रतिपत्त्यभावात्। गार्ग्यो जाल्मः, गार्ग्यायणो वा। वात्स्यो जाल्मः, वात्स्यायनो वा। दाक्षिर्जाल्मः, दाक्षायणो वा। कुत्सायामिति किम्? गार्ग्यायणः॥

## जनपदशब्दात् क्षत्रियादञ्॥ १६८॥

जनपदशब्दो यः क्षत्रियवाची तस्मादपत्येऽञ् प्रत्ययो भवति। पाञ्चालः। ऐक्ष्वाकः। वैदेहः। जनपदशब्दादिति किम्? द्रुह्योरपत्यं द्रौह्यवः, पौरवः। क्षत्रियादिति किम्? ब्राह्मणस्य पञ्चालस्यापत्यं पाञ्चालिः, वैदेहिः। ॐक्षत्रिय(१)समानशब्दाज्जनपदशब्दात्तस्य राजन्यपत्यवत्ॐ। पञ्चालानां राजा पाञ्चालः। वैदेहः। मागधः। "अवृद्धात्" अपीति प्राप्तस्य वुञोऽपवादः॥

## साल्वेयगान्धारिभ्यां च॥ १६९॥

साल्वेयगान्धारिशब्दाभ्यामपत्येऽञ् प्रत्ययो भवति। जनपदशब्दावेतौ क्षत्रियाभिधायिनौ, ताभ्यामञपवादे "वृद्धात्" इति ञ्यङि प्राप्ते पुनरञ् विधीयते। साल्वेयः। गान्धारः। तस्य राजनीत्येव—साल्वेयो राजा, गान्धारो राजा॥

## द्व्यञ्मगधकलिङ्गसूरमसादण्॥ १७०॥

जनपदशब्दात् क्षत्रियाभिधायिनो द्व्यच्, मगध, कलिङ्ग, सूरमस इत्येतेभ्यश्चापत्येऽण् प्रत्ययो भवति। अञोऽपवादः। आङ्गः। वाङ्गः। पौण्ड्रः। सौह्मः। मागधः। कालिङ्गः। सौरमसः। तस्य राजनीत्येव—आङ्गो राजा॥

## वृद्धेत्कोसलाजादाञ्ञ्यङ्॥ १७१॥

जनपदशब्दात्क्षत्रियादित्येव। वृद्धाच्च प्रातिपदिकादिदिरान्ताच्च कोसलाजादशब्दाभ्यां चापत्ये ञ्यङ् प्रत्ययो भवति। अञोऽपवादः। वृद्धात्तावत्—आम्बष्ठ्यः, सौवीर्यः। इकारान्तात्—आवन्त्यः, कौन्त्यः। कोसलाजादयोरवृद्धार्थं वचनम्—कौसल्यः, आजाद्यः। तपरकरणं किम्? कुमारी नाम जनपदसमानशब्दः क्षत्रियः, तस्यापत्यं कौमारः। ॐपाण्डोर्जनपदशब्दात् क्षत्रियाड्ड्यण् वक्तव्यःॐ। पाण्ड्यः। अन्यस्मात् पाण्डव एव। तस्य राजनीत्येव—आम्बष्ठ्यो राजा, आवन्त्यः, कौन्त्यः, कौसल्यः, आजाद्यः॥

## कुरुनादिभ्यो ण्यः॥ १७२॥

जनपदशब्दात् क्षत्रियादित्येव। कुरुशब्दान्नादिभ्यश्च प्रातिपदिकेभ्यो ण्यः प्रत्ययो

---

जनपद—क्षत्रियवाची जनपदार्थप्रयुज्यमान शब्दों से अपत्यार्थ में अञ् प्रत्यय होता है।

क्षत्रिय—क्षत्रियवाचकशब्दसमान जनपदवाचक शब्द से राजा अर्थ में अपत्यवत् प्रत्यय समझना चाहिए।

साल्वेय—साल्वेय तथा गान्धारि शब्दों से अपत्यार्थ में अञ् प्रत्यय हो जाता है।

द्व्यच्—क्षत्रियाभिधायक जनपदार्थप्रयुज्यमान द्व्यच्, मगध, कलिङ्ग तथा सूरमस शब्दों से अपत्यार्थ में अण् प्रत्यय होता है।

वृद्धेत्—वृद्ध प्रातिपदिक, इकारान्त शब्द, कोशल तथा अजाद शब्दों से अपत्यार्थ में ञ्यङ् प्रत्यय होता है।

पाण्डोः—क्षत्रियाभिधायी जनपदप्रसिद्ध पाण्डुशब्द से ड्यण् प्रत्यय होता है।

कुरु—कुरु शब्द तथा नकारादि शब्दों से ण्य प्रत्यय होता है।

---

(१) क्षत्रियेति-समानः शब्दो यस्य स समानशब्दः, क्षत्रियेण समानशब्दः क्षत्रियसमानशब्दः, स्तस्माज्जनपदशब्दात् तस्येति षष्ठीसमर्थाद्राजन्यभिधेये अपत्यवत् प्रत्ययो भवति।

भवति। अणञोरवादः। कौरव्यः। नकारादिभ्यः–नैषध्यः, नैपथ्यः। तस्य राजनीत्येव—कौरव्यो राजा॥

## साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ्॥ १७३॥

जनपदशब्दात् क्षत्रियादित्येव। सल्वा नाम क्षत्रिया तन्नामिका, तस्या अपत्यम् "द्व्यचः" इति ढक्–साल्वेयः। अणपीष्यते–साल्वः। तस्य निवासः साल्वो जनपदः, तदवयवा उदुम्बरादयः, तेभ्यः क्षत्रियवृत्तिभ्य इदं प्रत्ययविधानम्। साल्वावयवेभ्यः प्रत्यग्रथकलकूटाश्मकशब्देभ्यश्चापत्ये इञ् प्रत्ययो भवति। अञोऽपवादः। औदुम्बरिः। तैलखलिः। माद्रकारिः। यौगन्धरिः। भौलिङ्गिः। शारदण्डिः। प्रात्यग्रथिः। कालकूटिः। आश्मकिः। तस्य राजनीत्येव—औदुम्बरी राजा॥

उदुम्बरास्तिलखला मद्रकारा युगन्धराः।
भुलिङ्गाः शरदण्डाश्च साल्वावयवसंज्ञिताः॥

## ते तद्राजाः॥ १७४॥

"जनपदशब्दात् क्षत्रियादञ्" इत्येवमादयः प्रत्ययाः सर्वनाम्ना प्रत्यवमृश्यन्ते, न तु पूर्वे, गोत्रयुवसंज्ञाकाण्डेन व्यवहितत्वात्। तेऽञादयस्तद्राजसंज्ञा भवन्ति। तथा चैवोदाहृतम्। तद्राजप्रदेशाः—"तद्राजस्य बहुषु तेनैवास्त्रियाम्" इत्येवमादयः॥

## कम्बोजाल्लुक्॥ १७५॥

"जनपदशब्दात् क्षत्रियात्" इत्यनेन विहितस्याञो लुगुच्यते। कम्बोजात्प्रत्ययस्य लुग् भवति। कम्बोजः। ❀कम्बोजादिभ्यो लुग्वचनं चोलाद्यर्थम्❀। कम्बोजः। चोलः। केरलः। शकः। यवनः। तस्य राजनीत्येव—कम्बोजो राजा॥

## स्त्रियामवन्तिकुन्तिकुरुभ्यश्च॥ १७६॥

अवन्तिकुन्तिकुरुशब्देभ्य उत्पन्नस्य तद्राजस्य स्त्रियामभिधेयायां लुग्भवति। अवन्तिकुन्तिभ्यां ण्यङः, कुरोर्ण्यस्य। अवन्ती(१)। कुन्ती। कुरूः। स्त्रियामिति किम्? आवन्त्यः, कौन्त्यः, कौरव्यः॥

## अतश्च॥ १७७॥

स्त्रियामित्येव। अकारप्रत्ययस्य तद्राजस्य स्त्रियामभिधेयायां लुग्भवति। तकारो विस्पष्टार्थः। शूरसेनी। मद्री। दरत्। अवन्त्यादिभ्यो लुग्वचनात् तदन्तविधिरत्र नास्ति, तेनेह न भवति–आम्बष्ठ्या, सौवीर्या॥

---

**साल्वावयव**—साल्वावयव, प्रत्यग्र, कलकूट तथा अश्मक शब्दों से अपत्यार्थ में इञ् प्रत्यय होता है।

**ते तद्राजाः**—अञादि प्रत्ययों की 'तद्राज' संज्ञा होती है।

**कम्बोजात्**—कम्बोज शब्द से विहित प्रत्यय का लुक् हो जाता है।

**कम्बोजादिभ्यः**—कम्बोज आदि शब्दों से विहित प्रत्यय का लुक् समझना चाहिए जिससे चोल आदि शब्दों की भी सिद्धि हो सके।

**स्त्रियाम्**—अवन्ति, कुन्ति तथा कुरु शब्दों से विहित तद्राज-प्रत्ययों का स्त्रीत्वविवक्षा में लुक् हो जाता है।

**अतश्च**—तद्राजसंज्ञक अकार प्रत्यय का स्त्रीत्वविवक्षा में लुक् हो जाता है।

---

(१) अवन्ति, कुन्ति इत्यत्र ण्यङो लुकि कृते इतो मनुष्यजातेरिति ङीष्, कुरूरिति–ऊङुतः इत्यूङ्।

## न प्राच्यभर्गादियौधेयादिभ्यः ॥ १७८ ॥

प्राच्येभ्यो भर्गादिभ्यो यौधेयादिभ्यश्चोत्पन्नस्य लुक् न भवति । "अतश्च" इत्यनेन स्त्रियां लुक् प्राप्तः प्रतिषिद्ध्यते । प्राच्येभ्यः क्षत्रियेभ्यस्तावत्–पाञ्चाली, वैदेही, आङ्गी, वाङ्गी, मागधी । भर्गादिभ्यः–भार्गी, कारूषी, कैकेयी । यौधेयादिभ्यः–यौधेयी, शौभ्रेयी, शौक्रेयी । कस्य पुनरकारस्य प्रत्ययस्य यौधेयादिभ्यो लुक् प्राप्तः प्रतिषिद्ध्यते ? पाञ्चमिकस्याञः "पर्श्वादि-यौधेयादिभ्यामणञौ" इत्येतस्य । कथं पुनस्तस्य भिन्नप्रकरणस्थस्यानेन लुक् प्राप्नोति ? एतदेव ज्ञापयति–पाञ्चमिकस्यापि तद्राजस्य "अतश्च" इत्यनेन लुग्भवतीति । किमेतस्य ज्ञापनेन प्रयोजनम् ? पर्श्वाद्यणः स्त्रियां लुक् सिद्धो भवति । पर्शुः । रक्षाः । असुरी । तथा-चोक्तम्–"यौधेयादिप्रतिषेधो ज्ञापकः पर्श्वाद्यणो लुक्" इति । भर्ग । करूष । केकय । कश्मीर । साल्व । सुस्थाल । उरश(१) कौरव्य । भर्गादिः ॥ यौधेय । शौभ्रेय । शौक्रेय । ज्यावाणेय(२) । वार्त्तेय । धार्त्तेय । त्रिगर्त्त । भरत । उशीनर । यौधेयादिः ॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ
चतुर्थाध्यायस्य प्रथमः पादः ॥ ४ । १ ॥



---

**न प्राच्य**—प्राच्य क्षत्रियवाचक, भर्गादि तथा यौधेयादि शब्दों से विहित तद्राज-प्रत्ययों का लुक् नहीं होता है ।

चतुर्थाध्याय का प्रथम पाद समाप्त हुआ ।



---

(१) उरस इति पाठः ।

(२) अत्र ज्यावानेय इति केषाञ्चित्पाठः । तत्र ज्यावानो यस्या इति मत्वर्थीयेऽकारप्रत्यये ज्यावानशब्दः, तस्माज्ज्यावानेयः इति पदमञ्जरीकारमतम् । ( श्रीना० ।

## अथ चतुर्थाध्यायस्य द्वितीयः पादः ॥

### तेन रक्तं रागात् ॥ १ ॥

शुक्लस्य वर्णान्तरापादनमिह रञ्जेरर्थः। रज्यतेऽनेनेति रागः। तेनेति तृतीयासमर्था-द्रागविशेषवाचिनः शब्दात्(१) रक्तमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। कषायेण रक्तं वस्त्रं काषायम्। माञ्जिष्ठम्। कौसुम्भम्। रागादिति किम्? देवदत्तेन रक्तं वस्त्रम्। कथं काषायौ गर्दभस्य कर्णौ, हारिद्रौ कुक्कुटस्य पादाविति? उपमानाद्भविष्यति–काषायाविव काषायौ, हारिद्राविव हारिद्रौ। "द्वैपवैयाघ्रादञ्" इति यावत्तृतीया समर्थविभक्तिरनुवर्त्तते ॥

### लाक्षारोचनाशकलकर्दमाट्ठक् ॥ २ ॥

लाक्षादिभ्यो रागवचनेभ्यस्तृतीयासमर्थेभ्यो रक्तमित्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। अणोऽपवादः। लाक्षया रक्तं वस्त्रं लाक्षिकम्। रौचनिकम्। शाकलिकम्। कार्दमिकम्। ※शकलकर्दमाभ्यामणपीष्यते※। शाकलम्। कार्दमम्। ※नील्या अन् वक्तव्यः※। नील्या रक्तं नीलं वस्त्रम्। ※पीतात् कन् वक्तव्यः※। पीतेन रक्तं पीतकम्। ※हरिद्रामहारजनाभ्यामञ् वक्तव्यः※। हारिद्रम्। माहारजनम् ॥

### नक्षत्रेण युक्तः कालः ॥ ३ ॥

तृतीया समर्थविभक्तिरनुवर्त्तते। तेनेति तृतीयासमर्थात् नक्षत्रविशेषवाचिनः शब्दाद् युक्त इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, योऽसौ युक्तः कालश्चेत्स भवति। कथं पुनर्नक्षत्रेण पुष्यादिना कालो युज्यते? पुष्यादिसमीपस्थे चन्द्रमसि वर्त्तमानाः पुष्यादिशब्दाः प्रत्ययमुत्पादयन्ति। पुष्येण युक्तः कालः, पुष्यसमीपस्थेन चन्द्रमसा युक्त इत्यर्थः, पौषी रात्रिः पौषमहः। माघी रात्रि, माघमहः। नक्षत्रेणेति किम्? चन्द्रमसा युक्ता रात्रिः। काल इति किम्? पुष्येण युक्तश्चन्द्रमाः ॥

### लुबविशेषे ॥ ४ ॥

पूर्वेण विहितस्य प्रत्ययस्य लुब् भवति अविशेषे, न चेन्नक्षत्रयुक्तस्य कालस्य

---

**तेन**—तृतीयासमर्थ रागविशेषवाचक शब्द से (उससे) 'रक्त' इस अर्थ में यथाविहित प्रत्यय होते हैं।

**लाक्षा**—रागवाचक तृतीया समर्थ लाक्षा, रोचना, शकल तथा कर्दम शब्दों से 'रक्त' अर्थ में ठक् प्रत्यय होता है।

**शकल**—शकल तथा कर्दम शब्दों से 'रक्त' अर्थ में अण् प्रत्यय भी समझना चाहिए।

**नील्याः**—नीली शब्द से 'रक्त' अर्थ में अन् प्रत्यय समझना चाहिए।

**पीतात्**—पीत शब्द से 'रक्त' अर्थ में कन् प्रत्यय समझना चाहिए।

**हरिद्रा**—हरिद्रा तया महारजन शब्दों से 'रक्त' अर्थ में अञ् प्रत्यय समझना चाहिए।

**नक्षत्रेण**—तृतीयासमर्थ नक्षत्रविशेषवाचक शब्द से 'युक्त' अर्थ में यथाविहित प्रत्यय होते हैं यदि वह युक्त पदार्थ काल हो।

**लुबविशेषे**—यदि नक्षत्रविशेषयुक्त काल के रात्रि आदि विशेष का अभिधान न होता हो तो उक्त प्रत्यय का लुप् हो जाता है।

---

(१) प्रातिपदिकादिति न्यासे पाठः।

राम्यादिविशेषोऽभिधीयते । यावान् कालो नक्षत्रेण युज्यतेऽहोरात्रस्तस्याविशेषे लुब् भवति । अद्य पुष्यः । अद्य कृत्तिकाः । अविशेष इति किम् ? पौषी रात्रिः, पौषमहः ॥

## संज्ञायां श्रवणाश्वत्थाभ्याम् ॥ ५ ॥

अविशेषे लुब्विहितः पूर्वेण, विशेषार्थोऽयमारम्भः । श्रवणशब्दादश्वत्थशब्दाच्चोत्पन्नस्य प्रत्ययस्य लुब् भवति संज्ञायां विषये । श्रवणा रात्रिः । अश्वत्थो मुहूर्त्तः । लुपि युक्तवद्भावः कस्मान्न भवति ? निपातनात्-"विभाषा फाल्गुनीश्रवणाकार्त्तिकी" इति । संज्ञायामिति किम् ? श्रावणी, आश्वत्थी रात्रिः ॥

## द्वन्द्वाच्छः ॥ ६ ॥

नक्षत्रद्वन्द्वात्तृतीयासमर्थाद्युक्ते काले छः प्रत्ययो भवति विशेषे चाविशेषे च । राधानुराधीया रात्रिः । तिष्यपुनर्वसवीयमहः । अविशेषे-अद्य राधानुराधीयम्, अद्य तिष्यपुनर्वसवीयम् । लुपं परत्वाद् बाधते ॥

## दृष्टं साम ॥ ७ ॥

तेनेति तृतीयासमर्थात् दृष्टमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यद् दृष्टं साम चेत्तद्भवति । क्रुञ्चेन दृष्टं क्रौञ्चं साम । वासिष्ठम् । वैश्वामित्रम् ॥

## कलेर्ढक् ॥ ८ ॥

कलिशब्दात्तृतीयासमर्थाद् दृष्टमित्येतस्मिन्नर्थे ढक् प्रत्ययो भवति । अणोऽपवादः । कलिना दृष्टं साम कालेयम् । ※सर्वत्राग्निकलिभ्यां ढग्वक्तव्यः※ । अग्निना दृष्टमाग्नेयम् । एवमग्नौ भवमग्नेरागतमग्नेः स्वमिति सर्वत्र ढगेव भवति-आग्नेयम् । तथा कालेयमपि प्रतिपत्तव्यम् । ※दृष्टे सामनि अण् वा डिद्भवतीति वक्तव्यम्※ । उशनसा दृष्टं साम औशनसम्, औशनम् । ※जाते चार्थे योऽन्येन बाधितः पुनरण् विधीयते स वा डिद्भवतीति वक्तव्यम्※ । प्राग्दीव्यतोऽण् प्राप्तः कालठञा बाधितः "सन्धिवेलाद्यृतुनक्षत्रेभ्यः" इति पुनर्विधीयते स वा डिद्भवतीति वक्तव्यम् । शतभिषजि जातः शातभिषः, शातभिषजः । ※तीयादीकक् स्वार्थे वा वक्तव्यः※ । द्वैतीयीकम् । तार्तीयीकम् । द्वितीयकम् । तृतीयकम् । ※न विद्यायाः※(१) । द्वितीया, तृतीया विद्या । ※गोत्रादङ्कवदिष्यते※ । दृष्टं सामेत्यस्मिन्नर्थे ।

---

**संज्ञायाम्**—श्रवण शब्द तथा अश्वत्थ शब्दों से संज्ञाविषय में विहित प्रत्यय का लुप् हो जाता है ।

**द्वन्द्वात्**—तृतीयासमर्थ नक्षत्रद्वन्द्व से 'युक्त काल' अर्थ में छ प्रत्यय होता है चाहे वह कालविशेष हो या कालसामान्य ।

**दृष्टम्**—तृतीयासमर्थ शब्द से 'दृष्ट' अर्थ में यथाविहित प्रत्यय होते हैं, यदि वह दृष्ट पदार्थ 'साम' हो ।

**कलेः**—तृतीयासमर्थ कलिशब्द से 'दृष्ट' अर्थ में ढक् प्रत्यय होता है ।

**सर्वत्र**—अग्नि तथा कलि शब्दों से सभी अर्थों में ढक् प्रत्यय समझना चाहिए ।

**दृष्टे**—दृष्टसामार्थिक अण् प्रत्यय विकल्प से डित् होता है ।

**जाते**—जात अर्थ में प्राप्त अण् प्रत्यय के बाध के पश्चात् पुनः प्राप्त अण् विकल्प से डित् हो जाता है ।

**तीयात्**—तीयप्रत्ययान्त शब्दों से स्वार्थ में विकल्प से ईकक् प्रत्यय अवगमनीय है ।

**न विद्यायाः**—विद्याविशेषणीभूत तीयप्रत्ययान्त शब्द से ईकक् प्रत्यय नहीं होता है ।

**गोत्रादङ्क**—जिस प्रकार 'तस्य अङ्कः' इस अर्थ में गोत्रप्रत्यय का विधान किया गया है उसी प्रकार 'दृष्टं साम' अर्थ में भी प्रत्यय का विधान समझना चाहिए ।

---

(१) विद्याया अभिधाने तीयादीकञ् न भवतीत्यर्थः ।

औपगवेन दृष्टं साम औपगवकम् । कापटवकम् । गोत्रचरणाद् वुञ् भवति ॥

दृष्टे सामनि जाते च द्विरण् डिद्वा विधीयते ।
तीयादीकक् न विद्याया गोत्रादङ्कवदिष्यते ॥

## वामदेवाड्ड्यड्ड्यौ ॥ ९ ॥

वामदेवशब्दात्तृतीयासमर्थाद् दृष्टं सामेत्येतस्मिन्नर्थे ड्यत् ड्य इत्येतौ प्रत्ययौ भवतः । अणोऽपवादः । वामदेवेन दृष्टं साम वामदेव्यं साम । तित्करणं स्वरार्थम् । डित्करणं किमर्थम् ? "ययतोश्चातदर्थे" इति नञ उत्तरस्यान्तोदात्तत्वे विधीयमानेऽनयोर्ग्रहणं मा भूत् । अननुबन्धकग्रहणपरिभाषया एकानुबन्धकग्रहणपरिभाषया चानयोर्निवृत्तिः क्रियते । अवामदेव्यम् ।

सिद्धे यस्येतिलोपेन किमर्थं ययतौ डितौ ।
ग्रहणं माऽतदर्थे भूद्वामदेव्यस्य नञ्स्वरे (१) ॥

## परिवृतो रथः ॥ १० ॥

तेनेति तृतीयासमर्थात् परिवृत इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, योऽसौ परिवृतो रथश्चेत् स भवति । वस्त्रेण परिवृतो रथः वास्त्रो रथः । काम्बलः । चार्मणः । रथ इति किम् ? वस्त्रेण परिवृतः कायः । समन्ताद्वेष्टितः परिवृत उच्यते । यस्य न कश्चिदवयवो वस्त्रादिभिर्वेष्टितः तत्र न भवति, तेनेह न-छात्रैः परिवृतो रथः ॥

## पाण्डुकम्बलादिनिः ॥ ११ ॥

पाण्डुकम्बलशब्दात्तृतीयासमर्थात्परिवृतो रथ इत्येतस्मिन्नर्थे इनिः प्रत्ययो भवति । अणोऽपवादः । पाण्डुकम्बली । पाण्डुकम्बलिनौ । पाण्डुकम्बलिनः । पाण्डुकम्बलशब्दो राजास्तरणस्य वर्णकम्बलस्य वाचकः । मत्वर्थीयेनैव सिद्धे वचनमणो निवृत्त्यर्थम् ॥

## द्वैपवैयाघ्रादञ् ॥ १२ ॥

द्वीपिव्याघ्रयोर्विकारभूते चर्मणी द्वैपवैयाघ्रे, ताभ्यां तृतीयासमर्थाभ्यां परिवृतो रथ इत्येतस्मिन्नर्थेऽञ् प्रत्ययो भवति । अणोऽपवादः । स्वरे विशेषः । द्वैपेन परिवृतो रथो द्वैपः । वैयाघ्रः ॥

## कौमारापूर्ववचने ॥ १३ ॥

कौमार इत्येतदण्प्रत्ययान्तं निपात्यतेऽपूर्ववचने । पाणिग्रहणस्यापूर्ववचनम् । उभयतः स्त्रियाम् अपूर्वत्वे निपातनमेतत् । अपूर्वपतिं कुमारीं पतिरुपपन्नः कौमारः पतिः । कुमारीशब्दाद् द्वितीयासमर्थादुपयन्तरि प्रत्ययः । अपूर्वपतिः कुमारी पतिमुपपन्ना कौमारी भार्या । प्रथमान्तादेव स्वार्थे प्रत्ययोऽपूर्वत्वे द्योत्ये ॥

---

**वाम**—तृतीयासमर्थ वामदेव शब्द से 'दृष्टं साम' अर्थ में ड्यत् तथा ड्य प्रत्यय होते हैं विकल्प से ।

**परिवृतोः**—तृतीयासमर्थ शब्द से 'परिवृत' अर्थ में यथाविहित प्रत्यय होते हैं यदि वह परिवृत पदार्थ रथ होता हो ।

**पाण्डु**—तृतीयासमर्थ पाण्डुकम्बल शब्द से 'परिवृतो रथः' अर्थ में इनि प्रत्यय होता है ।

**द्वैप**—तृतीयासमर्थ द्वैप तथा वैयाघ्र शब्दों से 'परिवृतो रथः' अर्थ में अञ् प्रत्यय होता है ।

**कौमारा**—अपूर्ववचन अर्थ में कौमार शब्द का निपातन किया जाता है ।

---

(१) नञ्स्वर इति-नञाश्रयः स्वरो नञ्स्वरः-उत्तरपदान्तोदात्तत्वम्, तस्मिन्विधीयमाने इत्यर्थः ।

कौमारापूर्ववचने कुमार्या अण्विधीयते ।
अपूर्वत्वं यदा तस्याः कुमार्यां भवतीति वा ॥
कुमार्यां भवः कौमारः पतिः, तस्य स्त्री कौमारी भार्येति सिद्धम् ॥

## तत्रोद्धृतममत्रेभ्यः ॥ १४ ॥

तत्रेति सप्तमीसमर्थादमत्रवाचिनः शब्दादुद्धृतमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । भुक्तोच्छिष्टमुद्धृतमुच्यते, यस्योद्धरणमिति(१) प्रसिद्धिः । अमत्रं भाजनं पात्रमुच्यते । शरावेषूद्धृतः शाराव ओदनः । माल्लिकः । कार्परः । अमत्रेभ्य इति किम् ? पाणावुद्धृत ओदनः । तत्रेति सप्तमी समर्थविभक्तिः "त्तीराड् ढञ्" इति यावदनुवर्त्तते ॥

## स्थण्डिलाच्छयितरि व्रते ॥ १५ ॥

स्थण्डिलशब्दात्सप्तमीसमर्थात् शयितर्यभिधेये यथाविहितं प्रत्ययो भवति समुदायेन चेद् व्रतं गम्यते । व्रतमिति शास्त्रतो नियम उच्यते । स्थण्डिले शयितुं व्रतमस्य स्थाण्डिलो भिक्षुः । स्थाण्डिलो ब्रह्मचारी । व्रत इति किम् ? स्थण्डिले शेते ब्रह्मदत्तः ॥

## संस्कृतं भक्षाः ॥ १६ ॥

तत्रेति सप्तमीसमर्थात्संस्कृतमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति यत्संस्कृतं भक्षाश्चेत्ते भवन्ति । खरविशदमभ्यवहार्यं भक्षमित्युच्यते(२) । सत उत्कर्षाधानं संस्कारः । भ्राष्ट्रे संस्कृता भक्षा भ्राष्ट्रा अपूपाः । कालशाः । कौम्भाः । भक्षा इति किम् ? पुष्पपुटे संस्कृतो मालागुणः ॥

## शूलोखाद्यत् ॥ १७ ॥

शूलशब्दादुखा(३)शब्दाच्च सप्तमीसमर्थात्संस्कृतं भक्षा इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति । अणोऽपवादः । शूले संस्कृतं शूल्यं मांसम् । उख्यम् ॥

## दध्नष्ठक् ॥ १८ ॥

दधिशब्दात्सप्तमीसमर्थात्संस्कृतं भक्षा इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । दधनि संस्कृतं दाधिकम् । ननु च संस्कृतार्थे प्राग्वहतेष्ठकं वक्ष्यति, तेनैव सिद्धम् ? न सिद्ध्यति, दध्ना हि तत्संस्कृतं यस्य दधिकृतमेवोत्कर्षाधानम्, इह तु दधि केवलमाधारभूतम् , द्रव्यान्तरेण लवणादिना संस्कारः क्रियते ॥

---

तत्रोद्धृतम्—सप्तमीसमर्थ पात्रवाचक शब्द से 'उद्धृत' अर्थ में यथाविहित प्रत्यय होते हैं ।

स्थण्डिलात्—सप्तमीसमर्थ स्थण्डिल शब्द से 'शयितृ' अर्थ में यथाविहित प्रत्यय होते हैं यदि समुदाय से व्रत की प्रतीति होती हो ।

संस्कृतम्—सप्तमीसमर्थ शब्द से 'संस्कृत' अर्थ में यथाविहित प्रत्यय होते हैं यदि वह संस्कृत पदार्थ भक्ष ( कठिन तथा विशद भोज्य पदार्थ ) होता हो ।

शूलोखात्—सप्तमीसमर्थ शूल शब्द तथा उखा शब्दों से 'संस्कृतं भक्षाः' अर्थ में यत् प्रत्यय होता है ।

दध्नः—सप्तमीसमर्थ दधि शब्द से 'संस्कृतं भक्षाः' अर्थ में ठक् प्रत्यय होता है ।

---

( १ ) अत्रोद्धरतिरुद्धरणपूर्वके निधाने वर्तते । तेन सप्तमीसमर्थाद्विभक्तिर्नोपपद्यते ।

( २ ) भक्षशब्देनोच्यते इति पदमञ्जर्या पाठः ।

( ३ ) उखा पात्रविशेषः ।

## उदश्वितोऽन्यतरस्याम् ॥ १९ ॥

उदश्विच्छब्दात्सप्तमीसमर्थात् संस्कृतं भक्षा इत्येतस्मिन्नर्थेऽन्यतरस्यां ठक् प्रत्ययो भवति। पक्षे यथाप्राप्तमण् भवति। औदश्वितम्, औदश्वित्कम् ॥

## क्षीराड्ढञ् ॥ २० ॥

क्षीरशब्दात् सप्तमीसमर्थात् संस्कृतं भक्षा इत्येतस्मिन्नर्थे ढञ् प्रत्ययो भवति। अणोऽपवादः। क्षीरे संस्कृता क्षैरेयी यवागूः ॥

## साऽस्मिन् पौर्णमासीति संज्ञायाम् ॥ २१ ॥

सेति प्रथमासमर्थाद् अस्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति, यत्तत्प्रथमासमर्थं पौर्णमासी चेद्भवति, इतिकरणस्ततश्चेद्विवक्षा। संज्ञायामिति समुदायोपाधिः, प्रत्ययान्तेन चेत्संज्ञा गम्यत इति। मासार्द्धमाससंवत्सराणामेषा संज्ञा। पौषी पौर्णमासी अस्मिन् पौषो मासः, पौषोऽर्द्धमासः, पौषः संवत्सरः। इह न भवति–पौषी पौर्णमासी अस्मिन् दशरात्र इति। भृतकमासे च(१) न भवति। इतिकरणस्य च तुल्यमेव फलं प्रयोगानुसरणम्, तत्र किमर्थं द्वयमुपादीयते? संज्ञाशब्देन तुल्यतामितिकरणस्य ज्ञापयितुम्, न ह्ययं लोके तथा प्रसिद्धः। संज्ञार्थत्वे(२) तु संप्रति ज्ञापिते यत्तत्र तत्रोच्यते इतिकरणस्ततश्चेद्विवक्षेति तदुपपन्नं भवति। अथ पौर्णमासीति कोऽयं शब्दः? पूर्णमासादण् पौर्णमासी। अथवा, पूर्णो माः पूर्णमाः, पूर्णमास इयं पौर्णमासी। मा इति चन्द्र उच्यते ॥

## आग्रहायण्यश्वत्थाट्ठक् ॥ २२ ॥

साऽस्मिन्पौर्णमासीति सर्वमनुवर्तते। आग्रहायणीशब्दादश्वत्थशब्दाच्च प्रथमासमर्थात्पौर्णमास्युपाधिकाद् अस्मिन्निति सप्तम्यर्थे ठक् प्रत्ययो भवति। अणोऽपवादः। आग्रहायणिको मासः, अर्द्धमासः, संवत्सरः। एवमाश्वत्थिकः ॥

## विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यः ॥ २३ ॥

फाल्गुन्यादयः पौर्णमासीशब्दास्तेभ्यो विभाषा ठक् प्रत्ययो भवति, साऽस्मिन् पौर्णमासीति संज्ञायामित्येतस्मिन् विषये। नित्यमणि प्राप्ते पक्षे ठग्विधीयते।

---

उदश्वितः—सप्तमीसमर्थ उदश्वित् शब्द से 'संस्कृतं भक्षाः' अर्थ में विकल्प से ठक् प्रत्यय होता है।

क्षीरात्—सप्तमीसमर्थ क्षीर शब्द से 'संस्कृतं भक्षाः' अर्थ में ढञ् प्रत्यय होता है।

साऽस्मिन्—प्रथमासमर्थ शब्द से सप्तम्यर्थ में यथाविहित प्रत्यय होते हैं यदि वह सप्तम्यर्थ पौर्णमासीस्वरूप हो।

आग्र—प्रथमासमर्थ पौर्णमासी-प्रतिपादक आग्रहायणी तथा अश्वत्थ शब्दों से सप्तम्यर्थ में ठक् प्रत्यय होता है।

विभाषा—प्रथमासमर्थ पौर्णमासीवाचक फाल्गुनी, श्रवणा, कार्त्तिकी तथा चैत्री शब्दों से विकल्प से ठक् प्रत्यय होता है।

---

(१) भृतकमासे चेति—भृता एव भृतकाः कर्मकराः, तेषां यो मासः कर्मकरणादारभ्य त्रिंशद्रात्रलक्षणः स यदा पौष्या पौर्णमास्या तद्वान् भवति वस्तुतश्च न माघादिव्यपदेशभाक् तत्रेत्यर्थः।

(२) संज्ञार्थत्व इति–संज्ञया तुल्योऽर्थो यस्य स संज्ञार्थः। तस्य भावः संज्ञार्थत्वम्, तस्मिन् संज्ञार्थत्वे इति।

फाल्गुनो मासः, फाल्गुनिकः। श्रावणः, श्रावणिकः। कार्त्तिकः, कार्त्तिकिकः। चैत्रः, चैत्रिकः॥

## सास्य देवता ॥ २४ ॥

सेति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत्प्रथमासमर्थं देवता चेत् सा भवति। यागसंप्रदानं देवता देयस्य पुरोडाशादेः स्वामिनी, तस्मिन्नभिधेये प्रत्ययः। इन्द्रो देवताऽस्य ऐन्द्रं हविः। आदित्यम्। बार्हस्पत्यम्। प्राजापत्यम्। देवतेति किम्? कन्या देवताऽस्य। कथमैन्द्रो मन्त्रः? मन्त्रस्तुत्यमपि देवतेत्युपचरन्ति। कथमाग्नेयो वै ब्राह्मणो देवतेति? उपमानाद्भविष्यति। "महाराजप्रोष्ठपदाट्ठञ्" इति यावत् "सास्य देवता" इत्यधिकारः। सेति प्रकृते पुनः समर्थविभक्तिनिर्देशः संज्ञानिवृत्त्यर्थः॥

## कस्येत् ॥ २५ ॥

कशब्दो देवतायां प्रजापतेर्वाचकः, ततः पूर्वेणैवाण्प्रत्ययः सिद्ध इकारादेशार्थं वचनम्। कस्य इकारादेशो भवति प्रत्ययसन्नियोगेन। कायं हविः। कायमेककपालं निर्वपेत्॥

## शुक्राद् घन् ॥ २६ ॥

शुक्रशब्दात् सास्य देवतेत्यस्मिन्नर्थे घन् प्रत्ययो भवति। अणोऽपवादः। शुक्रियं हविः। शुक्रियोऽध्यायः॥

## अपोनप्त्रपान्नप्तृभ्यां घः ॥ २७ ॥

अपोनप्तृ, अपान्नप्तृ इत्येताभ्यां घः प्रत्ययो भवति सास्य देवतेत्यस्मिन् विषये। अणोऽपवादः। अपोनप्त्रियं हविः। अपांनप्त्रियम्। अपोनपात्, अपांनपादिति देवताया नामधेये एते। तयोस्तु प्रत्ययसन्नियोगेन रूपमिदं निपात्यते॥

## छ च ॥ २८ ॥

अपोनप्तृ, अपान्नप्तृ इत्येताभ्यां छकारः प्रत्ययो भवति सास्य देवतेत्यस्मिन् विषये। अणोऽपवादः। अपोनप्त्रीयं हविः। अपान्नप्त्रीयम्। योगविभागः संख्यातानुदेशपरिहारार्थः। ❀छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसंख्यानम्❀। पैङ्गाक्षीपुत्रीयम्। तार्णबिन्दवीयम्। ❀शतरुद्राच्छश्च घश्च❀। शतरुद्रीयम्, शतरुद्रियम्॥

---

सास्य—प्रथमासमर्थ शब्द से षष्ठ्यर्थ में यथाविहित प्रत्यय होते हैं यदि वह षष्ठ्यर्थ देवता हो।

कस्येत्—प्रजापतिवाचक 'क' शब्द के स्थान में, देवतार्थक प्रत्यय के साथ-साथ, इकार आदेश भी हो जाता है।

शुक्रात्—शुक्र शब्द से 'सास्य देवता' अर्थ में घन् प्रत्यय होता है।

अपो—'सास्य देवता' अर्थ में अपोनप्तृ तथा अपान्नप्तृ शब्दों से घ प्रत्यय होता है।

छ च—उपर्युक्त शब्दों से छ प्रत्यय भी होता है।

छप्रकरणे—छ प्रत्यय के प्रकरण में पैङ्गाक्षीपुत्र आदि शब्दों का भी प्रकृति के रूप में समावेश समझना चाहिए।

शत—शतरुद्र शब्द से 'सास्य देवता' अर्थ में छ तथा घ प्रत्यय होते हैं विकल्प से।

## महेन्द्राद् घाणौ च ॥ २९ ॥

महेन्द्रशब्दाद् घाणौ प्रत्ययौ भवतः, चकाराच्छश्च, सास्य देवतेत्यस्मिन् विषये। महेन्द्रो देवतास्य महेन्द्रियं हविः, माहेन्द्रम्, महेन्द्रीयम् ॥

## सोमाट्ट्यण् ॥ ३० ॥

सोमशब्दात् ट्यण्प्रत्ययो भवति सास्य देवतेत्यस्मिन् विषये । अणोऽपवादः। णकारो वृद्ध्यर्थः । टकारो ङीवर्थः । सोमो देवतास्य सौम्यं हविः। सौम्यं सूक्तम्। सौमी ऋक् ॥

## वाय्वृतुपित्रुषसो यत् ॥ ३१ ॥

वाय्वादिभ्यः शब्देभ्यो यत्प्रत्ययो भवति सास्य देवतेत्येतस्मिन् विषये। अणोऽपवादः। वायुर्देवतास्य वायव्यम्। ऋतव्यम्। पित्र्यम्(१)। उषस्यम् ॥

## द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च ॥ ३२ ॥

द्यावापृथिव्यादिभ्यश्छः प्रत्ययो भवति चकाराद् यत् सास्य देवतेत्यस्मिन् विषये । अणो ण्यस्य चापवादः। द्यौश्च पृथिवी च द्यावापृथिव्यौ देवते अस्य द्यावापृथिवीयम्, द्यावापृथिव्यम्। शुनश्च सीरश्च तौ देवते अस्येति शुनासीरीयम्, शुनासीर्यम् । शुनो वायुः। सीर आदित्यः। मरुत्वान् देवतास्य मरुत्वतीयम्, मरुत्वत्यम् । अग्नीषोमीयम्, अग्नीषोम्यम्। वास्तोष्पतीयम् वास्तोष्पत्यम्। गृहमेधीयम्, गृहमेध्यम् ॥

## अग्नेर्ढक् ॥ ३३ ॥

अग्निशब्दात् ढक् प्रत्ययो भवति सास्य देवतेत्यस्मिन् विषये । अणोपवादः। अग्निर्देवतास्य आग्नेयोऽष्टाकपालः। *प्राग्दीव्यतीयेषु तद्धितार्थेषु सर्वत्राग्निकलिभ्यां ढग्वक्तव्यः* ॥

## कालेभ्यो भववत् ॥ ३४ ॥

कालविशेषवाचिभ्यः शब्देभ्यो भववत्प्रत्यया भवन्ति सास्य देवतेत्यस्मिन् विषये। "कालाट्ठञ्" इति प्रकरणे भवे प्रत्यया विधास्यन्ते, ते सास्य देवतेत्यस्मिन्नर्थे तथैवेष्यन्ते, तदर्थमिदमुच्यते । वत्करणं सर्वसादृश्यपरिग्रहार्थम् । मासे भवं मासिकम्। आर्द्धमासिकम्। सांवत्सरिकम्। वासन्तम्। प्रावृषेण्यम्। तथा—मासो देवतास्य मासिकम् । आर्द्धमासिकम्। सांवत्सरिकम्। वासन्तम्। प्रावृषेण्यम्।

---

**महेन्द्रात्**—महेन्द्र शब्द से 'सास्य देवता' अर्थ में विकल्प से घ प्रत्यय तथा अण् प्रत्यय होते हैं।

**सोमात्**—सोम शब्द से 'सास्य देवता' अर्थ में ट्यण् प्रत्यय होता है।

**वाय्वृतु**—वायु, ऋतु, पितृ तथा उषस् शब्दों से 'सास्य देवता' अर्थ में यत् प्रत्यय होता है।

**द्यावा**—द्यावापृथिवी, शुनासीर, मरुत्वत्, अग्नीषोम, वास्तोष्पति तथा गृहमेध शब्दों से 'सास्य देवता' अर्थ में विकल्प से छ प्रत्यय तथा यत् प्रत्यय होते हैं।

**अग्नेः**—अग्नि शब्द से 'सास्य देवता' अर्थ में ढक् प्रत्यय होता है।

**प्राग्दीव्य**—प्राग्दीव्यतीय तद्धित प्रत्ययों के अर्थों में अग्नि तथा कलि शब्दों से ढक् प्रत्यय समझना चाहिए।

**कालेभ्यो**—कालविशेषवाचक शब्दों से भवार्थ में जिस प्रकार प्रत्ययों का विधान किया गया है उसी प्रकार देवतार्थ में भी समझना चाहिए।

---

(१) पित्र्यमिति—रीङ् ऋत इति रीङ्, यस्येति लोपः।

## महाराजप्रोष्ठपदाट्ठञ् ॥ ३५ ॥

महाराजशब्दात्प्रोष्ठपदशब्दाच्च ठञ् प्रत्ययो भवति सास्य देवतेत्यस्मिन् विषये। महाराजो देवतास्य माहाराजिकम्। प्रौष्ठपदिकम्। ॐठञ्प्रकरणे तदस्मिन् वर्तत इति नवयज्ञादिभ्य उपसंख्यानम्ॐ। नवयज्ञोऽस्मिन् वर्तते नावयज्ञिकः कालः। पाकयज्ञिकः। ॐपूर्णमासादण्ॐ। पूर्णमासोऽस्यां वर्तते पौर्णमासी तिथिः॥

## पितृव्यमातुलमातामहपितामहाः ॥ ३६ ॥

पितृव्यादयो निपात्यन्ते। समर्थविभक्तिः, प्रत्ययः, प्रत्ययार्थोऽनुबन्ध इति सर्वं निपातनाद्विज्ञेयम्। पितृमातृभ्यां भ्रातर्यभिधेये व्यत् डुलच् इत्येतौ प्रत्ययौ निपात्येते। पितुर्भ्राता पितृव्यः। मातुर्भ्राता मातुलः। ॐताभ्यां पितरि डामहच्, मातरि षिच्चॐ। ताभ्यामेव पितरि डामहच् प्रत्ययो भवति। पितुः पिता पितामहः। मातुः पिता मातामहः। मातरि षिच्च। पितामही। मातामही। ॐअवेर्दुग्धे सोढदूसमरीसचो वक्तव्याःॐ। अवेर्दुग्धमविसोढम्। अविदूसम्। अविमरीसम्। ॐतिलान्निष्फलात्पिञ्जपेजौ प्रत्ययौ वक्तव्यौॐ। निष्फलस्तिलस्तिलपिञ्जः। तिलपेजः। ॐपिञ्जश्छन्दसि डिच्चॐ। तिलिपञ्जः॥

## तस्य समूहः ॥ ३७ ॥

तस्येति षष्ठीसमर्थात् समूह इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। किमिहोदाहरणम्? चित्तवदाद्युदात्तमगोत्रं यस्य च नान्यत्प्रातिपदं ग्रहणम्। अचित्ताट्ठकं वक्ष्यति—"अनुदात्तादेरञ्", "गोत्राद् वुञ्", प्रतिपदं च—"केदाराद्यञ्च" इत्येवमादि, तत्परिहारेणात्रोदाहरणं द्रष्टव्यम्—काकानां समूहः काकम्। शौकम्(१)। बाकम्। "इनित्रकट्यचश्च" इति यावत्समूहाधिकारः। ॐगुणादिभ्यो ग्रामज्वक्तव्यःॐ। गुणग्रामः। करणग्रामः। गुण। करण। तत्त्व। शब्द। इन्द्रिय। आकृतिगणः(२)॥

---

**महाराज**—महाराज तथा प्रोष्ठपद शब्दों से 'सास्य देवता' अर्थ में ठञ् प्रत्यय होता है।

**ठञ्प्रकरणे**—ठञ् के प्रकरण में 'अस्मिन् वर्त्तते' (इसमें वर्त्तमान है) अर्थ में नवयज्ञादि शब्दों का भी समावेश अवगन्तव्य है।

**पूर्ण**—पूर्णमास शब्द से वर्त्तनार्थ में अण् प्रत्यय होता है।

**पितृव्य**—भ्राता के अभिधान के लिए प्रयुक्त पितृ तथा मातृ शब्दों से क्रमशः व्यत् तथा डुलच् प्रत्यय होते हैं।

**ताभ्याम्**—पिता के अर्थ में प्रयुक्त पितृ तथा मातृ शब्दों से डामहच् प्रत्यय होता है और मातृशब्द से विहित प्रत्यय षित् भी हो जाता है।

**अवेः**—अवि शब्द से दुग्ध अर्थ में सोढ, दूस तथा मरीस प्रत्यय होते हैं।

**तिलात्**—निष्फल तिल से पिञ्ज तथा पेज प्रत्यय अवगन्तव्य हैं।

**पिञ्जः**—वेद में विहित तिलप्रकृतिक पिञ्ज प्रत्यय डित् भी हो जाता है।

**तस्य**—षष्ठीसमर्थ शब्द से समूह अर्थ में यथाविहत प्रत्यय होते हैं।

**गुणादिभ्यः**—गुण आदि शब्दों से समूह अर्थ में ग्रामच् प्रत्यय समझना चाहिए।

---

(१) वस्तुतस्तु खण्डिकादिगणे शुकशब्दस्य पाठात् नेदमुदाहरणमिति बोध्यम्। एवमेव पदमञ्जरीकारोऽपि प्राह। (श्रीना०)

(२) क्वचिन्नास्त्ययं पाठः।

## भिक्षादिभ्योऽण् ॥ ३८ ॥

भिक्षेत्येवमादिभ्यः शब्देभ्योऽण् प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये। अण्ग्रहणं बाधकबाधनार्थम्। भिक्षाणां समूहो भैक्षम्। गार्भिणम्। युवतिशब्दोऽत्र पठ्यते, तस्य ग्रहणसामर्थ्यात् पुंवद्भावो न भवति-"भस्याढे तद्धिते" इति। युवतीनां समूहो यौवतम्। भिक्षा। गर्भिणी। क्षेत्र। करीष। अङ्गार। चर्मिन्। धर्मिन्(१)। सहस्र। युवति। पदाति। पद्धति। अथर्वन्(२)। दक्षिणा। भूत(३)॥

## गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ् ॥ ३९ ॥

गोत्रादिभ्यो वुञ्प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये। अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यतेऽपत्यमात्रं न तु पौत्रप्रभृत्येव। औपगवानां समूहः औपगवकम्। कापटवकम्। उक्षन्-औक्षकम्। उष्ट्र-औष्ट्रकम्। उरभ्र-औरभ्रकम्। राजन्-राजकम्। राजन्य-राजन्यकम्। राजपुत्र-राजपुत्रकम्। वत्स-वात्सकम्। मनुष्य-मानुष्यकम्। अज-आजकम्। "प्रकृत्याऽके राजन्यमनुष्ययुवानः" इति यलोपो न भवति—"आपत्यस्य च तद्धितेऽनाति" इति। *वृद्धाच्चेति वक्तव्यम्*। वृद्धानां समूहो वार्द्धकम्॥

## केदाराद्यञ्च ॥ ४० ॥

केदारशब्दाद् यञ् प्रत्ययो भवति, चकाराद् वुञ् च, तस्य समूह इत्येतस्मिन् विषये। अचित्तलक्षणस्य ठकोऽपवादः। केदाराणां समूहः कैदार्यम्। कैदारकम्। *गणिकायाश्च यञ्वक्तव्यः*। गणिकानां समूहो गाणिक्यम्॥

## ठञ् कवचिनश्च ॥ ४१ ॥

कवचिन्शब्दाट्ठञ् प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये। कवचिनां समूहः कावचिकम्। चकारः केदारादित्यस्यानुकर्षणार्थः। केदाराणां समूहः कैदारिकम्॥

## ब्राह्मणमाणववाडवाद्यन् ॥ ४२ ॥

ब्राह्मणादिभ्यः शब्देभ्यो यन् प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये। नकारः स्वरार्थः। ब्राह्मणानां समूहो ब्राह्मण्यम्। माणव्यम्। वाडव्यम्। *यन्प्रकरणे पृष्ठादुप-

---

**भिक्षादिभ्योऽण्**—भिक्षा आदि शब्दों से समूह अर्थ में अण् प्रत्यय होता है।

**गोत्रोक्षोष्ट्रोरभ्र**—गोत्र आदि शब्दों से समूह अर्थ में वुञ् प्रत्यय होता है।

**वृद्धाच्चेति**—वृद्ध शब्द से भी समूहार्थक वुञ् प्रत्यय समझना चाहिए।

**केदारात्**—केदार शब्द से भी समूह अर्थ में विकल्प से यञ् तथा वुञ् प्रत्यय होते हैं।

**गणिकायाश्च**—गणिका शब्द से भी समूह अर्थ में यञ् प्रत्यय समझना चाहिए।

**ठञ्**—कवचिन् तथा केदार शब्दों से समूह अर्थ में ठञ् प्रत्यय होता है।

**ब्राह्मण**—ब्राह्मण, मानव तथा वाडव शब्दों से समूह अर्थ में यन् प्रत्यय होता है।

**यन्प्रकरणे**—पृष्ठ शब्द से भी यन् प्रत्यय समझना चाहिए।

---

(१) चर्मन्, धर्मन् इति पाठः।

(२) अर्वन् इति पाठः।

(३) विषय। श्रोत्र। वृक्षादिभ्यः खण्डः। वृक्षखण्डः। तरुखण्डः। वृक्ष, तरु, पादप, इत्यधिकं क्वचित्। क्वचित्तु-वृक्षादिभ्यः षण्डप्रत्ययो भवति। वृक्षषण्डः। तरुषण्डः।

संख्यानम्॥। पृष्ठानां समूहः पृष्ठ्यः। ॥अह्नः खः क्रतौ॥। अह्नां समूहोऽह्नीनः क्रतुः। क्रताविति किम्? आह्नः। खण्डिकादिषु दर्शनादञ्भवति। ॥पर्श्वा णस्वक्तव्यः। पर्शूनां समूहः पार्श्वम्। पदसंज्ञकत्वाद् गुणो न भवति। ॥वातादूलः॥। वातानां समूहो वातूलः(१)॥

## ग्रामजनबन्धुसहायेभ्यस्तल् ॥ ४३ ॥

ग्रामादिभ्यस्तल् प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये। ग्रामाणां समूहो ग्रामता। जनता। बन्धुता। सहायता। ॥गजाच्चेति वक्तव्यम्॥। गजानां समूहो गजता॥

## अनुदात्तादेरञ् ॥ ४४ ॥

अनुदात्तादेः शब्दादञ्प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये। कपोतानां समूहः कापोतम्। मायूरम्। तैत्तिरम्॥

## खण्डिकादिभ्यश्च ॥ ४५ ॥

खण्डिका इत्येवमादिभ्यः शब्देभ्योऽञ् प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये। आद्युदात्तार्थमचित्तार्थं च वचनम्। खण्डिकानां समूहः खाण्डिकम्। वाडवम्। क्षुद्रकमालवशब्दोऽत्र पठ्यते। क्षुद्रकाश्च मालवाश्चेति क्षत्त्रियद्वन्द्वः। ततः पूर्वेणैवाञि सिद्धे वचनं गोत्रवुञ्बाधनार्थम्। ननु च परत्वादञा वुञ् बाधिष्यते। न च गोत्रसमुदायो गोत्रम्, न च तदन्तविधिरत्रास्ति? एवं तर्हि एतज् ज्ञापयति–वुञि पूर्वविप्रतिषेधः, सामूहिकेषु च तदन्तविधिरस्तीति। प्रयोजनमौपगवकं कापटवकमिति वुञ् भवति; वानहस्तिकं गौधेनुकमिति च तदन्तविधिः। क्षुद्रकमालवादित्येतावता योगविभागेन पूर्वप्रतिषेधस्तदन्तविधिश्च ज्ञापितः, पुनरस्यैव नियमार्थमुच्यते—सेनासंज्ञायामिति। क्षुद्रकमालवात्सेनासंज्ञायामेवाञ्भवति। क्षौद्रकमालवी सेना। क्षौद्रकमालवकमन्यत(२)।

> अञ्सिद्धिरनुदात्तादेः कोऽर्थः क्षुद्रकमालवात्।
> गोत्राद्वुञ् न च तद्गोत्रं तदन्तान्न च सर्वतः॥
> ज्ञापकं स्यात्तदन्तत्वे तथा चापिशलेर्विधिः।
> सेनायां नियमार्थं च यथा बाध्येत चाञ् वुञा॥

खण्डिका। वडवा। क्षुद्रकमालवात्सेनासंज्ञायाम्। भिक्षुक। शुक। उलूक। श्वन्युग। अहन्। वरत्रा। हलबन्ध॥

---

अह्नः—अहन् शब्द से, क्रतु के अभिधेय होने पर, समूह अर्थ में ख प्रत्यय होता है।
पर्श्वाः—पर्शु शब्द में समूह अर्थ में णस् प्रत्यय समझना चाहिए।
वातात्—वात शब्द से समूह अर्थ में ऊल प्रत्यय समझना चाहिए।
ग्राम—ग्राम, जन, बन्धु तथा सहाय शब्दों से समूह अर्थ में तल् प्रत्यय होता है।
गजाच्चेति—गज शब्द से भी समूहार्थ में तल् प्रत्यय समझना चाहिए।
अनुदात्तादेः—अनुदात्तादि शब्दों से समूहार्थ में अञ् प्रत्यय होता है।
खण्डिकादिभ्यश्च—खण्डिका आदि शब्दों से भी समूह अर्थ में अञ् प्रत्यय होता है।

---

(१) क्वचिन्नास्त्ययं पाठः।
(२) अत्राधिकं क्वचित्—गोत्रलक्षणो वुञेव भवति इति।

## चरणेभ्यो धर्मवत् ॥ ४६ ॥

चरणशब्दाः कठकलापादयः, तेभ्यः षष्ठीसमर्थेभ्यः समूहे धर्मवत् प्रत्यया भवन्ति। "गोत्रचरणाद्वुञ्" इत्यारभ्य प्रत्यया वक्ष्यन्ते, तत्र चेदमुच्यते—चरणाद्धर्माम्नाययोरिति, तेन धर्मवदित्यतिदेशः क्रियते। वतिः सर्वसादृश्यार्थः। कठानां धर्मः काठकम्। कालापकम्। छान्दोग्यम्। औक्थिक्यम्। आथर्वणम्। तथा समूहेऽपि—काठकम्, कालापकम्, छान्दोग्यम्, औक्थिक्यम्, आथर्वणम् ॥

## अचित्तहस्तिधेनोष्ठक् ॥ ४७ ॥

अचित्तार्थेभ्यो हस्तिधेनुशब्दाभ्यां च ठक् प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये। अणञोरपवादः। अपूपानां समूहः आपूपिकम्। शाष्कुलिकम्। हास्तिकम्। धैनुकम्। ॐधेनोरनञ इति वक्तव्यम्ॐ। आधेनवम् ॥

## केशाश्वाभ्यां यञ्छावन्यतरस्याम् ॥ ४८ ॥

केश, अश्व इत्येताभ्यां यथासंख्यं यञ्, छ इत्येतौ प्रत्ययौ भवतोऽन्यतरस्यां तस्य समूह इत्येतस्मिन् विषये। केशानां समूहः कैश्यम्, कैशिकम्। अश्वानां समूहः आश्वम्, अश्वीयम् ॥

## पाशादिभ्यो यः ॥ ४९ ॥

पाशादिभ्यो यः प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये। पाशानां समूहः पाश्या। तृण्या(१)। पाश। तृण। धूम। वात। अङ्गार। पोत। बालक। पिटक। पिटाक। शकट। हल। तड। वन(२) ॥

## खलगोरथात् ॥ ५० ॥

खलगोरथशब्देभ्यो यः प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये। खलानां समूहः खल्या। गव्या। रथ्या। पाशादिष्वपाठ उत्तरार्थः(३)।

## इनित्रकट्यचश्च ॥ ५१ ॥

खलगोरथशब्देभ्यो यथासंख्यम् इनि, त्र, कट्यच् इत्येते प्रत्यया भवन्ति तस्य समूह इत्येतस्मिन् विषये। खलिनी। गोत्रा। रथकट्या। ॐखलादिभ्य इनिर्वक्तव्यःॐ। डाकिनी। कुण्डलिनी। कुटुम्बिनी। ॐकमलादिभ्यः खण्डच् प्रत्ययो भवतिॐ। कमलखण्डम्। अम्भोज-

---

**चरणेभ्यो**—षष्ठीसमर्थ चरणवाचक शब्दों से समूह अर्थ में धर्मार्थक प्रत्ययों की तरह प्रत्यय होते हैं।

**अचित्त**—अचित्तार्थक, हस्ति तथा धेनु शब्दों से समूहार्थ में ठक् प्रत्यय होता है।

**धेनोः**—अनञ्पूर्वक धेनु शब्द से ठक् प्रत्यय समझना चाहिए।

**केशाश्वाभ्याम्**—केश तथा अश्व शब्दों से समूहार्थ में क्रमशः यञ् तथा छ प्रत्यय होते हैं विकल्प से।

**पाशादिभ्यो**—पाश आदि शब्दों से समूहार्थ मे य प्रत्यय होता है।

**खल**—खल, गो तथा रथ शब्दों से समूहार्थ में य प्रत्यय होता है।

**इनित्र**—खल, गो तथा रथ शब्दों से समूहार्थ में क्रमशः इनि, त्र तथा कट्यच् प्रत्यय होते हैं।

**खलादिभ्यः**—खल आदि शब्दों से इनि प्रत्यय समझना चाहिए।

**कमलादिभ्यः**—कमल आदि शब्दों से खण्डच् प्रत्यय समझना चाहिए।

---

(१) अत्र स्त्रीलिङ्गत्वं लोकाश्रयत्वाल्लिङ्गस्येत्यधिकं पुस्तकान्तरे।

(२) पाटलका, गल इति क्वचिदधिकम्।

(३) योगविभाग उत्तरार्थः इति पाठान्तरम्।

खण्डम् । कमल । अम्भोज । पद्मिनी । कुमुद । सरोज । पद्म । नलिनी । कैरविणी । कमलादिराकृतिगणः । ॐनरकरितुरङ्गाणां स्कन्धच् प्रत्ययःॐ । नरस्कन्धः । करिस्कन्धः । तुरङ्गस्कन्धः । ॐपूर्वादिभ्यः काण्डः प्रत्ययो भवतिॐ । पूर्वकाण्डम् । तृणकाण्डम् । कर्मकाण्डम्(१) ।

## विषयो देशे ॥ ५२ ॥

समूह इति निवृत्तम् । षष्ठी समर्थविभक्तिरनुवर्त्तते । तस्येति षष्ठीसमर्थाद् विषय इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, योऽसौ विषयो देशश्चेत्स भवति । विषयशब्दो बह्वर्थः—क्वचिद् ग्रामसमुदाये वर्त्तते—विषयो लब्ध इति; क्वचिदिन्द्रियग्राह्ये—चक्षुर्विषयो रूपमिति; क्वचिदत्यन्तशीलिते ज्ञेये—देवदत्तस्य विषयोऽनुवाक इति; क्वचिदन्यत्राभावे—मत्स्यानां विषयो जलमिति । तत्र देशग्रहणं ग्रामसमुदायप्रतिपत्त्यर्थम् । शिबीनां विषयो देशः शैबः । औष्ट्रः । देश इति किम् ? देवदत्तस्य विषयोऽनुवाकः ॥

## राजन्यादिभ्यो वुञ् ॥ ५३ ॥

राजन्यादिभ्यः शब्देभ्यो वुञ् प्रत्ययो भवति विषयो देश इत्येतस्मिन्नर्थे । अणोऽपवादः । राजन्यानां विषयो देशः राजन्यकः । दैवयानकः । आकृतिगणश्चायम् । मालवानां विषयो देशः मालवकः । वैराटकः । त्रैगर्त्तकः । राजन्य । देवयान । शालङ्कायन । जालन्धरायण । आत्मकामेय । अम्बरीषपुत्र । वसाति । बैल्ववन । शैलूष । उदुम्बर । बैल्वल । आर्जुनायन । सम्प्रिय । दाक्षि । ऊर्णनाभ(२) ॥

## भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ ॥ ५४ ॥

भौरिक्यादिभ्य ऐषुकार्यादिभ्यश्च यथासंख्यं विधल्, भक्तल् इत्येतौ प्रत्ययौ भवतो विषयो देश इत्येतस्मिन् विषये । अणोऽपवादः । भौरिकिविधः । वैपेयविधः । ऐषुकार्यादिभ्यः—ऐषुकारिभक्तः, सारस्यायनभक्तः । भौरिकि । वैपेय । भौलिकि । चैटयत । काणेय । वाणिजक । वालिज । वालिज्यक । शैकयत । वैकयत । इति भौरिक्यादिः ॥ ऐषुकारि । सारस्यायन । चान्द्रायण । द्व्याक्षायण । त्र्यायण । औडायन । जौलायन । खाडायन । सौवीर । दासमित्रि । दासमित्रायण । शौद्रायण(३) । दाक्षायण । शयण्ड । तार्क्ष्यायण । शौभ्रायण । सायण्डि । शौण्डि । वैश्वमाणव । वैश्वधेनव । नद । तुण्डदेव । विशदेव(४) ॥

---

नरकरि—नर, करि तथा तुरङ्ग शब्दों से स्कन्धच् प्रत्यय समझना चाहिए ।

पूर्वादिभ्यः—पूर्व आदि शब्दों से काण्ड प्रत्यय समझना चाहिए ।

विषयो—षष्ठीसमर्थ शब्दों से विषय अर्थ में यथाविहित प्रत्यय होते हैं यदि वह विषय देशात्मक हो ।

राजन्यादिभ्यः—राजन्य आदि शब्दों से 'विषयो देशः' अर्थ में वुञ् प्रत्यय होता है ।

भौरि—भौरिक्य आदि शब्दों तथा ऐषुकारी आदि शब्दों से यथाक्रम विधल् तथा भक्तल् प्रत्यय होते है 'विषयो देशः' अर्थ में ।

---

(१) कमलादिभ्य इत्यारभ्य कर्मकाण्डमित्यन्तः क्वचिन्नास्ति पाठः ।

(२) अत्राधिकमिदम्—अप्रीत, अग्रीड, वीतल, वात्रक इति ।

(३) शोद्राण इति पण्डितपत्रमुद्रितपुस्तके ।

(४) अधिकमत्रेदम् क्वचित्—अलायत, औलालायत, शौण्ड, शयाण्ड, वैद्रदेव इति ।

## सोऽस्यादिरितिच्छन्दसः प्रगाथेषु ॥ ५५ ॥

स इति समर्थविभक्तिः । अस्येति प्रत्ययार्थः । आदिरिति प्रकृतिविशेषणम् । इतिकरणो विवक्षार्थः । छन्दस इति प्रकृतिनिर्देशः । प्रगाथेष्विति प्रत्ययार्थविशेषणम् । स इति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत्प्रथमासमर्थं छन्दश्चेत्तदादिर्भवति, यत्तदस्येति निर्दिष्टं प्रगाथाश्चेत्ते भवन्ति, इतिकरणस्ततश्चेद्विवक्षा । पङ्क्तिरादिरस्य पाङ्क्तः प्रगाथः । आनुष्टुभः । जागतः(१) । आदिरिति किम् ? अनुष्टुम्मध्यमस्य प्रगाथस्य । छन्दस इति किम् ? उदुत्यशब्द आदिरस्य प्रगाथस्य । प्रगाथेष्विति किम् ? पङ्क्तिरादिरस्यानुवाकस्य । प्रगाथशब्दः क्रियानिमित्तकः क्वचिदेव मन्त्रविशेषे वर्त्तते । यत्र द्वे ऋचौ प्रग्रथनेन तिस्रः क्रियन्ते स (२)प्रग्रथनात्प्रकर्षगानाद्वा प्रगाथ इत्युच्यते । ॐछन्दसः प्रत्ययविधाने नपुसके स्वार्थ उपसंख्यानम्ॐ । त्रिष्टुबेव त्रैष्टुभम् । जागतम् ॥

## सङ्ग्रामे प्रयोजनयोद्धृभ्यः ॥ ५६ ॥

सोऽस्येति समर्थविभक्तिः, प्रत्ययार्थश्चानुवर्तते । प्रथमासमर्थविशेषणं प्रयोजनं योद्धारश्च । प्रत्ययार्थविशेषणं संग्रामः । प्रयोजनवाचिभ्यो योद्धृवाचिभ्यश्च शब्देभ्यः प्रथमासमर्थेभ्योऽस्येति षष्ठ्यर्थे संग्रामेऽभिधेये यथाविहितं प्रत्ययो भवति । भद्रा प्रयोजनमस्य संग्रामस्य भाद्रः संग्रामः । सौभद्रः । गौरिमित्रः । योद्धृभ्यः–अहिमाला योद्धारोऽस्य संग्रामस्य आहिमालः । स्यान्दनाश्वः । भारतः । संग्राम इति किम् ? सुभद्रा प्रयोजनमस्य दानस्य । प्रयोजनयोद्धृभ्य इति किम् ? सुभद्रा प्रेक्षिकाऽस्य संग्रामस्य ॥

## तदस्यां प्रहरणमिति क्रीडायां णः ॥ ५७ ॥

तदिति प्रथमासमर्थादस्यामिति सप्तम्यर्थे णः प्रत्ययो भवति, यत्तदिति निर्दिष्टं प्रहरणं चेत्तद्भवति, यदस्यामिति निर्दिष्टं क्रीडा चेत्सा भवति । इतिकरणस्ततश्चेद्विवक्षा । दण्डः प्रहरणमस्यां क्रीडायां दाण्डा । मौष्टा । प्रहरणमिति किम् ? माला भूषणमस्यां क्रीडायाम् । क्रीडायामिति किम् ? खड्गः प्रहरणमस्यां सेनायाम् ॥

## घञः सास्यां क्रियेति ञः ॥ ५८ ॥

सेति समर्थविभक्तिः । अस्यामिति प्रत्ययार्थः स्त्रीलिङ्गः । क्रियेति प्रकृत्यर्थविशेषणम् । घञ इति प्रकृतिर्देशः । इतिकरणो विवक्षार्थः । घञन्तात्क्रियावाचिनः प्रथमासमर्थादस्यामिति सप्तम्यर्थे स्त्रीलिङ्गे ञः प्रत्ययो भवति । घञ इति कृद्ग्रहणम्, तत्र गतिकारकपूर्वमपि गृह्यते । श्येनपातोऽस्यां वर्त्तते श्यैनम्पाता । तैलम्पाता । घञ इति किम् ?

---

**सोस्यादिः**—प्रथमासमर्थ आदिगत छन्दोवाचक शब्द से प्रगाथात्मक षष्ठ्यर्थ की विवक्षा में यथाविहित प्रत्यय होते हैं ।

**छन्दसः**—नपुंसक लिङ्ग में स्वार्थ मे ही छन्दोवाचक शब्दों से प्रत्यय समझना चाहिए ।

**संग्रामे**—प्रथमासमर्थ प्रयोजनवाचक तथा योद्धृवाचक शब्दों से संग्रामात्मक षष्ठ्यर्थ के वाच्य होने पर यथाविहित प्रत्यय होते हैं ।

**तदस्याम्**—प्रथमासमर्थ प्रहरणार्थक शब्दों से क्रीडात्मक सप्तम्यर्थ की वाच्यता की विवक्षा में ण प्रत्यय होता है ।

**घञः**—प्रथमासमर्थ घञ्प्रत्ययान्त क्रियावाचक शब्दों से स्त्रीलिङ्ग सप्तम्यर्थ की वाच्यता की विवक्षा में ञ प्रत्यय होता है ।

---

( १ ) जगत इति पण्डितपत्रमुद्रितपुस्तके पाठः ।

( २ ) प्रगाणाद्वेति पण्डितपत्रमुद्रितपुस्तके पाठः । प्रग्रन्थनेनेति, प्रकर्षगायनाद्वेति न्यासे पाठः ।

श्येनपतनमस्यां वर्त्तते । क्रियेति किम् ? प्राकारोस्यां वर्त्तते । अथ समर्थविभक्तिः प्रत्ययार्थश्च कस्मात्पुनरुपादीयते, यावता द्वयमपि प्रकृतमेव ? क्रीडायामित्यनेन तत्सम्बद्धम्, अस्तदनुवृत्तौ क्रीडानुवृत्तिरपि सम्भाव्येत । सामान्येन चेदं विधानम् । दण्डपातोस्यां तिथौ वर्त्तते दाण्डपाता तिथिः । मौसलपाता तिथिः ॥

## तदधीते तद्वेद ॥ ५९ ॥

तदिति द्वितीयासमर्थादधीते वेद इत्येतयोरर्थयोर्यथाविहितं प्रत्ययो भवति । छन्दोधीते छान्दसः । वैयाकरणः । नैरुक्तः । निमित्तानि वेद नैमित्तः । मौहूर्त्तः । औत्पातः । द्विस्तद्ग्रहणमधीयानविदुषोः पृथग्विधानार्थम् ॥

## क्रतूक्थादिसूत्रान्ताट्ठक् ॥ ६० ॥

क्रतुविशेषवाचिभ्य उक्थादिभ्यश्च सूत्रान्ताच्च ठक्प्रत्ययो भवति तदधीते तद्वेदेत्यस्मिन्विषये । अणोऽपवादः । अग्निष्टोममधीते वेद वा आग्निष्टोमिकः । वाजपेयिकः । उक्थादिभ्यः—औक्थिकः, लौकायतिकः । सूत्रान्तात्—वार्तिकसूत्रिकः, सांग्रहसूत्रिकः ॐसूत्रान्तादकल्पादेरिष्यतेॐ । कल्पसूत्रमधीते काल्पसूत्रः, अणेव भवति । उक्थशब्दः केषुचिदेव सामसु रूढः, यज्ञायज्ञीयात्परेण यानि गीयन्ते, न च तान्यधीयाने प्रत्यय इष्यते, किं तर्हि ? सामलक्षणे औक्थिक्ये वर्तमान उक्थशब्दः प्रत्ययमुत्पादयति–उक्थमधीते औक्थिकः । औक्थिक्यमधीत इत्यर्थः । औक्थिक्यशब्दाच्च प्रत्ययो न भवत्येव, अनभिधानात् । ॐविद्यालक्षणकल्पान्तादिति वक्तव्यम्ॐ । वायसविद्यिकः । सार्पविद्यिकः । गौलक्षणिकः । आश्वलक्षणिकः । मातृकल्पिकः । पाराशरकल्पिकः । ॐविद्या च नाङ्गक्षत्रधर्मसंसर्गत्रिपूर्वाॐ । अङ्गविद्यामधीते आङ्गविद्यः । क्षात्रविद्यः । धार्मविद्यः । सांसर्गविद्यः । त्रैविद्यः । ॐआख्यानाख्यायिकेतिहासपुराणेभ्यश्चेति वक्तव्यःॐ । आख्यानाख्याकियोरर्थग्रहणमितिहासपुराणयोः स्वरूपग्रहणम् । यावक्रीतिकः । प्रैयङ्गविकः । वासवदत्तिकः । सौमनोत्तरिकः । ऐतिहासिकः । पौराणिकः । ॐसर्वसादेर्द्विगोश्च लःॐ । सर्ववेदः । सर्वतन्त्रः । सादेः—सवार्त्तिकः, ससंग्रहः । द्विगोः—द्विवेदः, पञ्चव्याकरणः । ॐअनुसूर्लक्ष्यलक्षणे चॐ । अनुसूर्नाम ग्रन्थस्तमधीते आनुसुकः । लाक्षिकः । लाक्षणिकः । ॐइकन्प-

---

**तदधीते**—द्वितीयासमर्थ शब्द से 'अधीते' ( पढ़ रहा है ) तथा 'वेद' ( जानता है ) अर्थों में यथाविहित प्रत्यय होते हैं।

**क्रतूक्थादि**—द्वितीयासमर्थ क्रतुविशेषवाचक, उक्थ आदि तथा सूत्रशब्दान्त शब्दों से ठक् प्रत्यय होता है ।

**सूत्रान्तात्**—सूत्रशब्दान्त शब्दों में कल्पादिशब्दभिन्न शब्दों से ही उक्त ठक् प्रत्यय समझना चाहिए ।

**विद्या**—विद्यान्त, लक्षणान्त तथा कल्पान्त शब्दों से भी ठक् प्रत्यय समझना चाहिए ।

**विद्या च**—अङ्गपूर्वक, क्षत्रपूर्वक, धर्मपूर्वक, संसर्गपूर्वक तथा त्रिपूर्वक विद्याशब्दान्त शब्दों से ठक् प्रत्यय की अनुत्पत्ति समझनी चाहिए ।

**आख्या**—आख्यानार्थक, आख्यायिकार्थक, इतिहास तथा पुराण शब्दों से ठक् प्रत्यय समझना चाहिए ।

**सर्व**—सर्वादि, सादि तथा द्विगु से उत्पन्न ठक् प्रत्यय का ल ( =लोप ) समझना चाहिए ।

**अनुसूः**—अनुसू , लक्ष्य तथा लक्षण शब्दों से ठक् प्रत्यय समझना चाहिए ।

**इकन्**—पद-शब्दोत्तरपदक शब्द से इकन् प्रत्यय समझना चाहिए ।

दोत्तरपदात्॥ । पूर्वपदिकः (१)। ॥शतषष्टः षिकन् पथो बहुलम्॥ । शतपथिकः, शतपथिकी । षष्टिपथिकः, षष्टिपथिकी । बहुलग्रहणादणपि भवति—शातपथः, षाष्टिपथः । उक्थ । लोकायत । न्याय । न्यास । निमित्त । पुनरुक्त । निरुक्त । यज्ञ । चर्चा । धर्म । क्रमेतर । श्लक्ष्ण । संहिता । पद । क्रम । संघात । वृत्ति । संग्रह । गुणागुण । आयुर्वेद । सूत्रान्तादकल्पादेः । विद्यालक्षणकल्पान्तात् । विद्या चानङ्गक्षत्रधर्मसंसर्गत्रिपूर्वा । आख्यानाख्यायिकेतिहासपुराणेभ्यष्ठक् । सर्वसादेर्द्विगोश्च लः । अनुसूर्लक्ष्यलक्षणे च । द्विपदी ज्योतिषि । अनुपद । अनुकल्प । अनुगुण । इकन्पदोत्तरपदात् । शतषष्टेः पथः षिकन् बहुलम् ॥

## क्रमादिभ्यो वुन् ॥ ६१ ॥

क्रम इत्येवमादिभ्यः शब्देभ्यो वुन्प्रत्ययो भवति तदधीते तद्वेदेत्यस्मिन् विषये । अणोऽपवादः । क्रमकः । पदकः । क्रम । पद । शिक्षा । मीमांसा । सामन् ॥

## अनुब्राह्मणादिनिः ॥ ६२ ॥

अनुब्राह्मणशब्दादिनिः प्रत्ययो भवति तदधीते तद्वेदेत्यस्मिन्विषये । अणोऽपवादः । ब्राह्मणसदृशोऽयं ग्रन्थोऽनुब्राह्मणम्, तदधीतेऽनुब्राह्मणी, अनुब्राह्मणिनौ, अनुब्राह्मणिनः । मत्वर्थे "अत इनिठनौ" इति इनिना सिद्धम् । तत्रैतस्माट्ठन्नपि प्राप्नोति, अनभिधानान्न भविष्यति ? अणो निवृत्त्यर्थं तर्हि वचनम् ॥

## वसन्तादिभ्यष्ठक् ॥ ६३ ॥

वसन्त इत्येवमादिभ्यष्ठक्प्रत्ययो भवति तदधीते तद्वेदेत्यस्मिन् विषये । अणोऽपवादः । वसन्तसहचरितोयं ग्रन्थो वसन्तः, तमधीते वासन्तिकः । वार्षिकः । वसन्त । वर्षा । शरद् । हेमन्त । शिशिर । प्रथम । गण । चरम । अनुगुण । अपर्वन् । अथर्वन् ॥

## प्रोक्ताल्लुक् ॥ ६४ ॥

प्रोक्तसहचरितः प्रत्ययः प्रोक्तः । प्रोक्तप्रत्ययान्तादध्येतृवेदितॄोरुत्पन्नस्य पाणिनिना प्रोक्तं पाणिनीयम्, तदधीते पाणिनीयः । आपिशलः । स्त्रियां स्वरे च विशेषः । पाणिनीया ब्राह्मणी ॥

## सूत्राच्च कोपधात् ॥ ६५ ॥

सूत्रवाचिनः ककारोपधादुत्पन्नस्य प्रत्ययस्य लुग् भवति । अप्रोक्तार्थ आरम्भः । पाणिनीयमष्टकं सूत्रम्, तदधीते अष्टकाः पाणिनीयाः । दशका वैयाघ्रपदीयाः । त्रिकाः

---

**शत**—शतपूर्वक तथा षष्टिपूर्वक पथिन् शब्द से बहुल करके षिकन् प्रत्यय होता है ।

**क्रमादिभ्यः**—क्रम आदि शब्दों से 'अधीते' तथा 'वेद' (जानता है) अर्थों में वुन् प्रत्यय होता है ।

**अनु**—अनुब्राह्मण शब्द से 'अधीते' तथा 'वेद' अर्थों में इनि प्रत्यय होता है ।

**वसन्तादि**—वसन्त आदि शब्दों से 'अधीते' तथा 'वेद' अर्थों में ठक् प्रत्यय होता है ।

**प्रोक्तात्**—प्रोक्तार्थप्रत्ययान्त शब्दों से विहित अध्येत्रर्थक तथा वेदित्रर्थक प्रत्ययों का लुक् हो जाता है ।

**सूत्राच्च**—ककारोपध सूत्रवाचक शब्द से विहित अध्येत्रर्थक तथा वेदित्रर्थक प्रत्यय का भी लुक् हो जाता है ।

---

(१) इकन् बहुलं पदोत्तरपदात्, पदोत्तरपदिः । अन्ये तु पदोत्तरपदादिति पदशब्द उत्तरपदं यस्य तस्मादित्यर्थ इति व्याचक्षते, तन्मते पूर्वपदिकः, उत्तरपदिकः । इति क्वचित् पाठोधिकः ।

काशकृत्स्नाः। ॐसंख्याप्रकृतेरिति वक्तव्यम्ॐ। इह मा भूत्—महावार्त्तिकं सूत्रमधीते, माहावार्त्तिकः, कालापकमधीते कालापकः। कोपधादिति किम्? चतुष्टयमधीते चातुष्टयः॥

## छन्दोब्राह्मणानि च तद्विषयाणि ॥ ६६ ॥

प्रोक्तग्रहणमनुवर्त्तते। छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्ययान्तानि तद्विषयाण्येव भवन्ति। अध्येतृवेदितृप्रत्ययविषयाणि। अनन्यभावो विषयार्थः। तेन स्वातन्त्र्यमुपाध्यन्तरयोगो वाक्यं च निवर्तते। कठेन प्रोक्तमधीयते कठाः। मौदाः। पैप्पलादाः। आर्चाभिनः। वाजसनेयिनः। ब्राह्मणानि खल्वपि—ताण्डिनः, भाल्लविनः, शाट्यायनिनः, ऐतरेयिणः। ब्राह्मणग्रहणं किम् ,यावता छन्द एव तत्? ब्राह्मणविशेषप्रतिपत्त्यर्थमिह तद्विषयता मा भूत्—याज्ञवल्क्येन प्रोक्तानि ब्राह्मणानि याज्ञवल्क्यानि, सौलभानि। चकारोऽनुक्तसमुच्चयार्थः। कल्पे—काश्यपिनः, कौशिकिनः। सूत्रे—पाराशरिणो भिक्षवः, शैलालिनो नटाः, कर्मन्दिनः, कृशाश्विनः। छन्दोब्राह्मणानीति किम्? पाणिनीयं व्याकरणम्, पैङ्गी कल्पः॥

## तदस्मिन्नस्तीति देशे तन्नाम्नि ॥ ६७ ॥

तदिति प्रथमा समर्थविभक्तिः। अस्मिन्निति प्रत्ययार्थः। अस्तीति प्रकृत्यर्थविशेषणम्। इति करणो विवक्षार्थः। देशे तन्नाम्नीति प्रत्ययार्थविशेषणम्। तदिति प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति, यत्प्रथमासमर्थमस्ति चेत्तद्भवति, यदस्मिन्निति निर्दिष्टं देशश्चेत् स तन्नामा भवति—प्रत्ययान्तनामा, इतिकरणस्ततश्चेद्विवक्षा। उदुम्बरा अस्मिन् देशे सन्ति औदुम्बरः। बाल्वजः। पार्वतः। मत्वर्थीयापवादो योगः॥

## तेन निर्वृत्तम् ॥ ६८ ॥

तेनेति तृतीयासमर्थान्निर्वृत्तमित्यस्मिन् विषये यथाविहितं प्रत्ययो भवति देशनामधेये गम्यमाने। देशे तन्नाम्नीति चतुर्ष्वपि योगेषु सम्बध्यते। सहस्रेण निर्वृत्ता साहस्री परिखा। कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी। हेतौ कर्त्तरि च यथायोगं तृतीया समर्थविभक्तिः॥

## तस्य निवासः ॥ ६९ ॥

तस्येति षष्ठीसमर्थान्निवास इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति देशनामधेये गम्यमाने। निवसन्त्यस्मिन्निति निवासः। ऋजुनावान्निवासो देशः आर्जुनावो देशः। शैबः। औदिष्टः॥

---

**संख्या**—संख्यावाचकशब्दप्रकृतिक ककारोपधविहित प्रत्यय का ही लुक् समझना चाहिए।

**छन्दो**—प्रोक्तप्रत्ययान्त छन्दोवाचक तथा ब्राह्मणवाचक शब्द अध्येत्रर्थक तथा वेदित्रर्थक प्रत्ययों को ही विषय बनाते हैं।

**तदस्मिन्**—अस्त्युपाधिक प्रथमान्त शब्द से सप्तम्यर्थ में यथाविहित प्रत्यय होते हैं यदि प्रत्ययान्त शब्द देश-नाम हो।

**तेन**—तृतीयान्त शब्द से निर्वृत्त ( = सम्पन्न ) अर्थ में यथाविहित प्रत्यय होते हैं यदि प्रत्ययान्त शब्द देश-नाम हो।

**तस्य**—षष्ठयन्त शब्द से निवास अर्थ में यथाविहित प्रत्यय होते हैं यदि प्रत्ययान्त शब्द देश-नाम हो।

## अदूरभवश्च ॥ ७० ॥

पूर्वा समर्थविभक्तिरनुवर्त्तते। तस्येति षष्ठीसमर्थाददूरभव इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। विदिशाया अदूरभवं नगरं वैदिशम्। हैमवतम्। चकारः पूर्वेषां त्रयाणामर्थानामिह सन्निधानार्थः। तेनोत्तरेषु चत्वारोऽप्यर्थाः सम्बद्ध्यन्ते॥

## ओरञ् ॥ ७१ ॥

चत्वारोऽर्था अनुवर्त्तन्ते। उवर्णान्तात्प्रातिपदिकाद्यथाविहितं समर्थविभक्तियुक्तादञ् प्रत्ययो भवति तदस्मिन्नस्तीत्येवमादिष्वर्थेषु। अणोऽपवादः। अरडु—आरडवम्। कक्षतु—काक्षतवम्। कर्कटेलु—कार्कटेलवम्। नद्यां तु परत्वान्मतुब्भवति—इक्षुमती। अञधिकारः प्राक् सुवास्त्वादिभ्योऽणः॥

## मतोश्च बह्वजङ्गात् ॥ ७२ ॥

बह्वज् अङ्गं यस्यासौ बह्वजङ्गो मतुप्, तदन्तात्प्रातिपदिकादञ्प्रत्ययो भवति चातुरर्थिकः। अणोऽपवादः। ऐषुकावतम्(१)। सैध्रकावतम्। बह्वजङ्गादिति किम्? आहिमतम्। यावमतम्। अङ्गग्रहणं बह्वजिति तद्विशेषणं यथा विज्ञायेत, मत्वन्तविशेषणं मा विज्ञायीति—मालावतां निवासो मालावतम्॥

## बह्वचः कूपेषु ॥ ७३ ॥

बह्वचः प्रातिपदिकादञ् प्रत्ययो भवति चातुरर्थिकः कूपेष्वभिधेयेषु। अणोऽपवादः। यथासम्भवमर्थाः सम्बध्यन्ते। दीर्घवरत्रेण निर्वृत्तः कूपः दैर्घवरत्रः। कापिलवरत्रः॥

## उदक् च विपाशः ॥ ७४ ॥

विपाश उत्तरे कूले ये कूपास्तेष्वभिधेयेष्वण् प्रत्ययो भवति चातुरर्थिकः। अणोऽपवादः। अबह्वजर्थ आरम्भः। दत्तेन निर्वृत्तः कूपो दात्तः। गौप्तः। उदगिति किम्? दक्षिणतो विपाशः कूपेषु—अणेव—दात्तः, गौप्तः। स्वरे विशेषः। महती सूक्ष्मेक्षिका वर्त्तते सूत्रकारस्य॥

## सङ्कलादिभ्यश्च ॥ ७५ ॥

कूपेष्विति निवृत्तम्। संकल इत्येवमादिभ्योऽञ् प्रत्ययो भवति चातुरर्थिकः। अणोऽपवादः। यथासम्भवमर्थसम्बन्धः। सङ्गतः कलः सङ्कलः। संकलेन निर्वृत्तः सांकलः। पौष्कलः। सङ्कल। पुष्कल। उद्वप। उडुप। उत्पुट। कुम्भ। विधान। सुदक्ष। सुदत्त। सुभूत। सुनेत्र। सुपिङ्गल। सिकता। पूतीकी। पूलास। कूलास। पलास। निवेश।

---

अदूर—षष्ठ्यन्त शब्द से अदूरभव अर्थ में यथाविहित प्रत्यय होते हैं।

ओरञ्—उवर्णान्त समर्थविभक्तियुक्त प्रातिपदिक से उपर्युक्त सप्तम्यर्थ आदि चार अर्थों में अञ् प्रत्यय होता है।

मतोश्च—अनेकस्वराङ्गक मतुबन्त प्रातिपदिक से भी उक्त अर्थ-चतुष्टय में अञ् प्रत्यय होता है।

बह्वचः—अनेकाच् प्रातिपदिक से कूप के गम्यमान होने पर चातुरर्थिक अञ् प्रत्यय होता है।

उदक्—विपाट् नदी के उत्तर तट पर वर्त्तमान कूपों के अभिधेय होने पर भी चातुरर्थिक अञ् प्रत्यय होता है।

सङ्कलादि—सङ्कल आदि शब्दों से चातुरर्थिक अञ् प्रत्यय होता है।

---

(१) ऐकटावतम् इति पाठान्तरम्।

गवेष । गम्भीर । इतर । शर्मन् । अहन् । लोमन् । वेमन् । वरुण । बहुल । सद्योज । अभिषिक्त । गोभृत् । राजभृत् । गृह । भृत । भल्ल । माल । वृत् ॥

## स्त्रीषु सौवीरसाल्वप्राक्षु ॥ ७६ ॥

देशे तन्नाम्नीत्यस्य विशेषणं सौवीरादयः, स्त्रीत्वं च । ङ्याप्प्रातिपदिकादञ् प्रत्ययो भवति चातुरर्थिकः । अणोऽपवादः । सौवीरे स्त्रीलिङ्गे देशे वाच्ये साल्वे प्राचि । सौवीरे तावत्—दत्तामित्रेण निर्वृत्ता नगरी दात्तामित्री । साल्वे—विधूमाग्निना निर्वृत्ता वैधूमाग्नी । प्राचि खल्वपि—ककन्देन निर्वृत्ता काकन्दी, माकन्दी, माणिचरी, जारुषी ॥

## सुवास्त्वादिभ्योऽण् ॥ ७७ ॥

सुवास्तु इत्येवमादिभ्योऽण् प्रत्ययो भवति चातुरर्थिकः । (१)अञ उवर्णान्तलक्षणस्य कूपलक्षणस्य चापवादः । सुवास्तोरदूरभवं नगरं सौवास्तवम् । वार्णवम् । अण्ग्रहणं नद्यां मतुपो बाधनार्थम्—सौवास्तवी नदी । सुवास्तु । वर्णु । भण्डु । (२)खण्डु । सेचालिन् । कर्पूरिन् । शिखण्डिन् । गर्त । कर्कश । शटीकर्ण । कृष्ण । कर्क । कर्कन्धूमती । गोह्य(३) । अहिसक्थ । वृत् ॥

## रोणी ॥ ७८ ॥

रोणीशब्दादण्प्रत्ययो भवति चातुरर्थिकः । यथासम्भवमर्थसम्बन्धः । कूपलक्षणस्याञोऽपवादः । रोणीति कोऽयं निर्देशो यावता प्रत्ययविधौ पञ्चमी युक्ता ? सर्वावस्थाप्रतिपत्त्यर्थमेवमुच्यते—रोणीशब्दः सर्वावस्थोऽण्प्रत्ययमुत्पादयति केवलस्तदन्तश्च । रौणः, आजकरोणः, सैंहिकरोणः ॥

## कोपधाच्च ॥ ७९ ॥

ककारोपधाच्च प्रादिपदिकादण्प्रत्ययो भवति चातुरर्थिकः । यथासम्भवमर्थसम्बन्धः । कूपलक्षणस्योवर्णलणस्य चाञोऽपवादः । कार्णच्छिद्रिकः । कूपः । कार्णवेष्टकः । कृकवाकुना विर्वृत्तं कार्कवाकवम् । त्रैशङ्कवम् ॥

## वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः ॥ ८० ॥

वुञादयः सप्तदश प्रत्ययाः, अरीहणादयोऽपि सप्तदशैव प्रातिपदिकगणाः । आदिशब्दः प्रत्येकमभिसम्बद्ध्यते । तत्र यथासंख्यं सप्तदशभ्यः प्रातिपदिकगणेभ्यः सप्तदश

---

स्त्रीषु—स्त्रीलिङ्ग सौवीर, साल्व तथा प्राचीन देशों के वाच्य होने पर चातुरर्थिक अञ् प्रत्यय होता है ।

सुवास्त्वादि—सुवास्तु आदि शब्दों से चातुरर्थिक अण् प्रत्यय होता है ।

रोणी—रोणी शब्द से चातुरर्थिक अण् प्रत्यय होता है ।

कोपधाच्च—ककारोपध शब्द से चातुरर्थिक अण् प्रत्यय होता है ।

वुञ्छण—अरीहण आदि १८ प्रातिपदिकों से क्रमशः वुञ् आदि १८ प्रत्यय उक्त अर्थ-चतुष्टय में होते हैं ।

---

(१) यथासम्भवमर्थसम्बन्ध इत्यधिकं कुत्रचित् ।

(२) कण्डु इति पाठान्तरम् ।

(३) गाह्य इति पाठान्तरम् ।

प्रत्यया भवन्ति चातुरर्थिकाः । अणोऽपवादः । यथासम्भवमर्थसम्बन्धः । अरीहणादिभ्यो वुञ् प्रत्ययो भवति । आरीहणकम् । द्रौघणकम् । अरीहण । द्रुघण । खदिर । सार । भगल । उलन्द । साम्परायण । क्रौष्ट्रायण । भास्त्रायण । मैत्त्रायण । त्रैगर्त्तायन । रायस्पोष । विपथ । उदण्ड । उदञ्चन । खाडायन । खण्ड । वीरण । काशकृत्स्न । जाम्बवन्त । शिंशपा । किरण । रैवत । बैल्व । (१)नैमतायन । सौसायन । शाण्डिल्यायन । शिरीष । वधिर(२) । अरीहणादिः ॥ कृशाश्वादिभ्यश्छण्प्रत्ययो भवति । कार्शाश्वीयः । आरिष्टीयः । कृशाश्व । अरिष्ट । अरिश्व । वेश्मन् । विशाल । रोमक । शबल । कूट । रोमन् । वर्वर । सुकर । सूकर । प्रतर । सदृश । पुरग । सुख । धूम । अजिन । विनता(३) । अवनत । विकुवास । अरुस । अवयास(४) । मौद्गल्य । कृशाश्वादिः ॥ ऋश्यादिभ्यः कः प्रत्ययो भवति । ऋश्यकः । न्यग्रोधकः । ऋश्य । न्यग्रोध । शिरा । निलीन । निवास । निधान । निवात । निबद्ध । विबद्ध । परिगूढ । उपगूढ । उत्तराश्मन् । स्थूलबाहु । खदिर । शर्करा । अनडुह् । परिवंश । वेणु । वीरण(५) । ऋश्यादिः ॥ कुमुदादिभ्यष्ठच्प्रत्ययो भवति । कुमुदिकम् । शर्करिकम् । कुमुद । शर्करा । न्यग्रोध । इत्कट(६) । गर्त्त । बीज । अश्वत्थ । बल्वज । परिवाप । शिरीष । यवाष । कूप । विकङ्कत(७) । कुमुदादिः ॥ काशादिभ्य इलः प्रत्ययो भवति । काशिलम् । वाशिलम् । काश । वाश । अश्वत्थ । पलाश । पीयूष । विश(८) । तृण । नर । चरण । कर्दम । कर्प्पूर । कण्टक । गृह । (९)काशादिः ॥ तृणादिभ्यः शः प्रत्ययो भवति । तृणशः । नडशः । तृण । नड । बुस । पर्ण । वर्ण । चरण । अर्ण । जन । बल । लव । वन । तृणादिः ॥ प्रेक्षादिभ्य इनिप्रत्ययो भवति । प्रेक्षी । हलकी । प्रेक्षा । हलका(१०) । बन्धुका । ध्रुवका । क्षिपका । न्यग्रोध । इर्कुट (११) । प्रेक्षादिः ॥ अश्मादिभ्यो रप्रत्ययो भवति । अश्मरः । अश्मन् । यूष । रूष । मीन । दर्भ । वृन्द । गुड । खण्ड । नग । शिखा(१२) । अश्मादिः ॥ सख्यादिभ्यो ढञ् प्रत्ययो भवति । साखेयम् । साखिदत्तेयम् । सखि । सखिदत्त । वायुदत्त । गोहित(१३) । भल्ल । पाल । चक्रपाल । चक्रवाल । छगल । अशोक । करवीर । सीकर । सकर । सरस । समल(१४) । सख्यादिः ॥ संकाशादिभ्यो ण्यप्रत्ययो भवति । सांकाश्यम् । काम्पिल्यम् । संकाश । काम्पिल्य । समीर । कश्मर । शूरसेन । सुपथिन् । सक्थच । यूप । अंश । एग । अश्मन् । कूट । मलिन । तीर्थ । अगस्ति । विरत । चिकार । विरह ।

---

(१) मैमतायण इति पाठान्तरम् ।

(२) वैगर्तायण । गोमतायण । सौमतायण । खाण्डायण । विपाश । सुयज्ञ । जम्बु । सुमर्श एते शब्दाः क्वचिदधिका दृश्यन्ते ।

(३) वनिता इति पाठान्तरम् ।

(४) अयाक्स् इति पाठान्तरम् ।

(५) भण्ड । परिवृत्त । कर्दम । अंशु । अधिका एते कुत्रचित् ।

(६) उत्कटेति इति पाठान्तरम् ।

(७) कण्टक । लङ्कट । सङ्कट । पलाश । त्रिक । कत । दशग्राम । अधिका एते क्वचित् ।

(८) विस इति पाठान्तरम् ।

(९) आवास । नड । वन । वधूल । वर्वर । एतेऽधिकाः क्वचित् ।

(१०) फलका इति पाठान्तरम् ।

(११) बुधका । सङ्कट । कूपका । कर्कटा । सुकटा । सुक । महा । एते अधिकाः क्वचित् ।

(१२) यूथ । रष । नद । नख । काट । पाम । एते अधिकाः क्वचित् ।

(१३) गोहिल इति पाठान्तरम् ।

(१४) चर्क । वक्रपाल । उशीर । सुरस । रोह । तमाल । कदल । सप्तल । एतेऽधिकाः क्वचित् ।

नासिका । संकाशादिः ॥ बलादिभ्यो यः प्रत्ययो भवति । बल्यः । कुल्यम् । बल । बुल । तुल । उल । डुल । कवल । वन । कुल । बलादिः ॥ पक्षादिभ्यः फक् प्रत्ययो भवति । पाक्षायणः । तौषायनः । पक्ष । तुष । अण्ड । कम्बलिक । चित्र । अश्मन् । अतिस्वन् । पथिपन्थ च(१) । पक्षादिः ॥ कर्णादिभ्यः फिञ्प्रत्ययो भवति । कार्णायनिः । वासिष्ठायनिः । कर्ण । वसिष्ठ । अलुश । शल । डुपद । अनडुह्य । पाञ्चजन्य । स्थिरा । कुलिश । कुम्भी । जिवन्ती । जित्व । आण्डीवत्(२) । कर्णादिः ॥ सुतङ्गमादिभ्य इञ्प्रत्ययो भवति । सौतङ्गमिः । मौनचित्तिः । सुतङ्गम । मुनिचित्त । विप्रचित्त । महापुत्र । श्वेत । गडिक । शुक्र । विग्र । बीजवापिन् । श्वन् । अर्जुन । अजिर । जीव । सुतङ्गमादिः ॥ प्रगदिन्नादिभ्यो ञ्यः प्रत्ययो भवति । प्रागद्यम् । प्रगदिन् । मगदिन् । शरदिन् । कलिव । खडिव । गडिव । चूडार । मार्जार । कोविदार । प्रगद्यादिः ॥ वराहादिभ्यः कक् प्रत्ययो भवति । वाराहकम् । पालाशकम् । वराह । पलाश । शिरीष । पिनद्ध । स्थूण । वदग्ध । विजग्ध । विभग्न । बाहु । खदिर । शर्करा(३) । वराहादिः ॥ कुमुदादिभ्यष्ठक् प्रत्ययो भवति । कौमुदिकम् । कुमुद । गोमथ । रथकार । दशग्राम । अश्वत्थ । शाल्मली । कुण्डल । मुनिस्थूल । कूट । मुचुकर्ण(४) । कुमुदादिः ॥ शिरीषशब्दोऽरीहणादिषु कुमुदादिषु वराहादिषु च पठ्यते, औत्सर्गिकोऽपि तत इष्यते । तस्य च वरणादिषु दर्शनाल्लुब्भवति । तथाचोक्तम्–शिरीषाणामदूरभवो ग्रामः शिरीषः, तस्य वनं शिरीषवनमिति ॥

## जनपदे लुप् ॥ ८१ ॥

देशे तन्नाम्नीति यश्चातुरर्थिकः प्रत्ययो भवति तस्य देशविशेषे जनपदेऽभिधेये लुब्भवति । ग्रामसमुदायो जनपदः । पञ्चालानां निवासो जनपदः पञ्चालाः । कुरवः । मत्स्याः । अङ्गाः । बङ्गाः । मगधाः । सुह्माः । पुण्ड्राः । इह कस्मान्न भवति–उदुम्बरा अस्मिन् सन्ति औदुम्बरो जनपदः, वैदिशो(५) जनपदः इति ? तन्नाम्नीति वर्त्तते, न चात्र लुबन्तं तन्नामधेयं भवति ॥

## वरणादिभ्यश्च ॥ ८२ ॥

वरण इत्येवमादिभ्य उत्पन्नस्य चातुरर्थिकस्य प्रत्ययस्य लुब्भवति । अजनपदार्थ आरम्भः । वरणानामदूरभवं नगरं वरणाः । श्रृङ्गी । शाल्मलयः । चकारोऽनुक्तसमुच्चयार्थ आकृतिगणतामस्य बोधयति । (६)कटुकवदर्या अदूरभवो ग्रामः कटुकवदरी । शिरीषाः काञ्ची । वरणाः । पूर्वौ गोदौ(७) । आलिङ्ग्यायन । पर्णी । श्रृङ्गी । शाल्मलयः । सदाण्वी । वणिकि । वणिक । जालपद । मथुरा । उज्जयिनी । गया । तक्षशिला । उरशा । आकृत्या ॥

---

**जनपदे**—यदि जनपद वाच्य हो तो उक्त चातुरर्थिक प्रत्यय का लुप् हो जाता है ।

**वरणादिभ्यश्च**—वरण आदि शब्दों से उत्पन्न चातुरर्थिक प्रत्यय का भी लुप् हो जाता है ।

---

(१) कुम्भ । सीरज । सीरक । सरक । सलक । सरस । समल । रोमन् । लोमन् । हंसका । लोमक । सकण्डक । अस्तिबल । यमल । हस्त । सिंहक । इति अधिकम् क्वचित् ।

(२) अर्क, लुष, स्फिक, श्यावत्—एते शब्दा गणेऽत्राधिकाः ।

(३) विनद्ध, निबद्ध, विरुद्ध, मूल इति पुस्तकान्तरेऽधिकम् ।

(४) कुन्द, मधुकर्ण, शुचिकर्ण, शिरीष एतेऽधिकाः पुस्तकान्तरे ।

(५) वैतस इति पाठान्तरम् ।

(६) कन्दुक इति पाठान्तरम् ।

(७) पूर्वेण गोदौ अपरेण गोदौ इति पाठान्तरम् ।

## शर्कराया वा ॥ ८३ ॥

शर्कराशब्दादुत्पन्नस्य चातुरर्थिकस्य प्रत्ययस्य वा लुब्भवति। वाग्रहणं किम्, यावता शर्कराशब्दः कुमुदादिषु वराहादिषु च पठ्यते, तत्र पाठसामर्थ्यात्प्रत्ययस्य पक्षे श्रवणं भविष्यति? एवं तर्ह्येतज्ज्ञापयति—शर्कराशब्दादौत्सर्गिको भवति, तस्यायं विकल्पितो लुबिति। शर्करा, शार्करम्। गणपाठाच्च श्रवणम्, उत्तरसूत्रे विहितौ च द्वौ प्रत्ययौ। तदेवं षड् रूपाणि भवन्ति—शर्करा, शार्करम्, शार्करिकम्, शार्करकम्, शार्करिकम्, शर्करीयमिति॥

## ठक्छौ च ॥ ८४ ॥

शर्कराशब्दाट्ठक् छ इत्येतौ प्रत्ययौ भवतश्चातुरर्थिकौ। यथासम्भवमर्थसम्बन्धः। शार्करिकम्, शर्करीयम्॥

## नद्यां मतुप् ॥ ८५ ॥

नद्यामभिधेयायां मतुप्प्रत्ययो भवति चातुरर्थिकः। तन्नाम्नो देशस्य विशेषणं नदी। उदुम्बरा यस्यां सन्ति उदुम्बरावती। मशकावती। वीरणावती। पुष्करावती। इक्षुमती। द्रुमती। इह कस्मान्न भवति—भागीरथी, भैमरथी? मतुबन्तस्यातन्नामधेयत्वात्॥

## मध्वादिभ्यश्च ॥ ८६ ॥

मधु इत्येवमादिभ्यः शब्देभ्यो मतुप्प्रत्ययो भवति चातुरर्थिकः। अनद्यर्थ आरम्भः। मधुमान्। विसवान्। मधु। विस। स्थाणु। मुष्ट(१)। इक्षु। वेणु। रम्य। ऋक्ष। कर्कन्धु। शमी। किरीर। हिम। किशरा। शर्प्पणा। मरुत्। मरुव। दार्वाघाट। शर। इष्टका। तक्षशिला। शक्ति। आसन्दी। आसुति। शलाका। आमिधी। खडा। वेटा। मध्वादिः॥

## कुमुदनडवेतसेभ्यो ड्मतुप् ॥ ८७ ॥

कुमुद, नड, वेतस इत्येतेभ्यः शब्देभ्यो ड्मतुप् प्रत्ययो भवति चातुरर्थिकः। कुमुद्वान्। नड्वान्। वेतस्वान्। ॐमहिषाच्चेति वक्तव्यम्ॐ। महिष्मान्नाम देशः॥

## नडशादाड् ड्वलच् ॥ ८८ ॥

नडशादशब्दाभ्यां ड्वलच् प्रत्ययो भवति चातुरर्थिकः। यथासम्भवमर्थसम्बन्धः। नड्वलम्। शाद्वलम्॥

## शिखाया वलच् ॥ ८९ ॥

शिखाशब्दाद्वलच् प्रत्ययो भवति चातुरर्थिकः। यथासम्भवमर्थसम्बन्धः। शिखावलं

---

**शर्करायाः**—शर्करा शब्द से विहित चातुरर्थिक प्रत्यय का विकल्प से लुप् होता है।
**ठक्**—शर्करा शब्द से चातुरर्थिक ठक् तथा छ प्रत्यय होते हैं।
**नद्याम्**—नदी के वाच्य होने पर प्रातिपदिक से चातुरर्थिक मतुप् प्रत्यय होता है।
**मध्वादि**—मधु आदि शब्दों से चातुरर्थिक मतुप् प्रत्यय होता है।
**कुमुद**—कुमुद, नड, वेतस शब्दों से चातुरर्थिक ड्मतुप् प्रत्यय होता है।
**महिषाच्चेति**—महिष शब्द से भी चातुरर्थिक ड्मतुप् प्रत्यय समझना चाहिए।
**नड**—नड तथा शाद शब्दों से चातुरर्थिक ड्वलच् प्रत्यय होता है।
**शिखाया**—शिखा शब्द से चातुरर्थिक वलच् प्रत्यय होता है।

---

(१) दृष्टि इति पाठान्तरम्।

नाम नगरम् । मतुष्प्रकरणेऽपि शिखाया वलचं वक्ष्यति, तद्देशार्थं वचनम् ॥

## उत्करादिभ्यश्छः ॥ ९० ॥

उत्कर इत्येवमादिभ्यश्छः प्रत्ययो भवति चातुरर्थिकः । यथासंभवमर्थसम्बन्धः । उत्करीयम् । शफरीयम् । उत्कर । (१)संफल । शफर । पिप्पल । पिप्पलीमूल । अश्मन् । अर्क । पर्ण । सुपर्ण । खलाजिन । इडा । अग्नि । तिक । कितव । आतप । अनेक । पलाश । तृणव । पिचुक । अश्वत्थ । शकाक्षुद्र । भस्त्रा । विशाला । अवरोहित । गर्त्त । शाल । अन्य । जन्या । अजिन । मञ्च । चर्मन् । उत्क्रोश । शान्त । खदिर । शूर्प्पणाय । श्यावनाय । नैव । बक । नितान्त । वृक्ष । इन्द्रवृक्ष । आर्द्रवृक्ष । अर्जुनवृक्ष । उत्करादिः ॥

## नडादीनां कुक् च ॥ ९१ ॥

नड इत्येवमादीनां कुगागमो भवति छश्च प्रत्ययश्चातुरर्थिकः । यथासम्भवमर्थसम्बन्धः । नडकीयम् । प्लक्षकीयम् । नड । प्लक्ष । बिल्व । वेणु । वेत्र । वेतस । तृण । इक्षु । काष्ठ । कपोत । ॐक्रुञ्चाया ह्रस्वत्वं चॐ । ॐतक्षन्नलोपश्चॐ ॥

## शेषे ॥ ९२ ॥

शेष इत्यधिकारोऽयम् । यानित ऊर्ध्वं प्रत्ययाननुक्रमिष्यामः शेषेऽर्थे ते वेदितव्याः । उक्तादन्यः शेषः–अपत्यादिभ्यश्चतुरर्थपर्यन्तेभ्योऽन्योऽर्थः शेषः, तस्येदंविशेषा ह्यपत्यसमूहादयः तेषु घादयो मा भूवन्निति शेषाधिकारः क्रियते । किञ्च सर्वेषु जातादिषु घादयो यथा स्युरनन्तरेणैवार्थादेशेन सम्बन्धित्वेन कृतार्थता मा ज्ञायीति साकल्यार्थं शेषवचनम् । वक्ष्यति—"राष्ट्रावारपाराद् घखौ"—राष्ट्रियः, अवारपारीणः । शेष इति लक्षणं चाधिकारश्च । चक्षुषा गृह्यते चाक्षुषं रूपम् । (२)श्रावणः शब्दः । दृषदि पिष्टाः दार्षदाः सक्तवः । उलूखले क्षुण्णः औलूखलो यावकः । अश्वैरुह्यते आश्वो रथः । चतुर्भिरुह्यते चातुरं शकटम् । चतुर्दश्यां दृश्यते चातुर्दशं रक्ष इति ॥

## राष्ट्रावारपाराद् घखौ ॥ ९३ ॥

राष्ट्र, अवारपार इत्येताभ्यां यथासंख्यं घखावित्येतौ प्रत्ययौ भवतः । राष्ट्रियः । अवारपारीणः । ॐविगृहीतादपीष्यतेॐ । अवारीणः । पारीणः । ॐविपरीताच्चॐ । पारावारीणः । प्रकृतिविशेषोपादानमात्रेण तावत्प्रत्यया विधीयन्ते । तेषां तु जातादयोऽर्थाः समर्थविभक्तयश्च पुरस्ताद्वक्ष्यन्ते ॥

---

**उत्करादिभ्यः**—उत्कर आदि शब्दों से चातुरर्थिक छ प्रत्यय होता है ।

**नडादीनाम्**—नड़ आदि शब्दों से चातुरर्थिक छ प्रत्यय तथा प्रकृति भाग को कुक् का आगम भी हो जाता है ।

**क्रुञ्चायाः**—क्रुञ्चा शब्द को कुक् का आगम तथा ह्रस्व भी हो जाता है ।

**तक्षन्**—तक्षन् शब्द को कुक् का आगम तथा उसके नकार का लोप भी हो जाता है ।

**शेषे**—अब यहाँ से आगे जिन प्रत्ययों का विधान किया जायगा वे शेष, अर्थात् अपत्यादि चातुरर्थिक प्रत्ययार्थभिन्न, अर्थ में विहित हैं—ऐसा समझना चाहिए ।

**राष्ट्रावार**—राष्ट्र तथा अवारपार शब्दों से क्रमशः घ तथा ख प्रत्यय होते हैं ।

**विगृहीतात्**—अवार तथा पार शब्दों से भी पृथक्-पृथक् ख प्रत्यय होता है ।

**विपरीताच्च**—पारावार शब्द से भी ख प्रत्यय होता है ।

---

(१) संकर इति पाठान्तरम् ।

(२) रासनो रसः, स्पार्शनः स्पर्श इत्यधिकं पुस्तकान्तरे ।

## ग्रामाद्यखञौ ॥ ९४ ॥

ग्रामशब्दाद्य खञ् इत्येतौ प्रत्ययौ भवतः । ग्राम्यः । ग्रामीणः ॥

## कत्त्र्यादिभ्यो ढकञ् ॥ ९५ ॥

कत्त्रि इत्येवमादिभ्यो ढकञ् प्रत्ययो भवति । कात्त्रेयकः । औम्भेयकः । कत्त्रि । उम्भि । पुष्कर । पुष्कल । मोदन । कुम्भी । कुण्डिन । नगर । वञ्जी । भक्ति । माहिष्मती । चर्मण्वती(१)। ग्राम । उख्या । ॐकुल्याया यलोपश्चॐ । कत्र्यादिः ॥

## कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु ॥ ९६ ॥

कुलकुक्षिग्रीवाशब्देभ्यो यथासंख्यं श्वन्, असि, अलंकार इत्येतेषु जातादिष्वर्थेषु ढक प्रत्ययो भवति। कौलेयको भवति श्वा चेत्, कौलोऽन्यः । कौक्षेयको भवत्यसिश्चेत्, कौक्षोऽन्यः । ग्रैवेयको भवत्यलंकारश्चेत्, ग्रैवोऽन्यः ॥

## नद्यादिभ्यो ढक् ॥ ९७ ॥

नदी इत्येवमादिभ्यो ढक् प्रत्ययो भवति । नादेयम् । माहेयम् । पूर्वनगरीशब्दोऽत्र पठ्यते-पौर्वनगरेयम् । केचित्तु पूर्वनगिरीति पठन्ति, विच्छिद्य च प्रत्ययं कुर्वन्ति-पौरेयम्, वानेयम्, गैरेयमिति । तदुभयमपि दर्शनं प्रमाणम् । नदी । मही । वाराणसी । श्रावस्ती । कौशाम्बी । नवकौशाम्बी । काशफरी । खादिरी । पूर्वनगरी । पावा । मावा । साल्वा । दार्वा । दाल्वा । वासेनकी । वडवाया वृषे ॥

## दक्षिणापश्चात्पुरसस्त्यक् ॥ ९८ ॥

दक्षिणा, पश्चात्, पुरस् इत्येतेभ्यस्त्यक् प्रत्ययो भवति शैषिकः । दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः ॥

## कापिश्याः ष्फक् ॥ ९९ ॥

कापिशीशब्दात् ष्फक् प्रत्ययो भवति शैषिकः । षकारो ङीषर्थः । कापिशायनं मधु । कापिशायनी द्राक्षा । ॐबाह्ल्युर्दिपर्दिभ्यश्चेति वक्तव्यम्ॐ । बाह्लायनी । और्दायनी । पार्दायनी ॥

## रङ्कोरमनुष्येऽण् च ॥ १०० ॥

रङ्कुशब्दादण् प्रत्ययो भवति चकारात्ष्फक्च शैषिकोऽमनुष्येऽभिधेये । राङ्कवो

---

ग्रामात्—ग्राम शब्द से य तथा खञ् प्रत्यय होते हैं ।

कत्र्यादिभ्यः—कत्त्रि आदि शब्दों से ढकञ् प्रत्यय होता है ।

कुल्यायाः—कुल्या शब्द से ढकञ् प्रत्यय तथा प्रकृति के यकार का लोप भी समझना चाहिए ।

कुलकुक्षि—जात अर्थ में कुल, कुक्षि तथा ग्रीवा शब्दों से क्रमशः श्वा, असि तथा अलङ्कार के वाच्य होने पर ढकञ् प्रत्यय होता है ।

नद्यादिभ्यः—नदी आदि शब्दों से जात अर्थ में ढक् प्रत्यय होता है ।

दक्षिणा—दक्षिणा, पश्चात् तथा पुरस् शब्दों से जातार्थ में त्यक् प्रत्यय होता है ।

कापिश्याः—कापिशी शब्द से शैषिक ष्फक् प्रत्यय होता है ।

बाह्ल्युर्दि—बाह्लि, उर्दि तथा पर्दि शब्दों से भी शैषिक ष्फक् प्रत्यय अवगन्तव्य है ।

रङ्कोः—रङ्कु शब्द से अमनुष्य अर्थ में शेषार्थक अण् तथा ष्फक् प्रत्यय होते हैं ।

---

( १ ) वमती इति पाठान्तरम् ।

गौः। राङ्कवायणो गौः॥ अमनुष्य इति किम्? राङ्कवको मनुष्यः। ननु च रङ्कुशब्दः कच्छादिषु पठ्यते, तत्र च "मनुष्यतत्स्थयोर्वुञ्" इति मनुष्ये परत्वाद् वुञैव भवितव्यम्, कच्छादिपाठादमनुष्येऽणपि सिद्धः, किमिह मनुष्यप्रतिषेधेनाण्ग्रहणेन च? तदुच्यते— नैवायं मनुष्यप्रतिषेधः, किं तर्हि? नञिवयुक्तन्यायेन मनुष्यसदृशे प्राणिनि प्रतिपत्तिः क्रियते-तेन राङ्कवः कम्बल इति ष्फग् न भवति। विशेषविहितेन च ष्फकाऽणो बाधा मा भूदित्यण्ग्रहणमपि क्रियते॥

## द्युप्रागपागुदक्प्रतीचो यत्॥ १०१॥

दिव, प्राच्, अपाच्, उदच्, प्रत्यच् इत्येतेभ्यो यत्प्रत्ययो भवति शैषिकः। दिव्यम्। प्राच्यम्। अपाच्यम्। उदीच्यम्। प्रतीच्यम्। अव्ययात्तु कालवाचिनः परत्वात् ट्युट्युलौ भवतः-प्राक्तनम्॥

## कन्थायाष्ठक्॥ १०२॥

कन्थाशब्दाट्ठक् प्रत्ययो भवति शैषिकः। कान्थिकः॥

## वर्णौ वुक्॥ १०३॥

कन्थाया इत्येव। वर्णौ या कन्था तस्या वुक् प्रत्ययो भवति शैषिकः। ठकोऽपवादः। वर्णुर्नाम नदः, तत्समीपो देशो वर्णुः। तद्विषयार्थवाचिनः कन्थाशब्दादयं प्रत्ययः— तथाहि जातं हिमवत्सु कान्थकम्॥

## अव्ययात्त्यप्॥ १०४॥

अव्ययात् त्यप् प्रत्ययो भवति शैषिकः।

अमेहक्वतसित्रेभ्यस्त्यब्विधिर्योऽव्ययात् स्मृतः।
निनिर्भ्यां ध्रुवगत्योश्च प्रवेशो नियमे तथा॥(१)

अमात्यः। इहत्यः। क्वत्यः। इतस्त्यः। तत्रत्यः। यत्रत्यः। परिगणनं किम्? औपरिष्टः। पौरस्तः। पारस्तः(२)। वृद्धात्तु छो भवति-आरातीयः। ॐत्यब्नेर्ध्रुवेॐ। नियतं ध्रुवम्-नित्यम्। ॐनिसो गतेॐ। निर्गतो वर्णाश्रमेभ्यो निष्टयश्चण्डालादिः। ॐआविसश्छन्दसिॐ। आविस् शब्दाच्छन्दसि त्यप् प्रत्ययो भवति। आविष्ट्यो वर्द्धते। ॐअरण्याण्णो वक्तव्यःॐ। आरण्याः सुमनसः। ॐदूरादेत्यःॐ। दूरेत्यः पथिकः। ॐउत्तरादाहञ्ॐ। औत्तराहः॥

---

द्युप्राग—दिव, प्राच्, अपाच्, उदच् तथा प्रत्यच् शब्दों से शेषार्थक यत् प्रत्यय होता है।
कन्थायाः—कन्था शब्द से शेषार्थक ठक् प्रत्यय होता है।
वर्णौ—वर्णुदेशविषयक कन्था शब्द से वुक् प्रत्यय होता है।
अव्ययात्—अव्यय से शेषार्थक त्यप् प्रत्यय होता है।
त्यब्नेः—'नि' से ध्रुव अर्थ में त्यप् प्रत्यय समझना चाहिए।
निसो—'निस्' से गत अर्थ में त्यप् प्रत्यय अवगन्तव्य है।
आविसः—आविस् शब्द से वेद में त्यप् प्रत्यय समझना चाहिए।
अरण्यात्—अरण्य शब्द से ण्य प्रत्यय समझना चाहिए।
दूरात्—दूर शब्द से एत्य प्रत्यय समझना चाहिए।
उत्तरात्—उत्तर शब्द से आहञ् प्रत्यय समझना चाहिए।

---

(१) इदं पद्यार्धं क्वचिन्नास्ति।
(२) अत्र पारस्त इत्यनन्तरम्—अव्ययानां भमात्रे टिलोपः—इत्यधिकं पुस्तकान्तरे।

## ऐषमोह्यःश्वसोऽन्यतरस्याम् ॥ १०५ ॥

ऐषमस्, ह्यस्, श्वस् इत्येतेभ्योऽन्यतरस्यां त्यप् प्रत्ययो भवति शैषिकः। ऐषमस्त्यम्, ऐषमस्तनम्। ह्यस्त्यम्, ह्यस्तनम्। श्वस्त्यम्, श्वस्तनम्। "श्वसस्तुट् च" इति ठञपि तृतीयो भवति—शौवस्तिकम् ॥

## तीररूप्योत्तरपदादञ्ञौ ॥ १०६ ॥

तीरोत्तरपदाद् रूप्योत्तरपदाच्च प्रातिपदिकाद्यथासंख्यमञ् ञ इत्येतौ प्रत्ययौ भवतः शैषिकौ। अणोऽपवादौ। काकतीरम्। पाल्वलतीरम्। रूप्योत्तरपदात्-वार्करूप्यम्, शैवरूप्यम्। तीररूप्यान्तादिति नोक्तम्, बहुच्प्रत्ययपूर्वान् मा भूदिति-बाहुरूप्यम्। अणेव भवति(१) ॥

## दिक्पूर्वपदादसंज्ञायां ञः ॥ १०७ ॥

असंज्ञायामिति प्रकृतिविशेषणम्। दिक्पूर्वपदात्प्रातिपदिकादसंज्ञाविषयात् ञः प्रत्ययो भवति शैषिकः। अणोऽपवादः। पौर्वशालः। दाक्षिणशालः। आपरशालः। असंज्ञायामिति किम्? पूर्वेषुकामशमः, अपरेषुकामशमः। "दिक्संख्ये संज्ञायाम्" इति समासः, "प्राचां ग्रामनगराणाम्" इत्युत्तरपदवृद्धिः। पदग्रहणं स्वरूपविधिनिरासार्थम् ॥

## मद्रेभ्योऽञ् ॥ १०८ ॥

दिक्पूर्वपदादित्येव। दिक्पूर्वपदान्मद्रशब्दादञ् प्रत्ययो भवति शैषिकः। पौर्वमद्रः। आपरमद्रः। "दिशो मद्राणाम्" इति पर्युदासादादिवृद्धिरेव ॥

## उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात् ॥ १०९ ॥

दिग्ग्रहणं निवृत्तम्। उदीच्यग्रामवाचिनः प्रातिपदिकाद् बह्वचोऽन्तोदात्ताद् अञ् प्रत्ययो भवति शैषिकः। अणोऽपवादः। शैवपुरम्। माण्डवपुरम्। उदीच्यग्रामादिति किम्? माथुरम्(२)। बह्वच इति किम्? ध्वजी, ध्वाजम्। अन्तोदात्तादिति किम्?, शार्करीधानम्। शार्करीधानशब्दे लित्स्वरेण धाशब्द उदात्तः ॥

## प्रस्थोत्तरपदपलद्यादिकोपधादण् ॥ ११० ॥

प्रस्थोत्तरपदात् पलद्यादिभ्यः ककारोपधाच्च प्रातिपदिकादण् प्रत्ययो भवति शैषिकः। उदीच्यग्रामलक्षणस्याञोऽपवादः। माद्रीप्रस्थः। माहकीप्रस्थः। पलद्यादिभ्यः-पालदः, पारिपदः। ककारोपधात्-नैलीनकः, चैयातकः(३)। पलद्यादिषु यो वाहीकग्रामस्ततष्ठ-

---

**ऐषमो**—ऐषमस्, ह्यस् तथा श्वस् शब्दों से विकल्प से शेषार्थक त्यप् प्रत्यय होता है।

**तीर**—तीरोत्तरपदक तथा रूप्योत्तरपदक प्रातिपदिक से क्रमशः शेषार्थक अञ् तथा ञ प्रत्यय होते हैं।

**दिक्पूर्व**—दिक्पूर्वपदक प्रातिपदिक से असंज्ञार्थ में शैषिक ञ प्रत्यय समझना चाहिए।

**मद्रेभ्यः**—दिक्पूर्वपदक मद्र शब्द से शेषार्थक अञ् प्रत्यय होता है।

**उदीच्य**—उदीच्यग्रामवाचक बह्वच् अन्तोदात्त प्रातिपदिक से शेषार्थ में अञ् प्रत्यय होता है।

**प्रस्थोत्तर**—प्रस्थोत्तरपदक, पलद्य आदि तथा ककारोपध प्रातिपदिकों से शेषार्थक अण् प्रत्यय होता है।

---

(१) स्वरे विशेषः इत्यधिकं पुस्तकान्तरे।

(२) माधुरम् इति पाठान्तरम्।

(३) वैयतक इति पाठान्तरम्।

ञ्जिठयोरपवादः। यथा—गौष्ठी, नैतकीति(१)। गोमतीशब्दः पठ्यते, ततो "रोपधेतोः प्राचाम्" इति वुञोऽपवादः। वाहीकशब्दः कोपधोऽपि पुनः पठ्यते, परं छं बाधितुम्। अण्ग्रहणं बाधकबाधनार्थम्। पलदी। परिषत्। यकृल्लोमन्। रोमक। कालकूट। पटच्चर। वाहीक। कलकट। मलकीट। कमलकीट। कमलभिदा। कमलकीर। बाहुकीट। नैतकी। परिखा। शूरसेन। गोमती। उदयान(२)। पलद्यादिः॥

## कण्वादिभ्यो गोत्रे ॥ १११ ॥

गोत्रमिह न प्रत्ययार्थो न च प्रकृतिविशेषणम्। तर्ह्येवं संबध्यते—कण्वादिभ्यो गोत्रे यः प्रत्ययो विहितस्तदन्तेभ्य एवाण् प्रत्ययो भवति शैषिकः। छस्यापवादः। काण्वाश्छात्राः। गौकक्षाः(३)॥

## इञश्च ॥ ११२ ॥

गोत्र इत्येव। गोत्रे य इञ् विहितस्तदन्तात्प्रातिपदिकादण् प्रत्ययो भवति शैषिकः। छस्यापवादः। दाक्षाः। प्लाक्षाः। माहकाः। गोत्र इत्येव—सौतङ्गमेरिदं सौतङ्गमीयम्॥

## न द्व्यचः प्राच्यभरतेषु ॥ ११३ ॥

द्व्यचः प्रातिपदिकात्प्राच्यभरतगोत्रादिञन्तादण् प्रत्ययो न भवति। पूर्वेण प्राप्तः प्रतिषिध्यते। पैङ्गीयाः। प्रौष्ठीयाः। चैदीयाः(४)। पौष्कीयाः। काशीयाः। द्व्यच इति किम्? पान्नागाराः। प्राच्यभरतेष्विति किम्? दाक्षाः। काशीया इति कथमुदाहृतम्, यावता काश्यादिभ्यष्ठञ्ञिठाभ्यां भवितव्यम्? नैतदस्ति। देशवाचिनः काशिशब्दस्य तत्र ग्रहणम्, (५)चैदिशब्देन साहचर्यात्। गोत्रात्तु वृद्धाच्छ एव भवति। ज्ञापकादन्यत्र प्राच्यग्रहणेन भरतग्रहणं न भवतीति स्वशब्देन भरतानामुपादानं कृतम्॥

## वृद्धाच्छः ॥ ११४ ॥

गोत्र इति नानुवर्त्तते। सामान्येन विधानम्। वृद्धात्प्रातिपदिकाच्छः प्रत्ययो भवति शैषिकः। अणोऽपवादः। गार्गीयः। वात्सीयः। शालीयः। मालीयः। अव्ययतीररूप्योत्तरपदोदीच्यग्रामकोपधविधींस्तु परत्वाद् बाधते॥

## भवतष्ठक्छसौ ॥ ११५ ॥

वृद्धादित्येव। भवच्छब्दाद् वृद्धात् ठक्छसौ प्रत्ययौ भवतः शैषिकौ। छस्यापवादौ।

---

**कण्वादिभ्यः**—गोत्रप्रत्ययान्त कण्व आदि शब्दों से शेषार्थक अण् प्रत्यय होता है।

**इञश्च**—गोत्रार्थक इञ्प्रत्ययान्त प्रातिपदिक से भी शेषार्थक अण् प्रत्यय होता है।

**न द्व्यचः**—प्राच्यभरतगोत्रार्थकइञ्प्रत्ययान्त द्व्यच् प्रातिपदिक से शैषिक अण् प्रत्यय नहीं होता है।

**वृद्धाच्छः**—वृद्धसंज्ञक प्रातिपदिक से शेषार्थक छ प्रत्यय होता है।

**भवतः**—वृद्धसंज्ञक भवत् शब्द से शेषार्थ में ठक् तथा छस् प्रत्यय होते हैं।

---

(१) नैकेतीति, नैधिकीति च पाठान्तरम्।

(२) पक्ष, कललकीट, कललकीकटा, गोष्ठी, नैधिकी, नैकेती, सकृल्लोमन् इत्यधिकमत्र पुस्तकान्तरे।

(३) गोत्र इति किम्? कण्वो देवताऽस्य काण्वः, तस्येदं काण्वीयम्। कण्वादिर्गर्गाद्यन्तर्गण इत्यधिकं क्वचित्।

(४) वैदीया इति पाठान्तरम्।

(५) वैदि इति पाठान्तरम्।

सकारः पदसंज्ञार्थः। भवतस्त्यदादित्वाद् वृद्धसंज्ञा। भावत्कः। भवदीयः। अवृद्धात्तु भवतः शतुरणेव भवति—भावतः॥

## काश्यादिभ्यष्ठञ्ञिठौ॥ ११६॥

काशि इत्येवमादिभ्यष्ठञ् ञिठ इत्येतौ प्रत्ययौ भवतः शैषिकौ। इकार उच्चारणार्थः। ञकार एवोभयत्र विपर्यस्तदेशोऽनुबन्धः। स्त्रीप्रत्यये विशेषः। काशिकी, काशिका। वैदिकी, वैदिका। वृद्धादित्यत्रानुवर्त्तते, ये त्ववृद्धाः पठ्यन्ते वचनप्रामाण्यात्तेभ्यः प्रत्ययविधिः। देवदत्तशब्दः पठ्यते, तस्य "एङ् प्राचां देशे" इति वृद्धसंज्ञा-दैवदत्तिकः। वाहीकग्रामस्य तु नास्ति वृद्धसंज्ञा-दैवदत्तः। कथं भाष्य उदाहृतम् "वा नामधेयस्य वृद्धसंज्ञा वक्तव्या, देवदत्तीया दैवदत्ता" इति, यावता वृद्धसंज्ञापक्षे काश्यादित्वाट्ठञ्ञिठाभ्यां भवितव्यम्? तत्रैवं वर्णयन्ति 'वा नामधेयस्य' इति व्यवस्थितविभाषेयम्, सा छे कर्त्तव्ये भवति ठञ्ञिठयोर्न भवतीति। काशि। चेदि। संज्ञा। संवाह। अच्युत। मोहमान। शकुलाद। हस्तिकर्षू। कुदामन्(१)। हिरण्य। करण। गोधाशन। भौरिकि। भौलिङ्गि। अरिन्दम। सर्वमित्र। देवदत्त। साधुमित्र। दासमित्र। दासग्राम। सौधावतान। युवराज। उपराज। सिन्धुमित्र। देवराज। ❀आपदादिपूर्वपदात्कालान्त❀। आपत्कालिकी, आपत्कालिका। और्ध्वकालिकी, और्ध्वकालिका। तात्कालिकी, तात्कालिका॥

## वाहीकग्रामेभ्यश्च॥ ११७॥

वृद्धादित्येव। वाहीकग्रामवाचिभ्यो वृद्धेभ्यष्ठञ्ञिठौ प्रत्ययौ भवतः शैषिकौ। छस्यापवादौ। शाकलिकी, शाकलिका। मान्थविकी, मान्थविका॥

## विभाषोशीनरेषु॥ ११८॥

वृद्धादिति वर्तते, वाहीकग्रामेभ्य इति च। उशीनरेषु ये वाहीकग्रामास्तद्वाचिभ्यो वृद्धेभ्यः प्रातिपदिकेभ्यो विभाषा ठञ्ञिठौ प्रत्ययौ भवतः। आह्वजालिकी, आह्वजालिका, आह्वजालीया। सौदर्शनिकी, सौदर्शनिका, सौदर्शनीया॥

## ओर्देशे ठञ्॥ ११९॥

वृद्धादिति नानुवर्त्तते, उत्तरसूत्रे पुनर्वृद्धग्रहणात्। उवर्णान्ताद् देशवाचिनः प्रातिपदिकात् ठञ् प्रत्ययो भवति शैषिकः। नैषादकर्षुकः। शावरजम्बुकः(२)। देश इति किम्? पटोश्छात्राः पाटवाः। ठञ्ञिठयोः प्रकरणे ठञः केवलस्यानुवृत्तिर्न लभ्यत इति ठञ्ग्रहणं कृतम्॥

---

**काश्यादिभ्यः**—काशि आदि शब्दों से शेषार्थक ठञ् तथा ञिठ् प्रत्यय होते हैं।

**आपदादि**—आपत् आदि पूर्वपदक तथा कालशब्दोत्तरपदक प्रातिपदिक से ठञ् तथा ञिठ् प्रत्यय समझना चाहिए।

**वाहीक**—वाहीकग्रामवाचक वृद्धसंज्ञक प्रातिपदिक से भी शेषार्थक ठञ् तथा ञिठ् प्रत्यय होते हैं।

**विभाषा**—उशीनरवृत्ती वाहीकग्रामवाचक प्रातिपदिक से विकल्प से ठञ् तथा ञिठ् प्रत्यय होते हैं।

**ओर्देशे**—देशवाचक उवर्णान्त प्रातिपदिक से शैषिक ठञ् प्रत्यय होता है।

---

(१) कुनामन् इति पाठान्तरम्।

(२) केऽण इति ह्रस्व इति पाठान्तरम्।

## वृद्धात् प्राचाम् ॥ १२० ॥

ओर्देश इत्येव। उवर्णान्ताद् वृद्धात् प्राग्देशवाचिनः प्रातिपदिकाट्ठञ् प्रत्ययो भवति शैषिकः। आढकजम्बुकः। शाकजम्बुकः(१)। नापितवास्तुकः। पूर्वेणव ठञि सिद्धे नियमार्थं वचनम्—वृद्धादेव प्राचामवृद्धान्न भवतीति-मल्लवास्तु, माल्लवास्तवः॥

## धन्वयोपधाद् वुञ् ॥ १२१ ॥

वृद्धादिति वर्तते, देश इति च। धन्ववाचिनो यकारोपधाच्च देशाभिधायिनो वृद्धात् प्रातिपदिकाद् वुञ् प्रत्ययो भवति शैषिकः। धन्वशब्दो मरुदेशवचनः। पारेधन्वकः। ऐरावतकः। योपधात्-सांकाश्यकः, काम्पिल्यकः॥

## प्रस्थपुरवहान्ताच्च ॥ १२२ ॥

वृद्धादिति, वर्त्तते, देश इति च। अन्तशब्दः प्रत्येकमभिसंबध्यते। प्रस्थ पुर, वह इत्येवमन्तात् देशवाचिनः प्रातिपदिकाद् वृद्धाद् वुञ् प्रत्ययो भवति शैषिकः। छस्यापवादः। मालाप्रस्थकः। नान्दीपुरकः। कान्तीपुरकः। पलुवहकः। फाल्गुनीवहकः। पुरान्तो रोपधः, तत उत्तरसूत्रेणैव सिद्धमप्रागर्थमिह ग्रहणम्॥

## रोपधेतोः प्राचाम् ॥ १२३ ॥

वृद्धादिति वर्त्तते, देश इति च। तद्विशेषणं प्राग्ग्रहणम्। रोपधादीकारान्ताच्च प्राग्देशवाचिनो वृद्धाद् वुञ् प्रत्ययो भवति शैषिकः। छस्यापवादः। पाटलिपुत्रकाः। ऐकचक्रकाः। ईतः खल्वपि—काकन्दी, काकन्दकः; माकन्दी, माकन्दकः। प्राचामिति किम्? दात्तामित्रीयः। तपरकरणं विस्पष्टार्थम्॥

## जनपदतदवध्योश्च ॥ १२४ ॥

वृद्धादिति वर्त्तते, देश इति च। तद्विशेषणं जनपदतदवधी। वृद्धाज्जनपदवाचिनस्तदवधिवाचिनश्च प्रातिपदिकाद् वुञ् प्रत्ययो भवति शैषिकः। छस्यापवादः। आभिसारकः। आदर्शकः। जनपदावधेः खल्वपि-औपुष्टकः, श्यामायनकः। तदवधिरपि जनपद एव गृह्यते, न ग्रामः। किमर्थं तर्हि ग्रहणम्? बाधकबाधनार्थम्। गर्त्तोत्तरपदाच्छं बाधित्वा वुञेव जनपदावधेर्भवति-त्रैगर्त्तकः॥

## अवृद्धादपि बहुवचनविषयात् ॥ १२५ ॥

जनपदतदवध्योरित्येव। अवृद्धाद्वृद्धाच्च जनपदात्तदवधिवाचिनश्च बहुवचनविष-

---

**वृद्धात्**—वृद्धसंज्ञक प्राग्देशार्थक उवर्णान्त प्रातिपदिक से शैषिक ठञ् प्रत्यय होता है।

**धन्व**—मरुदेशवाचक तथा वृद्धसंज्ञक यकारोपध देशवाचक प्रातिपदिकों से शेषार्थक वुञ् प्रत्यय होता है।

**प्रस्थ**—प्रस्थशब्दान्त, पुरशब्दान्त तथा वहशब्दान्त देशवाचक वृद्धसंज्ञक प्रातिपदिकों से भी शैषिक वुञ् प्रत्यय होता है।

**रोपधेतोः**—रकारोपध तथा ईकारान्त प्राग्देशवाचक वृद्ध-संज्ञक प्रातिपदिकों से शैषिक् वुञ् प्रत्यय होता है।

**जनपद**—वृद्धसंज्ञक जनपदवाचक तथा जनपदसीमावाचक प्रातिपदिकों से शैषिक वुञ् प्रत्यय होता है।

**अवृद्धादपि**—वृद्धसंज्ञकभिन्न जनपदवाचक तथा जनपदसीमावाचक शब्दों से भी वुञ् प्रत्यय होता है यदि प्रकृति बहुवचनान्त हो।

---

(१) शालजम्बुक इति पाठान्तरम्।

यात्प्रातिपदिकाद् वुञ् प्रत्ययो भवति शैषिकः। अणछयोरपवादः। अवृद्धाज्जनपदात्तावत्—अङ्गाः, वङ्गाः, कलिङ्गाः, आङ्गकः, वाङ्गकः, कालिङ्गकः। अवृद्धाज्जनपदावधेः—अजमीढाः, अजक्रन्दाः, आजमीढकः, आजक्रन्दकः। वृद्धाज्जनपदात्—दार्वाः, जाम्ब्वाः, दार्वकः, जाम्ब्वकः। वृद्धाजनपदावधेः—कालञ्जराः, वैकुलिशाः, कालञ्जरकः, वैकुलिशकः। विषयग्रहणमनन्यत्र भावार्थम्, जनपदैकशेषबहुत्वे मा भूत्—वर्त्तन्यः, वार्त्तनः(१)। अपिग्रहणं किम्, यावता वृद्धात्पूर्वेणैव सिद्धम्? तक्रकौण्डिन्यन्यायेन बाधा मा विज्ञायीति समुच्चीयते॥

## कच्छाग्निवक्त्रगर्त्तोत्तरपदात्॥ १२६॥

देश इत्येव। उत्तरपदशब्दः प्रत्येकमभिसंवद्ध्यते। कच्छाद्युत्तरपदाद् देशवाचिनः प्रातिपदिकाच्चावृद्धाद्वृद्धाच्च वुञ् प्रत्ययो भवति शैषिकः। छाणोरपवादः। दारुकच्छकः। पैप्पलीकच्छकः। काण्डाग्नकः। वभुजाग्नकः। ऐन्द्रवक्त्रकः। सैन्धुवक्त्रकः। बाहुगर्त्तकः। चाक्रगर्त्तकः॥

## धूमादिभ्यश्च॥ १२७॥

धूमादिभ्यो देशवाचिभ्यः प्रातिपदिकेभ्यो वुञ् प्रत्ययो भवति शैषिकः। अणादेरपवादः। धौमकः। खाण्डकः(२)। पाथेयशब्दः पठ्यते, तस्य योपधत्वादेव वुञि सिद्धे सामर्थ्याददेशार्थं ग्रहणम्, तथा विदेहानर्त्तशब्दयोर्जनपदलक्षणे वुञि सिद्धेऽदेशार्थः पाठः। विदेहानां क्षत्रियाणां स्वं वैदेहकम्। आनर्त्तकम्। समुद्रशब्दः पठ्यते, तस्य नावि मनुष्ये च वुञिष्यते—सामुद्रिका नौः, सामुद्रको मनुष्यः। अन्यत्र न भवति—सामुद्रं जलमिति। धूम। (३)खण्ड। शशादन। आर्ज्जुनाद। दाण्डायनस्थली। माहकस्थली। घोषस्थली। माषस्थली। राजस्थली। राजगृह। सत्रासाह। भक्षास्थली। मद्रकूल। गर्त्तकूल। आञ्जीकूल। द्वयाहाव। त्र्याहाव। संहीय। वर्वर। वर्चगर्त्त। विदेह। आनर्त्त। माठर। पाथेय। घोष। शिष्य। मित्र। वल। आराज्ञी। धार्तराज्ञी। अवयात। तीर्थ। ॐकूलात् सौवीरेषुॐ। ॐसमुद्रान्नावि मनुष्ये चॐ। कुक्षि। अन्तरीप। द्वीप। अरुण। उज्जयिनी। दक्षिणापथ। साकेत(४)॥

## नगरात् कुत्सनप्रावीण्ययोः॥ १२८॥

नगरशब्दाद् वुञ् प्रत्ययो भवति शैषिकः कुत्सने प्रावीण्ये च गम्यमाने। प्रत्ययार्थविशेषणं चैतत्—कुत्सने प्रावीण्ये च जातादौ प्रत्ययार्थ इति। कुत्सनं निन्दनम्। प्रावीण्यं नैपुण्यम्।

---

**कच्छाग्नि**—कच्छोत्तरपदक, अग्न्युत्तरपदक, वक्त्रोत्तरपदक तथा गर्त्तोत्तरपदक देशवाची प्रातिपदिकों से शैषिक वुञ् प्रत्यय होता है।

**धूमादिभ्यश्च**—धूम आदि देशवाचक शब्दों से शैषिक वुञ् प्रत्यय होता है।

**कूलात्**—सौवीर अर्थ में कूल शब्द से शैषिक वुञ् प्रत्यय होता है।

**समुद्रात्**—समुद्र शब्द से नौकार्थ में तथा मनुष्यार्थ में भी शैषिक वुञ् प्रत्यय होता है।

**नगरात्**—कुत्सन तथा प्रवीणता के गम्यमान होने पर नगर शब्द से शैषिक वुञ् प्रत्यय होता है।

---

(१) वर्त्तनी च वर्त्तनी च वर्त्तनी चेति वर्त्तन्यः, वर्त्तनीषु भव इति वुञ् न भवति, सहविवक्षाया अभावे बहुवचनाभावात्। वर्त्तन्यः। वार्त्तनः। इति कचित्पाठः।

(२) खाडण्डक इति पाठान्तरम्।

(३) खडण्ड इति पाठान्तरम्।

(४) मानवल्ली, वल्ली, सुराज्ञी—एतेऽत्र गणेऽधिकाः कुत्रचित्।

केनायं मुषितः पन्था गात्रे पद्यालिधूसरः ।

इह नगरे मनुष्येण संभाव्यत एतन्नागरकेण । चौरा हि नागरका भवन्ति ।

केनेदं लिखितं चित्रं मनोनेत्रविकाशि यत् ।

इह नगरे मनुष्येण संभाव्यत एतन्नागरकेण । प्रवीणा हि नागरका भवन्ति । कुत्सनप्रावीण्ययोरिति किम ? नागरा ब्राह्मणाः । कत्र्यादिषु तु संज्ञाशब्देन साहचर्यात् संज्ञानगरं पठ्यते, तस्मिन् नागरेयकमिति प्रत्युदाहार्यम् ॥

## अरण्यान्मनुष्ये ॥ १२९ ॥

अरण्यशब्दाद् वुञ् प्रत्ययो भवति शैषिको मनुष्येऽभिधेये । औपसंख्यानिकस्य णस्यापवादः । आरण्यको मनुष्यः । ॐपथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वक्तव्यम्ॐ । आरण्यकः पन्थाः । आरण्यकोऽध्यायः । आरण्यको न्यायः । आरण्यको विहारः । आरण्यको मनुष्यः । आरण्यको हस्ती । ॐवा गोमयेषुॐ । आरण्यकाः, आरण्या गोमयाः । एतेष्विति किम् ? आरण्याः पशवः ॥

## विभाषा कुरुयुगन्धराभ्याम् ॥ १३० ॥

कुरु, युगन्धर इत्येताभ्यां विभाषा वुञ् प्रत्ययो भवति शैषिकः । कौरवकः । कौरवः । यौगन्धरकः । यौगन्धरः । जनपदशब्दावेतौ, ताभ्याम् "अवृद्धात" अपीति नित्ये वुञि प्राप्ते विकल्प उच्यते । कुरुशब्दः कच्छादिष्वपि पठ्यते, तत्र वचनादणपि भविष्यति । पारिशेष्याद्युगन्धरार्था(१) विभाषा; मनुष्यतत्स्थयोस्तु कुरुशब्दान्नित्य एव वुञ् प्रत्ययो भवति–कौरवको मनुष्यः, कौरवकमस्य हसितमिति ॥

## मद्रवृज्योः कन् ॥ १३१ ॥

मद्रवृजिशब्दाभ्यां कन् प्रत्ययो भवति शैषिकः । जनपदवुञोऽपवादः । मद्रेषु जातः मद्रकः । वृजिकः ॥

## कोपधादण् ॥ १३२ ॥

देश इत्येव । ककारोपधात् प्रातिपदिकादण् प्रत्ययो भवति शैषिकः । जनपदवुञोऽपवादः । अन्यत्र जनपदं मुक्त्वा पूर्वेणैव कोपधादण् सिद्धम् । ऋषिकेषु जात आर्षिकः । माहिषिकः । अण्ग्रहणमुवर्णान्तादपि स्यात्–इक्ष्वाकुषु जातः ऐक्ष्वाकः ॥

## कच्छादिभ्यश्च ॥ १३३ ॥

देश इत्येव । कच्छ इत्येवमादिभ्यो देशवाचिभ्योऽण् प्रत्ययो भवति शैषिकः । वुञादेरपवादः । काच्छः । सैन्धवः । वार्णवः । कच्छशब्दो न बहुवचनविषयः, तस्य

---

**अरण्यात्**—मनुष्य के वाच्य होने पर अरण्यशब्द से शैषिक वुञ् प्रत्यय होता है ।

**पथ्यध्याय**—मार्ग, अध्याय, न्याय, विहार, मनुष्य तथा हस्ति अर्थों में अरण्य शब्द से वुञ् प्रत्यय अवगन्तव्य है ।

**वा गोमयेषु**—गोमय के वाच्य होने पर अरण्य शब्द से शैषिक वुञ् प्रत्यय विकल्प से होता है ।

**विभाषा**—कुरु तथा युगन्धर शब्दों से शैषिक वुञ् प्रत्यय विकल्प से होता है ।

**मद्र**—मद्र तथा वृजि शब्दों से शैषिक कन् प्रत्यय होता है ।

**कोपधादण्**—ककारोपध शब्द से देश के गम्यमान होने पर शैषिक अण् प्रत्यय होता है ।

**कच्छादिभ्यश्च**—देशवाचक कच्छ आदि शब्दों से शेषार्थक अण् प्रत्यय होता है ।

---

(१) सैषा युगन्धरार्था विभाषा इति पाठान्तरम् ।

मनुष्यतत्स्थयोर्वुञर्थः पाठः। विजापकशब्दः पठ्यते, तस्य कोपधत्वादेवाणि सिद्धे ग्रहणमुत्तरार्थम्। कच्छ। सिन्धु। वर्णु। गन्धार। मधुमत्। कम्बोज। कश्मीर। साल्व। कुरु। रङ्कु। अणु(१)। खण्ड। द्वीप। अनूप। अजवाह। विजापक। कुलून। कच्छादिः॥

## मनुष्यतत्स्थयोर्वुञ् ॥ १३४ ॥

कच्छादिभ्य इत्येव। मनुष्ये मनुष्यस्थे च जातादौ प्रत्ययार्थे कच्छादिभ्यो वुञ् प्रत्ययो भवति। अणोऽपवादः। काच्छको मनुष्यः। काच्छकमस्य हसितं जल्पितम्। काच्छिका चूडा। सैन्धवको मनुष्यः। सैन्धवकमस्य हसितं जल्पितम्। सैन्धविका चूडा। मनुष्यतत्स्थयोरिति किम्? काच्छो गौः, सैन्धवो वार्णवः॥

## अपदातौ साल्वात् ॥ १३५ ॥

साल्वशब्दः कच्छादिषु पठ्यते, ततः पूर्वेणैव मनुष्यतत्स्थयोर्वुञि सिद्धे नियमार्थं वचनम्-अपदातावेव। मनुष्ये मनुष्यस्थे साल्वशब्दाद् वुञ् प्रत्ययो भवति। साल्वको मनुष्यः। साल्वकमस्य हसितं जल्पितम्। अपदाताविति किम्? साल्वः पदातिर्व्रजति॥

## गोयवाग्वोश्च ॥ १३६ ॥

गवि यवाग्वां च जातादौ प्रत्ययार्थे साल्वशब्दात् वुञ् प्रत्ययो भवति शैषिकः। कच्छाद्यणोऽपवादः। साल्वको गौः। साल्वका यवागूः। साल्वमन्यत्।

## गर्त्तोत्तरपदाच्छ ॥ १३७ ॥

देश इत्येव। गर्त्तोत्तरपदाद् देशवाचिनः प्रातिपदिकाच्छः प्रत्ययो भवति शैषिकः। अणोऽपवादः। वाहीकग्रामलक्षणं तु प्रत्ययं परत्वाद् बाधते। वृकगर्त्तीयम्। श्रृगालगर्त्तीयम्। श्वाविद्गर्त्तीयम्। उत्तरपदग्रहणं बहुच्पूर्वनिरासार्थम्-बाहुगर्तम्॥

## गहादिभ्यश्च ॥ १३८ ॥

गह इत्येवमादिभ्यः प्रातिपदिकेभ्यश्छः प्रत्ययो भवति शैषिकः। अणञोरपवादः(२)। गहीयः। अन्तःस्थीयः। देशाधिकारेऽपि सम्भवापेक्षं विशेषणम्, न सर्वेषाम्। मध्यमध्यमं चाण् चरण इति पठ्यते, तस्यायमर्थः-मध्यशब्दः प्रत्ययसन्नियोगेन मध्यममापद्यते—मध्यमीयाः। चरणे तु प्रत्ययार्थेऽण् भवति—माध्यमा इति। तदेतद्विशेष एव स्मर्यते, पृथिवीमध्यस्य मध्यमभावः, चरणसम्बन्धेन निवासलक्षणोऽणिति च। ॐमुखपार्श्वतसोर्लोपश्चॐ।

---

**मनुष्य**—मनुष्य तथा मनुष्यस्थ पदार्थ की उत्पत्ति आदि अर्थों में कच्छ आदि शब्दों से वुञ् प्रत्यय होता है।

**अपदातौ**—मनुष्य तथा मनुष्यस्थ पदार्थ की उत्पत्ति आदि अर्थों में साल्व शब्द से यदि वुञ् प्रत्यय होता है तो अपदाति अर्थ में ही।

**गो**—गो तथा यवागू की उत्पत्ति आदि अर्थों में साल्व शब्द से वुञ् प्रत्यय होता है।

**गर्त्तोत्तर**—गर्त्तोत्तरपदक देशवाचक प्रातिपदिक से शैषिक छ प्रत्यय होता है।

**गहादिभ्यश्च**—गह आदि प्रातिपदिकों से शैषिक छ प्रत्यय होता है।

**मुख**—तसुप्रत्ययान्त मुख तथा पार्श्व शब्दों से छ प्रत्यय के साथ-साथ प्रकृति के सकार का लोप भी समझना चाहिए।

---

(१) अण्ड इति पाठान्तरम्।

(२) अणादेरपवाद इति पाठान्तरम्।

मुखतीयम् । पार्श्वतीयम् । ॐकुग्जनस्य परस्य चॐ । जनकीयम् । परकीयम् । ॐदेवस्य चेति वक्तव्यम्ॐ । देवकीयम् । ॐवेणुकादिभ्यश्छण्वक्तव्यःॐ । आकृतिगणोऽयम् । वैणुकीयम् । औत्तरपदकीयम् । प्रास्थकीयम्(१) । माध्यमकीयम् । गह । अन्तःस्थ । सम । विषम । मध्यमध्यमं चाण्चरणे । उत्तम । अङ्ग । वङ्ग । मगध । पूर्वपक्ष । अपरपक्ष । अधमशाख । उत्तमशाख । समानशाख । एकग्राम । एकवृक्ष । एकपलाश । इष्वग्र । इष्वन्दी(२) अवस्यन्दी(३) । कामप्रस्थ । खाडायनि(४) । कावेरणि(५) । शैशिरि । शौङ्गि । आसुरि । आहिंसि । आमित्रि । व्याडि । वैदजि । भौजि । आढ्यश्वि । आनृशंसि । सौवि । पारकि । अग्निशर्मन् । देवशर्मन् । श्रौति । आरटकि । वाल्मीकि । क्षेमवृद्धिन् । उत्तर । अन्तर । मुखपार्श्वतसोर्लोपः । जनपरयोः कुक च । देवस्य च । वेणुकादिभ्यश्छण् । गहादिः ॥

## प्राचां कटादेः ॥ १३९ ॥

देश इत्येव । तद्विशेषणं प्राग्ग्रहणम् । प्राग्देशवाचिनः कटादेः प्रातिपदिकाच्छः प्रत्ययो भवति शैषिकः । अणोऽपवादः । कटनगरीयम् । कटघोषीयम् । कटपल्वलीयम् ॥

## राज्ञः क च ॥ १४० ॥

असम्भवाद्देशाधिकारः, न विशेषणम् । राज्ञः ककारश्चान्तादेशो भवति छश्च प्रत्ययः । राजकीयम् । आदेशमात्रमिह विधेयम्, प्रत्ययस्तु "वृद्धाच्छः" इत्येव सिद्धः ॥

## वृद्धादकेकान्तखोपधात् ॥ १४१ ॥

देश इत्येव । वृद्धाद्देशवाचिनोऽक इक इत्येवमन्तात् खकारोपधाच्च प्रातिपदिकाच्छः प्रत्ययो भवति शैषिकः । कोपधलक्षणस्याणोपवादः । वाहीकग्रामलक्षणस्य च प्रत्ययस्य "रोपधेतोः", "प्राचाम्" इति च । अकान्तात्तावत्–आरीहणकीयम्, द्रौघणकीयम् । इकान्तात्—आश्वपथिकीयम्, शाल्मलिकीयम् । खोपधात्–कौटिशिखीयम्, आयोमुखीयम् । ॐअकेकान्तग्रहणे कोपधग्रहणं सौसुकाद्यर्थम्ॐ । सौसुकीयम् । मौसुकीयम् । ऐन्द्रवेणुकीयम् ॥

---

**कुक्**—जन तथा पर शब्दों से छ प्रत्यय के विधान होने पर दोनों शब्दों को कुक् का आगम भी हो जाता है ।

**देवस्य**—देव शब्द को भी छ प्रत्यय के सन्नियोग में कुक् का आगम समझना चाहिए ।

**वेणुकादिभ्यः**—वेणुका आदि शब्दों से छण् प्रत्यय समझना चाहिए ।

**प्राचाम्**—प्राग्देशवाचक कट आदि प्रातिपदिकों से शेषार्थ में छ प्रत्यय होता है ।

**राज्ञः**—राजन् शब्द से छ प्रत्यय तथा उसे ककारान्तादेश भी हो जाता है ।

**वृद्धात्**—वृद्धसंज्ञक देशार्थक अकान्त, इकान्त तथा खकारोपध प्रातिपदिकों से शेषार्थक छ प्रत्यय होता है ।

**अनेकान्त**—अकान्त तथा इकान्त के साथ-साथ ककारोपध शब्द का भी ग्रहण समझना चाहिए जिससे सौसुक आदि शब्दों से भी छ प्रत्यय उपपन्न हो सके ।

---

(१) प्रास्थीयमिति पाठान्तरम् ।

(२) इष्वनीक इति पाठान्तरम् ।

(३) अवस्कन्द इति पाठान्तरम् ।

(४) खाण्डायनी इति पाठान्तरम् ।

(५) कामवेरणि इति पाठान्तरम् ।

## कन्थापलदनगरग्रामह्रदोत्तरपदात् ॥ १४२ ॥

देश इति वर्त्तते, वृद्धादिति च। कन्थाद्युत्तरपदाद्देशवाचिनो वृद्धात्प्रातिपदिकाच्छः प्रत्ययो भवति शैषिकः। वाहीकग्रामादिलक्षणस्य प्रत्ययस्यापवादः। दाक्षिकन्थीयम्। माहिकिकन्थीयम्(१)। दाक्षिपलदीयम्। माहिकिपलदीयम्। दाक्षिनगरीयम्। माहकिनगरीयम्(२)। दाक्षिग्रामीयम्। माहकिग्रामीयम्। दाक्षिह्रदीयम्। माहकिह्रदीयम्॥

## पर्वताच्च ॥ १४३ ॥

पर्वतशब्दाच्छः प्रत्ययो भवति शैषिकः। अणोऽपवादः। पर्वतीयो राजा। पर्वतीयः पुरुषः॥

## विभाषाऽमनुष्ये ॥ १४४ ॥

पर्वतशब्दाच्छः प्रत्ययो भवति वाऽमनुष्ये वाच्ये। पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। पर्वतीयानि फलानि। पार्वतानि फलानि। पर्वतीयमुदकम्। पार्वतमुदकम्। अमनुष्य इति किम्? पर्वतीयो मनुष्यः॥

## कृकणपर्णाद्भारद्वाजे ॥ १४५ ॥

देश इत्येव। भारद्वाजशब्दोऽपि देशवचन एव न गोत्रशब्दः। प्रकृतिविशेषणं चैतन्न प्रत्ययार्थः। कृकणपर्णशब्दाभ्यां भारद्वाजदेशवाचिभ्यां छः प्रत्ययो भवति शैषिकः। कृकणीयम्। पर्णीयम्। भारद्वाज इति किम्? कार्कणम्, पार्णम्॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ

चतुर्थाध्यायस्य द्वितीयः पादः॥ ४।२॥



---

**कन्था**—देशार्थक वृद्धसंज्ञक कन्थोत्तरपदक, पलदोत्तरपदक, नगरोत्तरपदक, ग्रामोत्तरपदक तथा ह्रदोत्तरपदक प्रातिपदिकों से शेषार्थ में छ प्रत्यय होता है।

**पर्वताच्च**—पर्वत शब्द से भी शैषिक छ प्रत्यय होता है।

**विभाषा**—अमनुष्य के वाच्य होने पर पर्वत शब्द से विकल्प से छ प्रत्यय होता है।

**कृकण**—भारद्वाजदेशवाचक कृकण तथा पर्ण शब्दों से शैषिक छ प्रत्यय होता है।

चतुर्थाध्याय का द्वितीय पाद समाप्त हुआ।



---

(१) माहकिकन्थीयम् इति पण्डितपत्रे पाठः।

(२) माहिकिनगरीयम् इति पण्डितपत्रे पाठः।

# अथ चतुर्थाध्यायस्य तृतीयः पादः ॥

## युष्मदस्मदोरन्यतरस्यां खञ्च ॥ १ ॥

देशाधिकारो निवृत्तः। युष्मदस्मदोः खञ् प्रत्ययो भवति शैषिकः, चकाराच्छश्च। अन्यतरस्यांग्रहणाद्यथाप्राप्तमञ्, तदेते त्रयः प्रत्यया भवन्ति। तत्र वैषम्याद्यथासंख्यं न भवति। त्यदादित्वाद्‌वृद्धसंज्ञकयोर्युष्मदस्मदोश्छे प्राप्ते प्रत्येकं प्रत्ययत्रयं विधीयते। यौष्माकीणः। आस्माकीनः। युष्मदीयः। अस्मदीयः। यौष्माकः। आस्माकः॥

## तस्मिन्नणि च युष्माकास्माकौ ॥ २ ॥

तस्मिन्निति साक्षाद्विहितः खञ् निर्दिश्यते न चकारानुकृष्टश्छः। तस्मिन् खञि अणि च युष्मदस्मदोर्यथासंख्यं युष्माक, अस्माक इत्येतावादेशौ भवतः। निमित्तयोरादेशौ प्रति यथासंख्यं कस्मान्न भवति? योगविभागः करिष्यते–'तस्मिन्' इति। खञि युष्मदस्मदोर्युष्माकास्माकौ भवतः। ततः 'अणि च' इति। यौष्माकीणः। आस्माकीनः। यौष्माकः। आस्माकः। तस्मिन्नणि चेति किम्? युष्मदीयः, अस्मदीयः॥

## तवकममकावेकवचने ॥ ३ ॥

एकवचनपरयोर्युष्मदस्मदोस्तवक, ममक इत्येतावादेशौ भवतौ यथासंख्यं तस्मिन् खञि, अणि च परतः। निमित्तयोस्तु यथासंख्यं पूर्ववदेव न भवति। ननु च "न लुमताङ्गस्य" इति प्रत्ययलक्षणप्रतिषेधादेकवचनपरता युष्मदस्मदोर्न संभवति? वचनात् प्रत्ययलक्षणं भविष्यति। अथवा नैवेदं प्रत्ययलक्षणम्, किं तर्ह्यन्वर्थग्रहणम्। एकवचने(१) युष्मदस्मदी एकस्यार्थस्य वाचके तवकममकावादेशौ प्रतिपद्येते इति सूत्रार्थः। तावकीनः। मामकीनः। तावकः। मामकः। तस्मिन्नणि चेत्येव—त्वदीयः, मदीयः॥

## अर्धाद्यत् ॥ ४ ॥

अर्धशब्दाद् यत्प्रत्ययो भवति शैषिकः। अणोऽपवादः। अर्द्ध्यम्। ॐसपूर्वपदाट्ठञ् वक्तव्यःॐ। बालेयार्द्धिकम्। गौतमार्द्धिकम्॥

## परावराधमोत्तमपूर्वाच्च ॥ ५ ॥

पर, अवर, अधम, उत्तम इत्येवम्पूर्वाच्चार्धाद्यत् प्रत्ययो भवति शैषिकः। परार्द्ध्यम्।

---

**युष्मदस्मदोः**—युष्मत् तथा अस्मत् शब्दों से शैषिक खञ्, छ तथा अण् प्रत्यय होते हैं।

**तस्मिन्नणि**—खञ् तथा अण् प्रत्ययों के परे रहते युष्मत् तथा अस्मत् शब्दों को क्रमशः युष्माक तथा अस्माक आदेश हो जाते हैं।

**तवक**—खञ् तथा अण् प्रत्ययों के परे रहते एकवचन में युष्मत् तथा अस्मत् शब्दों को क्रमशः तवक तथा ममम आदेश हो जाते हैं।

**अर्धात्**—अर्ध शब्द से शैषिक यत् प्रत्यय होता है।

**सपूर्व**—पूर्वपदविशिष्ट अर्ध शब्द से ठञ् प्रत्यय समझना चाहिए।

**परावरा**—परपूर्वक, अवरपूर्वक, अधमपूर्वक एवम् उत्तमपूर्वक अर्ध शब्द से शैषिक यत् प्रत्यय होता है।

---

(१) एकवचने इति–अत्र पक्षे एकवचने इति प्रथमाद्विवचनान्तम्, न सप्तम्यन्तम्।

अवरार्द्ध्यम् । अधमार्द्ध्यम् । उत्तमार्द्ध्यम् । पूर्वग्रहणं किम्, परावराधमोत्तमेभ्य इत्येवोच्यते, अर्द्धादिति वर्त्तते, तस्य तत्पूर्वता विज्ञास्यते ? परावरशब्दावदिग्ग्रहणावपि स्तः— परं सुखमवरं सुखमिति । तत्र कृतार्थत्वाद् दिक्छब्दपक्षे परेण ठञ्यतौ स्याताम्, अस्मात्पूर्वग्रहणाद्यत्प्रत्ययो भवति–परार्द्ध्यम्, अवरार्द्ध्यमिति ॥

## दिक्पूर्वपदाट्ठञ्च ॥ ६ ॥

दिक्पूर्वपदादर्धान्तात्प्रातिपदिकात् ठञ् प्रत्ययो भवति चकाराद्यच्च शैषिकः । अणोऽपवादः । पूर्वार्द्ध्यम्, पौर्वार्द्धिकम् । दक्षिणार्द्ध्यम्, दाक्षिणार्द्धिकम् । पदग्रहणं स्वरूपविधिनिवारणार्थम् ॥

## ग्रामजनपदैकदेशादञ्ठञौ ॥ ७ ॥

दिक्पूर्वपदादित्येव । ग्रामैकदेशवाचिनो जनपदैकदेशवाचिनश्च प्रातिपदिकाद्दिक्पूर्वपदादर्द्धान्तादञ्ठञौ प्रत्ययौ भवतः शैषिकौ यतोऽपवादौ । इमे खल्वस्माकं ग्रामस्य जनपदस्य वा पौर्वार्द्धाः, पौर्वार्द्धिकाः । दाक्षिणार्द्धाः, दाक्षिणार्द्धिकाः ॥

## मध्यान्मः ॥ ८ ॥

मध्यशब्दान्मः प्रत्ययो भवति शैषिकः । अणोऽपवादः । मध्यमः । ॐआदेश्चेति वक्तव्यम्ॐ । आदिमः । ॐअवोऽधसोर्लोपश्चॐ । अवमम् । अधमम् ॥

## अ सांप्रतिके ॥ ९ ॥

अकारः प्रत्ययो भवति मध्यशब्दात्सांप्रतिके जातादौ प्रत्ययार्थे । मस्यापवादः । सांप्रतिकं न्याय्यं युक्तमुचितं सममुच्यते । नातिदीर्घं नातिह्रस्वं मध्यं काष्ठम् । नात्युत्कृष्टो नात्यवकृष्टो मध्यो वैयाकरणः । मध्या स्त्री ॥

## द्वीपादनुसमुद्रं यञ् ॥ १० ॥

समुद्रसमीपे यो द्वीपस्तस्माद् यञ् प्रत्ययो भवति शैषिकः । कच्छादिपाठात् अणो मनुष्यवुञश्चापवादः । द्वैप्यम् । द्वैप्यं भवन्तोऽनुचरन्ति चक्रम् । अनुसमुद्रमिति किम् ? द्वैपकम्, द्वैपमन्यत् ॥

## कालाट्ठञ् ॥ ११ ॥

कालविशेषवाचिनः प्रातिपदिकात् ठञ् प्रत्ययो भवति शैषिकः । अणोऽपवादः । वृद्धात्तु छं परत्वाद्बाधते । मासिकः । आर्द्धमासिकः । सांवत्सरिकः । यथाकथंचिद् गुणवृत्त्यापि काले वर्त्तमानात् प्रत्यय इष्यते—कादम्बपुष्पिकम्, व्रैहिपलालिकम् । "तत्र जातः" इति प्रागतः कालाधिकारः ॥

---

**दिक्पूर्व**—दिक्पूर्वपदक अर्धशब्दान्त प्रातिपदिक से शैषिक ठञ् और यत् प्रत्यय होते हैं ।

**ग्राम**—दिक्पूर्वपदक ग्रामैकदेशवाची तथा जनपदैकदेशवाची शब्दों से शेषार्थक अञ् तथा ठञ् प्रत्यय होते हैं ।

**मध्यान्मः**—मध्य शब्द से शेषार्थक म प्रत्यय होता है ।

**आदेश्चेति**—आदि शब्द से भी म प्रत्यय समझना चाहिए ।

**अवो**—अवस् तथा अधस् शब्दों से म प्रत्यय तथा प्रकृति का अन्त्यलोप भी समझना चाहिए ।

**अ साम्प्रतिके**—साम्प्रतिक अर्थ में मध्य शब्द से अ प्रत्यय होता है ।

**द्वीपात्**—समुद्रसमीपस्थद्वीपार्थक द्वीप शब्द से शेषार्थक यञ् प्रत्यय होता है ।

**कालात्**—कालविशेषवाचक प्रातिपदिक से शैषिक ठञ् प्रत्यय होता है ।

## श्राद्धे शरदः ॥ १२ ॥

शरच्छब्दात् ठञ् प्रत्ययो भवति श्राद्धेऽभिधेये शैषिकः। ऋत्वणोऽपवादः। श्राद्ध इति च कर्म गृह्यते, न श्रद्धावान् पुरुषः, अनभिधानात्। शारदिकं श्राद्धम्, शारदमन्यत्।

## विभाषा रोगातपयोः ॥ १३ ॥

शरद इत्येव। रोगे आतपे चाभिधेये शरच्छब्दाट्ठञ् प्रत्ययो वा भवति शैषिकः। ऋत्वणोऽपवादः। शारदिको रोगः। शारदिक आतपः। शारदो रोगः। शारद आतपः। रोगातपयोरिति किम्? शारदं दधि॥

## निशाप्रदोषाभ्यां च ॥ १४ ॥

निशाप्रदोषशब्दाभ्यां विभाषा ठञ् प्रत्ययो भवति शैषिकः। "कालाट्ठञ्" इति नित्ये ठञि प्राप्ते विकल्प उच्यते। नैशम्, नैशिकम्। प्रादोषम्, प्रादोषिकम्॥

## श्वसस्तुट् च ॥ १५ ॥

विभाषेत्येव। श्वःशब्दाद्विभाषा ठञ् प्रत्ययो भवति, तस्य च तुडागमो भवति। त्यप्प्रत्ययोऽप्यतो विहितः—"ऐषमोह्यःश्वसोन्यतरस्याम्" इति। एताभ्यां मुक्ते ट्युट्युलावपि भवतः—शौवस्तिकः, श्वस्त्यः, श्वस्तनः॥

## संधिवेलाद्यृतुनक्षत्रेभ्योऽण् ॥ १६ ॥

कालादित्येव। संधिवेलादिभ्य ऋतुभ्यो नक्षत्रेभ्यश्च कालवृत्तिभ्योऽण् प्रत्ययो भवति शैषिकः। ठञोऽपवादः। अण्ग्रहणं वृद्धाच्छस्य बाधनार्थम्। संधिवेलादिभ्यस्तावत्-सांधिवेलम्, सांध्यम्। ऋतुभ्यः-ग्रैष्मम्, शिशिरम्। नक्षत्रेभ्यः-(सौवातम्) तैषम्, पौषम्। संधिवेला। संध्या। अमावास्या। त्रयोदशी। चतुर्दशी। पञ्चदशी। पौर्णमासी। प्रतिपत्। संवत्सरात् फलपर्वणोः। (१) सांवत्सरं फलम्। सांवत्सरं पर्व॥

## प्रावृष एण्यः ॥ १७ ॥

प्रावृष्शब्दादेण्यः प्रत्ययो भवति शैषिकः। ऋत्वणोऽपवादः। प्रावृषेण्यो बलाहकः॥

## वर्षाभ्यष्ठक् ॥ १८ ॥

वर्षाशब्दाट्ठक् प्रत्ययो भवति शैषिकः। ऋत्वणोऽपवादः। वार्षिकं वासः। वार्षिकमनुलेपनम्॥

---

**श्राद्धे**—श्राद्धार्थ में शरत् शब्द से ठञ् प्रत्यय होता है।

**विभाषा**—रोग तथा आतप के अभिधेय होने पर शरत् शब्द से विकल्प से ठञ् प्रत्यय होता है।

**निशा**—निशा तथा प्रदोष शब्दों से शैषिक ठञ् प्रत्यय विकल्प से होता है।

**श्वसः**—श्वस् शब्द से विकल्प से शैषिक ठञ् प्रत्यय तथा उसे तुट् का आगम भी हो जाता है।

**सन्धि**—कालविशेषवाचक सन्धिवेला आदि, ऋतुवाचक तथा नक्षत्रवाचक प्रातिपदिकों से शैषिक अण् प्रत्यय होता है।

**प्रावृषः**—प्रावृष् शब्द से शैषिक एण्य प्रत्यय होता है।

**वर्षाभ्यः**—वर्षा शब्द से शैषिक ठक् प्रत्यय होता है।

---

(१) गणसूत्रोदाहरणद्वयमपि न्यासपदमंजरीसम्वादात् मूले प्रक्षिप्तं भाति।

## छन्दसि ठञ् ॥ १९ ॥

वर्षाशब्दाच्छन्दसि विषये ठञ् प्रत्ययो भवति शैषिकः। ठकोऽपवादः। स्वरे भेदः। नभश्च नभस्यश्च वार्षिकावृतू ॥

## वसन्ताच्च ॥ २० ॥

छन्दसीत्येव। वसन्तशब्दाच्छन्दसि विषये ठञ् प्रत्ययो भवति शैषिकः। ऋत्वणोऽपवादः। मधुश्च माधवश्च वासन्तिकावृतू ॥

## हेमन्ताच्च ॥ २१ ॥

छन्दसीत्येव। हेमन्तशब्दाच्छन्दसि विषये ठञ् प्रत्ययो भवति शैषिकः। ऋत्वणोऽपवादः। सहश्च सहस्यश्च हैमन्तिकावृतू। योगविभाग उत्तरार्थः ॥

## सर्वत्राण् च तलोपश्च ॥ २२ ॥

हेमन्तशब्दादण् प्रत्ययो भवति तत्सन्नियोगेन चास्य तकारलोपः। हैमनं वासः। हैमनमुपलेपनम्। सर्वत्रग्रहणं छन्दोऽधिकारनिवृत्त्यर्थम्—छन्दसि भाषायां च सर्वत्रैतद्भवति। ननु च छन्दसीति नानुवर्तिष्यते? सैवाननुवृत्तिः शब्देनाख्यायते प्रयत्नाधिक्येन पूर्वसूत्रेऽपि सम्बन्धार्थम्—हैमन्तिकमिति हि भाषायामपि ठञं स्मरन्ति। अथाण्चेति चकारः किमर्थः? अण्, यथाप्राप्तं च ऋत्वणिति। कः पुनरनयोरणोर्विशेषः? ऋत्वणि हि तकारलोपो नास्ति—हैमन्ती पङ्क्तिरिति। तदेवं त्रीणि रूपाणि भवन्ति—हैमन्तिकम्, हैमन्तम्, हैमनमिति ॥

## सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ॥ २३ ॥

कालादित्येव। सायंचिरंप्राह्णेप्रगे इत्येतेभ्योऽव्ययेभ्यश्च ट्युट्युलौ प्रत्ययौ भवतः, तयोश्चादिष्टयोस्तुडागमो भवति। सायन्तनम्। चिरन्तनम्। प्राह्णेतनम्। प्रगेतनम्। अव्ययेभ्यः—दोषातनम्, दिवातनम्। सायमिति मकारान्तं पदमव्ययम्, ततोऽव्ययत्वादेव सिद्धः प्रत्ययः। यस्तु स्यतेरन्तकर्मणो घञि सायशब्दस्तस्येदं मकारान्तत्वं प्रत्ययसन्नियोगेन निपात्यते। दिवसावसानं सायः। चिरशब्दस्यापि मकारान्तत्वं निपात्यते, प्राह्णे प्रगे इत्येकारान्तत्वम्। ॐचिरपरुत्परारिभ्यस्त्नो वक्तव्यःॐ। चिरत्नम्। परुत्नम्। परारित्नम्। ॐप्रगस्य छन्दसि गलोपश्चॐ। प्रत्नम्। ॐअग्रपश्चाड्डिमच्ॐ। अग्रिमम्। पश्चिमम्। ॐअन्ताच्चेति वक्तव्यम्ॐ। अन्तिमम् ॥

---

**छन्दसि**—वेद में वर्षा शब्द से ठञ् प्रत्यय होता है।

**वसन्ताच्च**—वसन्त शब्द से भी वेद में ठञ् प्रत्यय होता है।

**हेमन्ताच्च**—हेमन्त शब्द से भी वेद में ठञ् प्रत्यय होता है।

**सर्वत्राण्**—हेमन्त शब्द से लोक तथा वेद में अण् प्रत्यय तथा प्रकृति के तकार का लोप हो जाता है।

**सायम्**—सायम्, चिरम्, प्राह्णे तथा प्रगे—इन अव्ययों से ट्यु तथा ट्युल् प्रत्यय होते हैं तथा प्रत्ययों को तुट् का आगम भी हो जाता है।

**चिर**—चिर, परुत् तथा परारि शब्दों से त्नु प्रत्यय समझना चाहिए।

**प्रगस्य**—प्रग शब्द से वेद में त्न प्रत्यय तथा गकार का लोप भी समझना चाहिए।

**अग्र**—अग्र तथा पश्चात् शब्दों से डिमच् प्रत्यय समझना चाहिए।

**अन्ताच्चेति**—अन्त शब्द से भी डिमच् प्रत्यय समझना चाहिए।

## विभाषा पूर्वाह्णापराह्णाभ्याम् ॥ २४ ॥

पूर्वाह्णापराह्णशब्दाभ्यां विभाषा ट्युट्युलौ प्रत्ययौ भवतस्तुट् च तयोरागमः। "कालाट्ठञ्" इति ठञि प्राप्ते वचनम्, पक्षे सोऽपि भवति। पूर्वाह्णेतनम्। अपराह्णेतनम्। पौर्वाह्णिकम्। आपराह्णिकम्। "घकालतनेषु कालनाम्नः" इति सप्तम्या अलुक्। यदा तु(१)न सप्तमी समर्थविभक्तिः पूर्वाह्णः सोढोऽस्येति तदा पूर्वाह्णतन इति भवितव्यम् ॥

## तत्र जातः ॥ २५ ॥

अणादयो घादयश्च प्रत्ययाः प्रकृताः, तेषामतः प्रभृति अर्थाः समर्थविभक्तयश्च निर्दिश्यन्ते। तत्रेति सप्तमीसमर्थाज्जात इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। स्रुघ्ने जातः स्रौघ्नः। माथुरः। औत्सः। औदपानः। राष्ट्रियः। अवारपारीणः। शाकलिकः(२) ग्राम्यः। ग्रामीणः। कात्त्रेयकः। औम्भेयकः ॥

## प्रावृषष्ठप् ॥ २६ ॥

प्रावृष्शब्दात् सप्तमीसमर्थाज्जात इत्येतस्मिन्नर्थे ठप् प्रत्ययो भवति। एण्यस्यापवादः। पकारः स्वरार्थः। प्रावृषि जातः प्रावृषिकः ॥

## संज्ञायां शरदो वुञ् ॥ २७ ॥

शरच्छब्दात्सप्तमीसमर्थाज्जात इत्येतस्मिन्नर्थे वुञ् प्रत्ययो भवति समुदायेन चेत्संज्ञा गम्यते। ऋत्वणोऽपवादः(३)। शारदका दर्भाः, शारदका मुद्गाः—दर्भविशेषस्य मुद्गविशेषस्य चेयं संज्ञा। संज्ञायामिति किम्? शारदं सस्यम्। संज्ञाधिकारं केचित् "कृतलब्धक्रीतकुशलाः" इति यावदनुवर्त्तयन्ति ॥

## पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्करादुवुन् ॥ २८ ॥

पूर्वाह्णादिभ्यः शब्देभ्यो वुन् प्रत्ययो भवति तत्र जात इत्येतस्मिन् विषये संज्ञायां गम्यमानायाम्। पूर्वाह्णकः। अपराह्णकः। "विभाषा पूर्वाह्णापराह्णाभ्याम्" इत्यस्यापवादः। आर्द्रकः। मूलकः। नक्षत्राणोऽपवादः। प्रदोषकः। "निशाप्रदोषाभ्यां च" इत्यस्यापवादः। अवस्करकः। औत्सर्गिकस्याणोऽपवादः। असंज्ञायां तु यथाप्राप्तं ठञादय एव भवन्ति ॥

## पथः पन्थ च ॥ २९ ॥

पथिशब्दाद् वुन् प्रत्ययो भवति तत्र जात इत्येतस्मिन् विषये। प्रत्ययसन्नियोगेन च

---

**विभाषा**—पूर्वाह्ण तथा अपराह्ण शब्दों से विकल्प से ट्यु तथा ट्युल् प्रत्यय होते हैं तथा प्रत्ययों को तुट् का आगम भी हो जाता है।

**तत्र**—सप्तम्यन्त से जातार्थ में यथाविहित प्रत्यय होते हैं।

**प्रावृषः**—सप्तम्यन्त प्रावृष् शब्द से जातार्थक ठप् प्रत्यय होता है।

**संज्ञायाम्**—सप्तम्यन्त शरद् शब्द से संज्ञाविषय में जात अर्थ में वुञ् प्रत्यय होता है।

**पूर्वाह्णापराह्ण**—संज्ञा के गम्यमान होने पर सप्तम्यन्त पूर्वाह्ण, अपराह्ण, आर्द्रा, मूल, प्रदोष तथा अवस्कर शब्दों से जातार्थक वुन् प्रत्यय होता है।

**पथः**—सप्तम्यन्त पथिन् शब्द से जात अर्थ में वुन् प्रत्यय होता है।

---

(१) यदा न सप्तम्यन्तात् प्रत्ययः इति न्यासे पाठान्तरम्।

(२) माकलिक इत्यधिकं न्यासे।

(३) सर्वत्र—…भवति। अणोपवादः समुदायेन……इत्येवं पाठ उपलभ्यमानोऽपि असाम्प्रतं वादरमाभिः परिवर्त्तितः। (श्रीना०)

पथः 'पन्थ' इत्ययमादेशो भवति । अणोऽपवादः(१) पथि जातः पन्थकः ॥

## अमावास्याया वा ॥ ३० ॥

अमावास्याशब्दाद् वुन् प्रत्ययो भवति वा तत्र जात इत्येतस्मिन् विषये । संधिवेलादिषु पाठादणोऽपवादः, आमावास्यः । एकदेशविकृतस्यानन्यत्वादमावस्यशब्दादपि भवति-अमावस्यकः, आमावस्यः ॥

## अ च ॥ ३१ ॥

अमावास्याशब्दादकारः प्रत्ययो भवति तत्र जात इत्येतस्मिन् विषये । पूर्वेण वुञणोः प्राप्तयोरयं तृतीयः प्रत्ययो विधीयते । अमावास्यः । अमावास्यकः । आमावास्यः । अमावस्यः । अमावस्यकः । आमावस्यः ॥

## सिन्ध्वपकराभ्यां कन् ॥ ३२ ॥

सिन्धुशब्दादपकरशब्दाच्च कन् प्रत्ययो भवति तत्र जात इत्येतस्मिन् विषये । सिन्धुशब्दः कच्छादिः, ततोऽणि मनुष्यवुञि च प्राप्ते विधानम् , अपकरशब्दादप्यौत्सर्गिकेऽणि प्राप्ते । सिन्धुकः । अपकरकः ॥

## अणञौ च ॥ ३३ ॥

सिन्ध्वपकरशब्दाभ्यां यथासंख्यमणञौ प्रत्ययौ भवतस्तत्र जात इत्येतस्मिन् विषये । पूर्वेण कनि प्राप्ते वचनम् । सैन्धवः । आपकरः ॥

## श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक् ॥ ३४ ॥

श्रविष्ठादिभ्यः शब्देभ्यो नक्षत्रेभ्य आगतस्य जातार्थे लुग्भवति । तस्मिंस्त्रीप्रत्ययस्यापि "लुक्तद्धितलुकि" इति लुग् भवति । श्रविष्ठासु जातः श्रविष्ठः । फल्गुनः । अनुराधः । स्वातिः । तिष्यः । पुनर्वसुः । हस्तः । विशाखः । अषाढः । बहुलः । ❀लुक्प्रकरणे चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम्❀ । चित्रायां जाता चित्रा । रेवती । रोहिणी । स्त्रीप्रत्ययस्य लुकि कृते गौरादित्वान् ङीष् । ❀फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ❀ । फल्गुनी । आषाढा । ❀श्रविष्ठाषाढाभ्यां छणपि वक्तव्यः❀ । श्राविष्ठीयः । आषाढीयः ॥

---

**अमावास्यायाः**—सप्तम्यन्त अमावास्या शब्द से जात अर्थ में विकल्प से वुन् प्रत्यय होता है ।

**अ च**—अमावास्या शब्द से जात अर्थ में 'अ' प्रत्यय भी होता है ।

**सिन्ध्वप**—सिन्धु तथा अपकर शब्दों से जात अर्थ में कन् प्रत्यय होता है ।

**अणञौ**—सिन्धु शब्द तथा अपकर शब्द से जात अर्थ में क्रमशः अण् तथा अञ् प्रत्यय होता है ।

**श्रविष्ठा**—नक्षत्रार्थक श्रविष्ठा, फल्गुनी, अनुराधा, स्वाति, तिष्य, पुनर्वसु, हस्त, विशाख, अषाढ तथा बहुल शब्दों से विहित जातार्थक प्रत्यय का लुक् हो जाता है ।

**लुक्**—चित्रा, रेवती तथा रोहिणी शब्दों से स्त्रीलिङ्ग में ही जातार्थक प्रत्यय का लुक् समझना चाहिए ।

**फल्गुन्यषाढाभ्याम्**—फल्गुनी तथा अषाढ़ शब्दों से ट तथा अन् प्रत्यय समझने चाहिए ।

**श्रविष्ठा**—श्रविष्ठा तथा अषाढ शब्दों से छण् प्रत्यय भी समझना चाहिए ।

---

( १ ) सर्वत्र—……विषये । अणोपवादः प्रत्यय…इति दृश्यमानोऽपि पाठो योग्यतयाऽस्माभिः स्थाने स्थापितः । ( श्रीना० )

## स्थानान्तगोशालखरशालाच्च ॥ ३५ ॥

स्थानान्तात् प्रातिपदिकाद् गोशालशब्दात् खरशालशब्दाज्जातार्थे प्रत्ययस्य लुग् भवति। गोस्थाने जातः गोस्थानः। अश्वस्थानः। गोशालः। खरशालः॥

## वत्सशालाभिजिदश्वयुक्छतभिषजो वा ॥ ३६ ॥

वत्सशालादिभ्यः परस्य जातार्थे प्रत्ययस्य लुग् वा भवति। वत्साशालायां जातः वत्सशालः, वात्सशालः। अभिजित्, आभिजितः। अश्वयुक्, आश्वयुजः। शतभिषक्, शातभिषजः। बहुलग्रहणस्यायं प्रपञ्चः॥

## नक्षत्रेभ्यो बहुलम् ॥ ३७ ॥

नक्षत्रेभ्य उत्तरस्य जातार्थे प्रत्ययस्य बहुलं लुग्भवति। रोहिणः, रौहिणः। मृगशिराः, मार्गशीर्षः॥

## कृतलब्धक्रीतकुशलाः ॥ ३८ ॥

तत्रेत्येव। सप्तमीसमर्थात्कृतादिष्वर्थेषु यथाविहितं प्रत्ययो भवति। स्रुघ्ने कृतो वा लब्धो वा क्रीता वा कुशलो वा स्रौघ्नः। माथुरः। राष्ट्रियः। ननु च यत् यत्र कृतं जातमपि तत्तत्र भवति, यत्र यच्च क्रीतं लब्धमपि तत्तत्रैव भवति, किमर्थं भेदेनोपादानं क्रियते? शब्दार्थस्य भिन्नत्वाद्वस्तुमात्रेण क्रीतं लब्धं भवति, शब्दार्थस्तु भिद्यत एव॥

## प्रायभवः ॥ ३९ ॥

तत्रेत्येव। सप्तमीसमर्थान्ङ्याप्प्रातिपदिकात् प्रायभव इत्येतस्मिन् विषये यथाविहितं प्रत्ययो भवति। प्रायशब्दः साकल्यस्य किञ्चिन्न्यूनतामाह। स्रुघ्ने प्रायेण बाहुल्येन भवति स्रौघ्नः। माथुरः। राष्ट्रियः। प्रायग्रहणमनर्थकम्, तत्रभवेन कृतत्वात्(१)। अनित्यभवः प्रायभव इति चेत्? तुल्यकसंशयेन तुल्यम्॥

## उपजानूपकर्णोपनीवेष्ठक् ॥ ४० ॥

उपजान्वादिभ्यः शब्देभ्यः सप्तमीसमर्थेभ्यः प्रायभव इत्येतस्मिन् विषये ठक् प्रत्ययो भवति। अणोऽपवादः। औपजानुकः। औपकर्णिकः। औपनीविकः।

## संभूते ॥ ४१ ॥

तत्रेत्येव। सप्तमीसमर्थात् ङ्याप्प्रातिपदिकात् संभूत इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो

---

स्थानान्त—स्थानशब्दान्त, गोशाल तथा खरशाल शब्दों से भी जात अर्थ में विहित प्रत्यय का लुक् हो जाता है।

वत्स—वत्सशाल आदि शब्दों से विहित जातार्थक प्रत्ययों का विकल्प से लुक् होता है।

नक्षत्रेभ्यो—नक्षत्रवाचक शब्दों से विहित जातार्थक प्रत्यय का बहुल करके लुक् होता है।

कृत—सप्तम्यन्त प्रातिपदिक से कृत, लब्ध, क्रीत तथा कुशल अर्थों में यथाविहित प्रत्यय होते हैं।

प्रायभवः—सप्तमीसमर्थ ङ्यन्त, आबन्त तथा प्रातिपदिक से प्रायभव अर्थ में यथाविहित प्रत्यय होते हैं।

उपजानूप—सप्तम्यन्त उपजानु, उपकर्ण तथा उपनीवि शब्दों से प्रायभव अर्थ में ठक् प्रत्यय होता है।

सम्भूते—सप्तमीसमर्थ ङ्यन्त, आबन्त तथा प्रातिपदिक से सम्भूत अर्थ में यथाविहित प्रत्यय होते हैं।

---

(१) कृतार्थत्वादिति न्यासे पाठः।

भवति। अवक्लृप्तिः प्रमाणानतिरेकश्च सम्भवत्यर्थ इह गृह्यते, नोत्पत्तिः सत्ता वा, जात-भवाभ्यां गतत्वात्। स्रुघ्ने संभवति स्रौघ्नः। माथुरः। राष्ट्रियः॥

## कोशाड्ढञ् ॥ ४२ ॥

कोशशब्दात् ढञ् प्रत्ययो भवति तत्र संभूत इत्यस्मिन् विषये। अणोऽपवादः। कोशे संभूतं कौशेयं वस्त्रम्। रूढिरेषा। तेन क्रिमौ न भवति, खड्गकोशाच्च(१)॥

## कालात् साधुपुष्प्यत्पच्यमानेषु ॥ ४३ ॥

तत्रेत्येव। कालविशेषवाचिभ्यः सप्तमीसमर्थेभ्यः साध्वादिष्वर्थेषु यथाविहितं प्रत्ययो भवति। हेमन्ते साधुः हैमन्तः प्राकारः। शैशिरमनुलेपनम्। वसन्ते पुष्प्यन्ति वासन्त्यः कुन्दलताः। ग्रैष्म्यः पाटलाः। शरदि पच्यन्ते शारदाः शालयः। ग्रैष्मा यवाः॥

## उप्ते च ॥ ४४ ॥

तत्रेति वर्तते, कालादिति च। सप्तमीसमर्थात् कालवाचिनः प्रातिपदिकादुप्ते यथा-विहितं प्रत्ययो भवति। हेमन्ते उप्यन्ते हैमन्ता यवाः। ग्रैष्मा व्रीहयः। योगविभाग उत्तरार्थः॥

## आश्वयुज्या वुञ् ॥ ४५ ॥

आश्वयुजीशब्दाद् वुञ् प्रत्ययो भवति उप्तेऽर्थे। ठञोऽपवादः। आश्वयुज्यामुप्ता आश्वयुजका माषाः। अश्विनीभ्यां(२) युक्ता पौर्णमासी आश्वयुजी। अश्विनीपर्यायः(३) अश्वयुक्शब्दः॥

## ग्रीष्मवसन्तादन्यतरस्याम् ॥ ४६ ॥

ग्रीष्मवसन्तशब्दाभ्यामन्यतरस्यां वुञ् प्रत्ययो भवति उप्तेऽर्थे। ऋत्वणोऽपवादः। ग्रैष्मकम्। ग्रैष्मं सस्यम्। वासन्तकम्। वासन्तम्॥

## देयमृणे ॥ ४७ ॥

तत्रेति वर्तते, कालादिति च। सप्तमीसमर्थात्कालवाचिनः प्रातिपदिकाद्देयमित्येत-स्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यद्देयमृणं चेत्तद्भवति। मासे देयमृणं मासिकम्। आर्द्धमासिकम्। सांवत्सरिकम्। ऋण इति किम्? मासे देया भिक्षा॥

## कलाप्यश्वत्थयवबुसाद् वुन् ॥ ४८ ॥

कालादित्येव। कलापि, अश्वत्थ, यवबुस इत्येतेभ्यः कालवाचिभ्यः सप्तमीसमर्थेभ्यो

---

**कोशात्**—सप्तम्यन्त कोश शब्द से सम्भूत अर्थ में ढञ् प्रत्यय होता है।

**कालात्**—सप्तमीसमर्थ कालविशेषवाचक शब्दों से साधु, पुष्प्यत् तथा पच्यमान अर्थों में यथाविहित प्रत्यय होते हैं।

**उप्ते**—सप्तमीसमर्थ कालविशेषवाचक प्रातिपदिकों से उप्त अर्थ में यथाविहित प्रत्यय होते हैं।

**आश्वयुज्याः**—आश्वयुजी शब्द से उप्त अर्थ में वुञ् प्रत्यय होता है।

**ग्रीष्म**—ग्रीष्म तथा वसन्त शब्दों से उप्त-अर्थ में विकल्प से वुञ् प्रत्यय होता है।

**देयम्**—सप्तमीसमर्थ कालवाचक शब्दों से देय ऋण अर्थ में यथाविहित प्रत्यय होते हैं।

**कलाप्यश्वत्थ**—कलापि, अश्वत्थ तथा यवबुस इन कालवाचक सप्तम्यन्त शब्दों से देय ऋण अर्थ में वुन् प्रत्यय होता है।

---

(१) न भवतीत्यर्थः सम्बद्धः। (श्रीना०)

(२) अश्वयुग्भ्यामिति पण्डितपत्रमुद्रिते पाठः।

(३) अश्वनीयेति पाठान्तरम्।

देयमृणमित्येतस्मिन्नर्थे वुन् प्रत्ययो भवति । कलाप्यादयः शब्दाः साहचर्यात् काले वर्त्तन्ते । यस्मिन् काले मयूराः कलापिनो भवन्ति स कलापी । यस्मिन्नश्वत्थाः फलन्ति सोऽश्वत्थः । यस्मिन् यवबुसं संपद्यते स यवबुसशब्देनोच्यते । कलापिनि काले देयमृणं कलापकम् । अश्वत्थकम् । यवबुसकम् ॥

## ग्रीष्मावरसमाद् वुञ् ॥ ४९ ॥

ग्रीष्मावरसमशब्दाभ्यां वुञ् प्रत्ययो भवति देयमृणमित्येतस्मिन्नर्थे । अणूठञोरपवादः । ग्रीष्मे देयमृणं ग्रैष्मकम् । आवरसमकम् । प्रत्ययान्तरकरणं वृद्ध्यर्थम् । समाशब्दो वर्षपर्यायः ॥

## संवत्सराग्रहायणीभ्यां ठञ्च ॥ ५० ॥

संवत्सराग्रहायणीशब्दाभ्यां ठञ् प्रत्ययो भवति, चकाराद् वुञ्च देयमृणमित्येतस्मिन्नर्थे । संवत्सरे देयमृणं सांवत्सरिकम् । सांवत्सरकम् । आग्रहायणिकम् । आग्रहायणकम् । वेति वक्तव्ये ठञ्ग्रहणम् संधिवेलादिषु संवत्सरात्फलपर्वणोरिति पठ्यते, तत्र फले ऋणत्वेन विवक्षितेऽणं बाधित्वा ठञेव यथा स्यादिति ॥

## व्याहरति मृगः ॥ ५१ ॥

तत्रेति, कालादिति च वर्तते । कालवाचिनः सप्तमीसमर्थात्प्रादिकाद् व्याहरति मृग इत्येतस्मिन् विषये यथाविहितं प्रत्ययो भवति । निशायां व्याहरति मृगः नैशः, नैशिकः । प्रादोषः, प्रादोषिकः । मृग इति किम् ? निशायां व्याहरत्युलूकः ॥

## तदस्य सोढम् ॥ ५२ ॥

कालादित्येव । तदिति प्रथमासमर्थात् कालवाचिनः प्रातिपदिकादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्प्रथमासमर्थं सोढञ्चेत्तद्भवति । सोढं जितमभ्यस्तमित्यर्थः । निशासहचरितमध्ययनं निशा, तत्सोढमस्य छात्रस्य नैशः, नैशिकः । प्रादोषः, प्रादोषिकः ॥

## तत्र भवः ॥ ५३ ॥

कालादिति निवृत्तम् । तत्रेति सप्तमीसमर्थाद् ङ्याप्प्रातिपदिकाद्भव इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । सत्ता भवत्यर्थो गृह्यते न जन्म, "तत्र जातः" इति गतार्थत्वात् । स्रुघ्ने भवः स्रौघ्नः । माथुरः । राष्ट्रियः । पुनस्तत्रग्रहणं "तदस्य" इति निवृत्त्यर्थम् ॥

---

**ग्रीष्मावर**—सप्तम्यन्त ग्रीष्म तथा अवरसम शब्दों से देय ऋण अर्थ में वुञ् प्रत्यय होता है ।

**सम्वत्सरा**—सप्तम्यन्त सम्वत्सर तथा आग्रहायणी शब्दों से देय ऋण अर्थ में ठञ् तथा वुञ् प्रत्यय होते हैं ।

**व्याहरति**—सप्तमीसमर्थ कालवाचक प्रातिपदिक से मृगव्याहरण अर्थ में यथाविहित प्रत्यय होते हैं ।

**तदस्य**—प्रथमासमर्थ कालवाचक शब्दों से 'इसका सह्य है' इस अर्थ में यथाविहित प्रत्यय होता है ।

**तत्र**—सप्तमीसमर्थ ङ्यन्त, आबन्त तथा प्रातिपदिक से भव अर्थ में यथाविहित प्रत्यय होते हैं ।

## दिगादिभ्यो यत् ॥ ५४ ॥

दिश् इत्येवमादिभ्यः प्रातिपदिकेभ्यो यत् प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये। अणश्छस्य चापवादः। दिशि भवं दिश्यम्। वर्ग्यम्। मुखजघनशब्दयोरशरीरावयवार्थः पाठः—सेनामुख्यम्, सेनाजघन्यमिति(१)। दिश्। वर्ग। पूग। गण। पक्ष। धाय्या। मित्र। मेधा। अन्तर। पथिन्। रहस्। अलीक। उखा। साक्षिन्। आदि। अन्त। मुख। जघन। मेघ। यूथ। ※उदकात्संज्ञायाम्※।(२) न्याय। वंश। अनुवंश। विष। काल। अप्। आकाश। दिगादिः॥

## शरीरावयवाच्च ॥ ५५ ॥

शरीरं प्राणिकायः। शरीरावयववाचिनः प्रातिपदिकाद् यत्प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये। अणोऽपवादः। दन्तेषु भवं दन्त्यम्। कण्ठ्यम्। ओष्ठ्यम्॥

## दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् ॥ ५६ ॥

इत्यादिभ्यः प्रातिपदिकेभ्यो ढञ् प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये। दृतौ भवं दार्तेयम्। कौक्षेयम्। कालशेयम्। वास्तेयम्। आस्तेयम्। आहेयमजरं विषम्। अस्तिशब्दः प्रातिपदिकं न तिङन्तः॥

## ग्रीवाभ्योऽण् च ॥ ५७ ॥

ग्रीवाशब्दादण् प्रत्ययो भवति चकाराद् ढञ् तत्र भव इत्येतस्मिन् विषये। शरीरावयवाद्यतोऽपवादः। ग्रीवासु भवं ग्रैवम्। ग्रैवेयम्। ग्रीवाशब्दो धमनीवचनः, तासां बहुत्वाद् बहुवचनं कृतम्॥

## गम्भीराञ्ञ्यः ॥ ५८ ॥

गम्भीरशब्दात् ञ्यः प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये। अणोऽपवादः। गम्भीरे भवं गाम्भीर्यम्। ※बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यम्※। बाह्यम्। दैव्यम्। पाञ्चजन्यम्(३)॥

---

**दिगादिभ्यः**—दिश् आदि शब्दों से भव अर्थ में यत् प्रत्यय होता है।

**उदकात्**—उदक शब्द से संज्ञाविषय में यत् प्रत्यय का विधान समझना चाहिए।

**शरीरा**—शरीरावयववाचक शब्दों से भी भवार्थ में यत् प्रत्यय होता है।

**दृतिकुक्षि**—दृति आदि प्रातिपदिकों से भय अर्थ में ढञ् प्रत्यय होता है।

**ग्रीवाभ्यः**—भव अर्थ में ग्रीवाशब्द से अण् तथा ढञ् प्रत्यय होते हैं।

**गम्भीरात्**—गम्भीर शब्द से भव अर्थ में ञ्य प्रत्यय होता है।

**बहिर्देव**—बहिस्, देव तथा पञ्चजन शब्दों से भी भव अर्थ में ञ्य प्रत्यय का विधान समझना चाहिए।

---

(१) मुखजघनाभ्यां सेनायाः अग्रभागपश्चाद्भागावुच्येते इत्यधिकं क्वचित्।

(२) अत्रायं पाठः क्वचित्—उदक्या। रजस्वला। संज्ञायामिति किम्? औदको मत्स्य इति। तदेतन्न्यासे दृष्टमिति मौलिकत्वं व्याहतमिव प्रतीयते। (श्रीना०)

(३) चतुर्मासाद्यज्ञे ञ्यो वक्तव्यः, चातुर्मास्यानि व्रतानि, चतुर्मास्यो यज्ञः। चतुर्मासोऽन्यत्र इत्यधिकं बहुषु पुस्तकेषु।

## अव्ययीभावाच्च ॥ ५९ ॥

अव्ययीभावसंज्ञकात् प्रातिपदिकाच्च ञ्यः प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये । अणोऽपवादः । न च सर्वस्मादव्ययीभावाद्भवति, किं तर्हि परिमुखादीनां च गणपाठस्यैतदेव प्रयोजनम्—तेषां विशेषणमव्ययीभावग्रहणम् । परिमुखं भवं पारिमुख्यम् । पारिहनव्यम् । परिमुखादेरन्यत्र न भवति-औपकूलम् । परिमुख । परिहनु । पर्योष्ठ । पर्युल । औपमूल । खल । परिसीर । अनुसीर । उपसीर । उपस्थल । उपकलाप । अनुपथ । अनुखड्ग । अनुतिल । अनुशीत । अनुमाष । अनुयव । अनुयूप । अनुवंश(१) ॥

## अन्तःपूर्वपदाट् ठञ् ॥ ६० ॥

अव्ययीभावादित्येव । अन्तः शब्दो विभक्त्यर्थे समस्यते, तत्पूर्वपदादव्ययीभावाट्ठञ् प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये । अणोऽपवादः । आन्तर्वेश्मिकम् । आन्तर्गेहिकम्(२) । ॐसमानशब्दाट्ठञ् वक्तव्यःॐ । समाने भवं सामानिकम् । ॐतदादेश्चॐ । सामानग्रामिकम् । सामानदेशिकम् । ॐअध्यात्मादिभ्यश्चॐ । आध्यात्मिकम् । आधिदैविकम् । आधिभौतिकम्(३) । अध्यात्मादिराकृतिगणः । ॐऊर्ध्वंदमाच्च ठञ् वक्तव्यःॐ । और्ध्वंदमिकः । ऊर्ध्वशब्देन समानार्थ ऊर्ध्वन्दमशब्दः । ॐऊर्ध्वदेहाच्चॐ । और्ध्वदेहिकम् । ॐलोकोत्तरपदाच्चॐ । ऐहलौकिकम् । पारलौकिकम् । ॐमुखपार्श्वशब्दाभ्यां तसन्ताभ्यामीयः प्रत्ययो वक्तव्यःॐ । मुखतीयम् । पार्श्वतीयम् । ॐजनपरयोः कुक्चॐ । जनकीयम् । परकीयम् ॐमध्यशब्दादीयःॐ । मध्यीयः । ॐमणमीयौ च प्रत्ययौ वक्तव्यौॐ । माध्यमम् । मद्ध्यमीयम् । ॐमध्यो मध्यं दिनण् चास्मात्ॐ । मद्ध्ये भवं माद्ध्यंदिनम् । ॐस्थाम्नो लुग्वक्तव्यःॐ । अश्वत्थामा । ॐअजिनान्ताच्चॐ । वृकाजिनः । सिंहाजिनः ॥

---

अव्ययी—अव्ययीभावसंज्ञक शब्दों से भव अर्थ में ञ्य प्रत्यय होता है।

अन्तः—अन्तःपूर्वपदक अव्ययीभाव से भवार्थ में ठञ् प्रत्यय होता है।

समान—समान शब्द से भी भवार्थ में ठञ् प्रत्यय समझना चाहिए।

तदादेश्च—समानपूर्वपदक शब्दों से भी भवार्थक ठञ् प्रत्यय समझना चाहिए।

अध्यात्मा—अध्यात्म आदि शब्दों से भी भवार्थक ठञ् प्रत्यय अवगन्तव्य है।

ऊर्ध्वंदमात्—ऊर्ध्वंदम शब्द से भी भवार्थक ठञ् प्रत्यय अवगन्तव्य है।

ऊर्ध्व—ऊर्ध्वदेह शब्द से भी भवार्थक ठञ् प्रत्यय समझना चाहिए।

लोकोत्तर—लोकशब्दोत्तरपदक शब्द से भी भवार्थक ठञ् प्रत्यय समझना चाहिए।

मुख—तसन्त मुख तथा पार्श्व शब्दों से ईय प्रत्यय समझना चाहिए।

जनपरयोः—जन तथा पर शब्दों से भवार्थ में ईय प्रत्यय तथा उसे कुक् आ आगम भी अवगन्तव्य है।

मध्य—मध्य शब्द से भवार्थ में ईय प्रत्यय समझना चाहिए।

मणमीयौ—मध्य शब्द से भवार्थ में मण् तथा मीय प्रत्यय भी अवगन्तव्य हैं।

मद्ध्यो—मध्य शब्द से भवार्थ में दिनण प्रत्यय तथा मध्य को मध्यम आदेश हो जाता है।

स्थाम्नः—स्थामन् शब्द से विहित भवार्थक प्रत्यय का लुक् हो जाता है।

अजिनान्ताच्च—अजिनशब्दान्त शब्द से विहित भवार्थक प्रत्यय का भी लुक् हो जाता है।

---

(१) अनुखङ्ग इति शब्दः पुस्तकान्तरेऽधिकोऽत्र गणे।

(२) आन्तरगारिकम् इत्यधिकं पुस्तकान्तरे।

(३) अनुशतिकादीनां चेत्युभयपदवृद्धिरित्यधिकं कुत्रचित्।

समानस्य तदादेश्च अद्ध्यात्मादिषु चेष्यते ।
ऊर्ध्वन्दमाच्च देहाच्च लोकोत्तरपदस्य च ॥
मुखपार्श्वतसोरीयः कुग्जनस्य परस्य च ।
ईयः कार्योऽथ मध्यस्य मण्मीयौ प्रत्ययौ तथा ॥
मध्यो मध्यं दिनण् चास्मात् स्थाम्नो लुगजिनात्तथा ॥

## ग्रामात्पर्यनुपूर्वात् ॥ ६१ ॥

अव्ययीभावादित्येव । ग्रामशब्दान्तादव्ययीभावात् परि अनु इत्येवंपूर्वात् ठञ् प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये । अणोऽपवादः । पारिग्रामिकः । आनुग्रामिकः ॥

## जिह्वामूलाङ्गुलेश्छः ॥ ६२ ॥

जिह्वामूलशब्दादङ्गुलिशब्दाच्च छः प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये । यतोऽपवादः । जिह्वामूलीयम् । अङ्गुलीयम् ॥

## वर्गान्ताच्च ॥ ६३ ॥

वर्गशब्दान्ताच्च प्रातिपदिकाच्छः प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये । अणोऽपवादः । कवर्गीयम् । चवर्गीयम् ॥

## अशब्दे यत्खावन्यतरस्याम् ॥ ६४ ॥

वर्गान्तादित्येव । शब्दादन्यस्मिन् प्रत्ययार्थे वर्गान्तात्प्रातिपदिकादन्यतरस्यां यत्खौ प्रत्ययौ भवतः तत्र भव इत्येतस्मिन् विषये । छे प्राप्ते वचनम्, पक्षे सोऽपि भवति । वासुदेववर्ग्यः । वासुदेववर्गीणः । वासुदेववर्गीयः(१) । युधिष्ठिरवर्ग्यः । युधिष्ठिरवर्गीणः । युधिष्ठिरवर्गीयः । अशब्द इति किम् ? कवर्गीयो वर्णः ॥

## कर्णललाटात् कनलंकारे ॥ ६५ ॥

कर्णललाटशब्दाभ्यां कन् प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषयेऽलंकारेऽभिधेये । यतोऽपवादः । कर्णिका । ललाटिका । अलंकार इति किम् ? कर्ण्यम्, ललाट्यम् ॥

## तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ॥ ६६ ॥

व्याख्यायतेऽनेनेति व्याख्यानम्, व्याख्यातव्यस्य नाम व्याख्यातव्यनाम । तस्येति षष्ठीसमर्थाद् व्याख्यातव्यनाम्नः प्रातिपदिकाद् व्याख्यानेऽभिधेये यथाविहितं प्रत्ययो भवति, तत्र भवे च । वाक्यार्थसमीपे चकारः श्रूयमाणः पूर्ववाक्यार्थमेव समुच्चिनोति-

---

**ग्रामात्**—परिपूर्वक तथा अनुपूर्वक ग्रामशब्दान्त अव्ययीभाव से भवार्थ में ठञ् प्रत्यय होता है ।

**जिह्वा**—भव अर्थ में जिह्वामूल तथा अङ्गुलि शब्दों से छ प्रत्यय होता है ।

**वर्गान्ताच्च**—वर्गशब्दान्त प्रातिपदिक से भी भवार्थ में छ प्रत्यय होता है ।

**अशब्दे**—वर्गान्त प्रातिपदिक से भवार्थक यत् तथा ख प्रत्यय विकल्प से होते हैं यदि प्रत्ययार्थ शब्दभिन्न हो ।

**कर्ण**—कर्ण तथा ललाट शब्दों से भवार्थ में कन् प्रत्यय होता है यदि अलङ्कार अभिधेय हो ।

**तस्य**—व्याख्यातव्यनामभूत षष्ठ्यन्त शब्द से भवार्थ में तथा व्याख्यान के अभिधेय होने पर यथाविहित प्रत्यय होते हैं ।

---

(१) अर्जुनवर्ग्यः, अर्जुनवर्गीणः, अर्जुनवर्गीयः इत्यधिकं पुस्तकान्तरे ।

तत्र भव इति । सुपां व्याख्यानः सौपो ग्रन्थः । तैङः । कार्त्तः । सुप्सु भवं सौपम् । तैङम् । कार्त्तम् । व्याख्यातव्यनाम्न इति किम् ? पाटलिपुत्रस्य व्याख्यानी सुकोसला । पाटलिपुत्रं सुकोशलया व्याख्यायते–एवंसंनिवेशं पाटलिपुत्रमिति, न तु पाटलिपुत्रो व्याख्यातव्यनाम । भवव्याख्यानयोर्युगपदधिकारोऽपवादविधानार्थः, कृतनिर्देशौ हि तौ ॥

## बह्वचोऽन्तोदात्ताट् ठञ् ॥ ६७ ॥

बह्वचो व्याख्यातव्यनाम्नः प्रातिपदिकादन्तोदात्ताद्भवव्याख्यानयोष्ठञ् प्रत्ययो भवति । अणोऽपवादः । षात्वणत्विकम् । नातानतिकम् । समासस्वरेणान्तोदात्ताः प्रकृतयः । बह्वच इति किम् ? द्व्यचष्ठकं वक्ष्यति । एकाच् प्रत्युदाह्रियते—सौपम्, तैङम्, कार्त्तम् । अन्तोदात्तादिति किम् ? संहितायाः सांहितम् । संहितशब्दो हि गतिस्वरेणाद्युदात्तः ॥

## क्रतुयज्ञेभ्यश्च ॥ ६८ ॥

क्रतुभ्यो यज्ञेभ्यश्च व्याख्यातव्यनामभ्यः प्रातिपदिकेभ्यो भवव्याख्यानयोरर्थयोष्ठञ् प्रत्ययो भवति । अणोऽपवादः । क्रतुभ्यस्तावत्–अग्निष्टोमस्य व्याख्यानस्तत्र भवो वा आग्निष्टोमिकः, वाजपेयिकः, राजसूयिकः । यज्ञेभ्यः–पाकयज्ञिकः, नावयज्ञिकः । अनन्तोदात्तार्थ आरम्भः । क्रतुभ्य इत्येव सिद्धे यज्ञग्रहणमसोमयागेभ्योऽपि यथा स्यात्—पाञ्चौदनिकः, दाशौदनिकः । बहुवचनं स्वरूपविधिनिरासार्थम् ॥

## अध्यायेष्वेवर्षेः ॥ ६९ ॥

ऋषिशब्दाः प्रवरनामधेयानि, तेभ्य ऋषिशब्देभ्यो भवव्याख्यानयोरर्थयोष्ठञ् प्रत्ययो भवति अध्यायेष्वेव प्रत्ययार्थविशेषणेषु । अणोऽपवादः(१) । व्याख्यातव्यनाम्न इत्यनुवर्त्तते, तत्साहचर्यादृषिशब्दैर्ग्रन्थ उच्यते । वसिष्ठस्य व्याख्यानः, तत्र भवो वा वासिष्ठिकोऽध्यायः । वैश्वामित्रिकः । अध्यायेष्विति किम् ? वासिष्ठी ऋक् ॥

## पौरोडाशपुरोडाशात् ष्ठन् ॥ ७० ॥

पौरोडाशशब्दात्पुरोडाशशब्दाच्च भवव्याख्यानयोरर्थयोः ष्ठन् प्रत्ययो भवति । पुरोडाशाः पिष्टपिण्डाः, तेषां संस्कारको मन्त्रः पौरोडाशः, तस्य व्याख्यानस्तत्र भवो वा पौरोडाशिकः, पौरोडाशिकी । पुरोडाशसहचरितो ग्रन्थः पुरोडाशस्तस्य व्याख्यानः तत्र भवो वा पुरोडाशिकः, पुरोडाशिकी । षकारो ङीषर्थः ॥

## छन्दसो यदणौ ॥ ७१ ॥

छन्दः शब्दाद्भवव्याख्यानयोरर्थयोर्यदणौ प्रत्ययौ भवतः । "द्व्यचः" इति ठकि प्राप्ते वचनम् । छन्दस्यः । छान्दसः ॥

---

**बह्वचः**—व्याख्यातव्यनामभूत षष्ठ्यन्त अनेकाच् अन्तोदात्त प्रातिपदिक से भवार्थ में तथा व्याख्यान अर्थ में ठञ् प्रत्यय होता है ।

**क्रतु**—व्याख्यातव्यनामभूत क्रतुवाचक तथा यज्ञवाचक षष्ठ्यन्त प्रातिपदिक से भवार्थ तथा व्याख्यानार्थ में ठञ् प्रत्यय होता है ।

**अध्यायेषु**—ग्रन्थपरक ऋषिवाचक शब्दों से भव तथा व्याख्यान अर्थों में ठञ् प्रत्यय होता है यदि प्रत्ययार्थ के विशेषण अध्याय हों

**पौरोडाश**—पौरोडाश तथा पुरोडाश शब्दों से भव एवम् व्याख्यान अर्थों में ष्ठन् प्रत्यय होता है ।

**छन्दसो**—छन्दस् शब्द से भव तथा व्याख्यान अर्थों में यत् और अण् प्रत्यय होते हैं ।

---

(१) 'प्रत्ययो भवति । अणोऽपवादः । अध्यायेष्वेव''' इति मुद्रितपुस्तकेषूपलभ्यमानः पाठोऽस्माभिरौचित्यमनुसृत्य परिवर्तितः । (श्रीना०)

## द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् ॥ ७२ ॥

द्व्यजादिभ्यः प्रातिपदिकेभ्यो व्याख्यातव्यनामभ्यो भवव्याख्यानयोरर्थयोष्ठक् प्रत्ययो भवति। अणादेरपवादः। द्व्यचस्तावत्-ऐष्टिकः, पाशुकः। ऋकारान्तात्—चातुर्होतृकः, पाञ्चहोतृकः। ब्राह्मण-ब्राह्मणिकः। ऋक्-आर्चिकः। प्रथम-प्राथमिकः। अध्वर-आध्वरिकः। पुरश्चरण-पौरश्चरणिकः। नामाख्यातग्रहणं संघातविगृहीतार्थम्-नामिकः, आख्यातिकः, नामाख्यातिकः॥

## ऋगयनादिभ्यः ॥ ७३ ॥

ऋगयनादिभ्यः प्रातिपदिकेभ्यो भवव्याख्यानयोरर्थयोरण् प्रत्ययो भवति। ठञादेरपवादः। आर्गयनः। पादव्याख्यानः। अण्ग्रहणं बाधकबाधनार्थम्। वास्तुविद्यः। ऋगयन। पदव्याख्यान। छन्दोनाम। छन्दोभाषा। छन्दोविचिति। न्याय। पुनरुक्त। व्याकरण। निगम। वास्तुविद्या। अङ्गविद्या। क्षत्रविद्या। उत्पात। उत्पाद। संवत्सर। मुहूर्त। निमित्त। उपनिषत्। शिक्षा(१)। ऋगयनादिः॥

## तत आगतः ॥ ७४ ॥

तत इति पञ्चमीसमर्थादागत इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। स्रुघ्नादागतः स्रौघ्नः। माथुरः। राष्ट्रियः। तत इति मुख्यमपादानं विवक्षितं यत्तदिह गृह्यते, न नान्तरीयकम्—स्रुघ्नादागच्छन् वृक्षमूलादागत इति॥

## ठगायस्थानेभ्यः ॥ ७५ ॥

आय इति स्वामिग्राह्यो भाग उच्यते, स यस्मिन्नुत्पद्यते तदायस्थानम्। आयस्थानवाचिभ्यः प्रातिपदिकेभ्यष्ठक् प्रत्ययो भवति तत आगत इत्येतस्मिन् विषये। अणोऽपवादः। छं तु परत्वाद् बाधते। शुल्कशालाया आगतः शौल्कशालिकः। आकरिकम्(२)। बहुवचनं स्वरूपविधिनिरासार्थम्॥

## शुण्डिकादिभ्योऽण् ॥ ७६ ॥

शुण्डिक इत्येवमादिभ्यः प्रातिपदिकेभ्योऽण् प्रत्ययो भवति तत आगत इत्येतस्मिन् विषये। आयस्थानठकोऽपवादः। शुण्डिकादागतः शौण्डिकः। कार्कणः। अण्ग्रहणं बाधकबाधनार्थम्। औदपानः। शुण्डिक। कृकण। स्थण्डिल। उदपान। उपल। तीर्थ। भूमि। तृण। पर्ण। शुण्डिकादिः॥

---

**द्व्यजृद्**—द्व्यच्, ऋकारान्त, ब्राह्मण, ऋक्, प्रथम, अध्वर, पुरश्चरण, नाम, आख्यात तथा नामाख्यात शब्दों से भव तथा व्याख्यान अर्थों में ठक् प्रत्यय होता है।

**अण्**—ऋगयन आदि प्रातिपदिकों से भव तथा व्याख्यान अर्थों में अण् प्रत्यय होता है।

**ततः**—पञ्चम्यन्त से आगत अर्थ में यथाविहित प्रत्यय होते हैं।

**ठगाय**—पञ्चम्यन्त आयस्थानवाचक शब्दों से आगत अर्थ में ठक् प्रत्यय होता है।

**शुण्डिकादिभ्योण्**—पञ्चम्यन्त शुण्डिक आदि प्रातिपदिकों से आगत अर्थ में अण् प्रत्यय होता है।

---

(१) छन्दोविजिनी, न्याय, निरुक्त, विद्या, उद्याव, भिक्षा। एते शब्दा अत्र गणे पुस्तकान्तरेऽधिकाः।

(२) नागरिकम्, आपणिकम् इत्यपि कुत्रचित्।

## विद्यायोनिसंबन्धेभ्यो वुञ् ॥ ७७ ॥

विद्यायोनिकृतः संबन्धो येषां ते विद्यायोनिसंबन्धाः, तद्वाचिभ्यः शब्देभ्यो वुञ् प्रत्ययो भवति तत आगत इत्येतस्मिन् विषये। अणोऽपवादः। छं तु परत्वाद् बाधते। विद्यासंबन्धेभ्यस्तावत्–उपाध्यायादागतम् औपाध्यायकम्, शैष्यकम्, आचार्यकम्। योनिसंबन्धेभ्यः–मातामहकः, पैतामहकः, मातुलकः(१) ॥

## ऋतष्ठञ् ॥ ७८ ॥

विद्यायोनिसंबन्धेभ्य इत्येव। ऋकारान्तेभ्यः प्रातिपदिकेभ्यो विद्यायोनिसंबन्धवाचिभ्यष्ठञ् प्रत्ययो भवति तत आगत इत्येतस्मिन् विषये। वुञोऽपवादः। विद्यासंबन्धवाचिभ्यस्तावत्–होतुरागतं हौतृकम्, पौतृकम्। योनिसंबन्धवाचिभ्यः–भ्रातृकम्, स्वासृकम्, मातृकम्। तपरकरणं मुखसुखार्थम्। विद्यायोनिभ्यामन्यत्र—सावित्रम् ॥

## पितुर्यच्च ॥ ७९ ॥

पितृशब्दाद् यत् प्रत्ययो भवति चकाराट्ठञ्च तत आगत इत्येतस्मिन् विषये। पितुरागतं पित्र्यम्, पैतृकम् ॥

## गोत्रादङ्कवत् ॥ ८० ॥

अपत्याधिकारादन्यत्र लौकिकं गोत्रमपत्यमात्रं गृह्यते। गोत्रप्रत्ययान्तात्प्रातिपदिकादङ्कवत्प्रत्ययविधिर्भवति तत आगत इत्येतस्मिन् विषये। अङ्कग्रहणेन तस्येदमर्थसामान्यं लक्ष्यते, तस्माद् वुञतिदिश्यते(२), नाणेव–"संघाङ्कलक्षणेष्वञ्यञिञामण्" इति। औपगवानामङ्क औपगवकः। कापटवकः। नाडायनकः। चारायणकः। एवमौपगवेभ्य आगतमौपगवकम्। कापटवकम्। नाडायनकम्। चारायणकम् ॥

## हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ॥ ८१ ॥

हेतुभ्यो मनुष्येभ्यश्चान्यतरस्यां रूप्यः प्रत्ययो भवति तत आगत इत्येतस्मिन् विषये। मनुष्यग्रहणमहेत्वर्थम्। हेतुः कारणम्। हेतुभ्यस्तावत्–समादागतं समरूप्यम्, समीयम्; विषमरूप्यम्, विषमीयम्। गहादित्वाच्छः। मनुष्येभ्यः–देवदत्तरूप्यम्, यज्ञदत्तरूप्यम्, दैवदत्तम्, याज्ञदत्तम्। बहुवचनं स्वरूपविधिनिरासार्थम् ॥

## मयट् च ॥ ८२ ॥

हेतुभ्यो मनुष्येभ्यश्च मयट् प्रत्ययो भवति तत आगत इत्येतस्मिन् विषये। सम-

---

**विद्या**—विद्याप्रयुक्तसम्बन्धवाचक पञ्चम्यन्त तथा योनिकृत सम्बन्धवाचक पञ्चम्यन्त शब्दों से आगत अर्थ में वुञ् प्रत्यय होता है।

**ऋतः**—विद्यायोनिसम्बन्धवाचक ऋकारान्त पञ्चमी-समर्थ प्रातिपदिक से आगत अर्थ में ठञ् प्रत्यय होता है।

**पितुः**—पितृ शब्द से आगत अर्थ में ठञ् तथा यत् प्रत्यय होते हैं।

**गोत्रात्**—गोत्रप्रत्ययान्त शब्दों से अङ्कार्थक प्रत्ययों की तरह आगत अर्थ में भी प्रत्यय होते हैं।

**हेतु**—हेतु तथा मनुष्य शब्दों से आगत अर्थ में विकल्प से रूप्य प्रत्यय होता है।

**मयट्**—हेतु तथा मनुष्य शब्दों से आगत अर्थ में मयट् प्रत्यय भी होता है।

---

(१) मातुलक इत्युदाहरणं बहुषु पुस्तकेषु नास्ति।

(२) गोत्रचरणात् वुञ् इतीति पुस्तकान्तरेऽधिकम्।

मयम्। विषममयम्। मनुष्येभ्यः-देवदत्तमयम्, यज्ञदत्तमयम्। टकारो ङीबर्थः—सममयी। योगविभागो यथासंख्यनिरासार्थः॥

## प्रभवति॥ ८३॥

तत इत्येव। पञ्चमीसमर्थात् ङ्याप्प्रातिपदिकात् प्रभवतीत्येतस्मिन् विषये यथाविहितं प्रत्ययो भवति। प्रभवति-प्रकाशते, प्रथमत उपलभ्यत इत्यर्थः। हिमवतः प्रभवति हैमवती गङ्गा। दारदी सिन्धुः॥

## विदूराञ्ञ्यः॥ ८४॥

विदूरशब्दात् ञ्यः प्रत्ययो भवति ततः प्रभवतीत्येतस्मिन् विषये। अणोऽपवादः। विदूरात् प्रभवति वैदूर्यो मणिः। ननु च बालवायादसौ प्रभवति, न विदूरात्, तत्र तु संस्क्रियते? एवं तर्हि—

बालवायो विदूरं च प्रकृत्यन्तरमेव वा।
न वै तत्रेति चेद् ब्रूयाज्जित्वरीवदुपाचरेत्॥

## तद्गच्छति पथिदूतयोः॥ ८५॥

तदिति द्वितीयासमर्थाद्गच्छतीत्येतस्मिन् विषये यथाविहितं प्रत्ययो भवति, योऽसौ गच्छति पन्थाश्चेत् स भवति दूतो वा। स्रुघ्नं गच्छति स्रौघ्नः पन्था दूतो वा। माथुरः(१)। तत्स्थेषु गच्छत्सु पन्था गच्छतीत्युच्यते। अथवा स्रुघ्नप्राप्तिः पथो गमनम्। पथिदूतयोरिति किम्? स्रुघ्नं गच्छति सार्थः॥

## अभिनिष्क्रामति द्वारम्॥ ८६॥

तदित्येव। द्वितीयासमर्थादभिनिष्क्रामतीत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति यत्तदभिनिष्क्रामति द्वारं चेत्तद्भवति। आभिमुख्येन निष्क्रामति-अभिनिष्क्रामति, स्रुघ्नमभिनिष्क्रामति कान्यकुब्जद्वारं स्रौघ्नम्। माथुरम्। राष्ट्रियम्। द्वारमभिनिष्क्रमणक्रियायां करणं प्रसिद्धम्, तदिह स्वातन्त्र्येण विवक्ष्यते, यथा—साध्वसिश्छिनत्तीति। द्वारमिति किम्? स्रुघ्नमभिनिष्क्रामति पुरुषः॥

## अधिकृत्य कृते ग्रन्थे॥ ८७॥

तदित्येव, अधिकृत्येत्येतदपेक्ष्य द्वितीया। अधिकृत्य, प्रस्तुत्य, आगूर्येत्यर्थः। तदिति द्वितीयासमर्थादधिकृत्य कृत इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति यत्तत्कृतं ग्रन्थश्चेत्स भवति। सुभद्रामधिकृत्य कृतो ग्रन्थः सौभद्रः। गौरिमित्रः। यायातः। ग्रन्थ इति किम्?

---

**प्रभवति**—पञ्चमीसमर्थ ङ्यन्त, आबन्त तथा प्रातिपदिक से प्रभवन अर्थ में यथाविहित प्रत्यय होते हैं।

**विदूरात्**—पञ्चम्यन्त विदूर शब्द से प्रभवन अर्थ में ञ्य प्रत्यय होता है।

**तद्गच्छति**—द्वितीयासमर्थ शब्दों से जानेवाले मार्ग तथा जानेवाले दूत अर्थों में यथाविहित प्रत्यय होते हैं।

**अभिनिष्क्रामति**—द्वितीयासमर्थ शब्दों से निष्क्रामक द्वार अर्थ में यथाविहित प्रत्यय होते हैं।

**अधिकृत्य**—द्वितीयासमर्थ शब्दों से 'विषय में निर्मित ग्रन्थ' अर्थ में यथाविहित प्रत्यय होते हैं।

---

(१) राष्ट्रिय इत्यधिकं पुस्तकान्तरे।

सुभद्रामधिकृत्य कृतः प्रासादः। ॐलुबाख्यायिकार्थस्य प्रत्ययस्य बहुलम्ॐ। वासवदत्तामधिकृत्य कृताऽऽख्यायिका वासवदत्ता। सुमनोत्तरा। उर्वशी। न च भवति—भैमरथी॥

## शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ॥ ८८ ॥

तदिति वर्त्तते, अधिकृत्य कृते ग्रन्थ इति च। शिशुक्रन्दादिभ्यो द्वितीयासमर्थेभ्यश्छः प्रत्ययो भवति अधिकृत्य कृते ग्रन्थे। अणोऽपवादः। शिशुनां क्रन्दनं शिशुक्रन्दः, तमधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः। यमस्य सभा यमसभम्, यमसभीयः। द्वन्द्वात्–अग्निकाश्यपीयः, श्येनकपोतीयः, शब्दार्थसम्बन्धीयं प्रकरणम्, वाक्यपदीयम्। इन्द्रजननादिभ्यः–इन्द्रजननीयम्, प्रद्युम्नागमनीयम्(१)। इन्द्रजननादिराकृतिगणः प्रयोगतोऽनुसर्त्तव्यः, प्रातिपदिकेषु न पठ्यते। ॐद्वन्द्वे देवासुरादिभ्यः प्रतिषेधःॐ। दैवासुरम्। राक्षोऽसुरम्। गौणमुख्यम्। इन्द्रजननादेराकृतिगणत्वात् शिशुक्रन्दादयोऽपि तत्रैव द्रष्टव्याः। प्रपञ्चार्थमेषां ग्रहणम्। एवं सति देवासुरादिप्रतिषेधोऽपि न वक्तव्यः, ततश्छप्रत्ययस्यादर्शनात्॥

## सोऽस्य निवासः ॥ ८९ ॥

स इति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्प्रथमासमर्थं निवासश्चेत्स भवति। निवसन्त्यस्मिन्निति निवासो देश उच्यते। स्रुघ्नो निवासोऽस्य स्रौघ्नः। माथुरः। राष्ट्रियः॥

## अभिजनश्च ॥ ९० ॥

सोऽस्येत्येव। स इति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्प्रथमासमर्थमभिजनश्चेत्स भवति। अभिजनः पूर्वबान्धवः, तत्सम्बन्धाद्देशोऽप्यभिजन इत्युच्यते। यस्मिन् पूर्वबान्धवैरुषितं तस्मादिह देशवाचिनः प्रत्ययः न बन्धुभ्यः, निवासप्रत्यासत्तेः। स्रुघ्नोऽभिजनोऽस्य स्रौघ्नः। माथुरः। राष्ट्रियः। निवासाभिजनयोः को विशेषः? यत्र सम्प्रत्युष्यते स निवासः, यत्र पूर्वैरुषितं सोऽभिजनः। योगविभाग उत्तरार्थः॥

## आयुधजीविभ्यश्छः पर्वते ॥ ९१ ॥

सोऽस्याभिजन इति वर्त्तते। आयुधजीविभ्य इति तादर्थ्ये चतुर्थी। पर्वत इति प्रकृतिविशेषणम्, पर्वतवाचिनः प्रथमासमर्थादभिजनादस्येति षष्ठ्यर्थे छः प्रत्ययो भवति। आयुध-

---

**लुप्**—आख्यायिकार्थक प्रत्ययों का लुक् हो जाता है बहुल करके।

**शिशु**—द्वितीयासमर्थ शिशु आदि शब्दों से 'विषय में निर्मित ग्रंथ' अर्थ में छ प्रत्यय होता है।

**द्वन्द्वे**—द्वन्द्वसमासयुक्त शब्दों में देवासुर आदि शब्दों से छ प्रत्यय का प्रतिषेध समझना चाहिए।

**सोऽस्य**—प्रथमासमर्थ शब्दों से 'इसका निवास है' इस अर्थ में यथाविहित प्रत्यय होते हैं।

**अभिजनश्च**—प्रथमासमर्थ शब्दों से 'इसका अभिजन (पूर्वजनिवासस्थान) है' इस अर्थ में यथाविहित प्रत्यय होते हैं।

**आयुध**—पर्वतवाचक प्रथमासमर्थ शब्द से आयुधजीवी के अभिधान के निमित्त षष्ठ्यर्थ में छ प्रत्यय होता है।

---

(१) सौतान्वेषणीयः इति पाठान्तरम्।

जीविभ्यः—आयुधजीव्यर्थमायुधजीविनोऽभिधातुं प्रत्ययो भवतीत्यर्थः। हृद्गोलः पर्वतोऽभिजन एषामायुधजीविनां हृद्गोलीयाः। अन्धकवर्त्तीयाः। रोहितगिरीयाः। आयुधजीविभ्य इति किम्? ऋक्षोदः पर्वतोऽभिजन एषां ब्राह्मणानाम् आर्क्षोदा ब्राह्मणाः। पर्वत इति किम्? सांकाश्यका आयुधजीविनः॥

## शण्डिकादिभ्यो ञ्यः॥ ९२॥

शण्डिक इत्येवमादिभ्यः प्रातिपदिकेभ्यो ञ्यः प्रत्ययो भवति सोऽस्याभिजन इत्येतस्मिन् विषये। अणादेरपवादः। शाण्डिक्यः। सार्वसेन्यः। शण्डिक। सर्वकेश। सर्वसेन। शक। सट। रक। शङ्ख। बोध। शण्डिकादिः॥

## सिन्धुतक्षशिलादिभ्योऽणञौ॥ ९३॥

आदिशब्दः प्रत्येकमभिसम्बद्ध्यते। सिन्ध्वादिभ्यः प्रातिपदिकेभ्यस्तक्षशिलादिभ्यश्च यथासंख्यमणञौ प्रत्ययौ भवतः सोऽस्याभिजन इत्येतस्मिन् विषये। सैन्धवः। वार्णवः। सिन्धु। वर्णु। गन्धार। मधुमत्। कम्बोज। कश्मीर। साल्व। किष्किन्धा। गब्दिका। उरस। दरत्(१)। ये तु कच्छादिषु पठ्यन्ते सिन्धुवर्णुप्रभृतयस्तेभ्यस्तत एवाऽणि सिद्धे मनुष्यवुञो बाधनार्थं वचनम्। तक्षशिलादिभ्यः खल्वपि—ताक्षशिलः, वात्सोद्धरणः। तक्षशिला। वत्सोद्धरण। कौमेदुर। काण्डवारण। ग्रामणी। सरालक। कंस। किन्नर। संकुचित। सिंहकोष्ठ। कर्णकोष्ठ। बर्बर। अवसान॥

## तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः॥ ९४॥

तूद्यादिभ्यश्चतुर्भ्यः शब्देभ्यो यथासंख्यं चत्वार एव ढक्, छण्, ढञ्, यक् इत्येते प्रत्यया भवन्ति सोऽस्याभिजन इत्येतस्मिन् विषये। अणोऽपवादः। तौदेयः। शालातुरीयः। वार्मतेयः। कौचवार्यः॥

## भक्तिः॥ ९५॥

समर्थविभक्तिः प्रत्ययार्थश्चानुवर्त्तते। अभिजन इति निवृत्तम्। स इति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत्प्रथमासमर्थं भक्तिश्चेत्तद्भवति। भज्यते सेव्यत इति भक्तिः। स्रुघ्नो भक्तिरस्य स्रौघ्नः। माथुरः। राष्ट्रियः॥

## अचित्ताददेशकालाट्ठक्॥ ९६॥

देशकालव्यतिरिक्तादचित्तवाचिनः प्रातिपदिकाट्ठक् प्रत्ययो भवति सोऽस्य भक्तिरित्येतस्मिन् विषये। अणोऽपवादः। वृद्धाच्छं परत्वाद् बाधते। अपूपा भक्तिरस्य

---

शण्डिकादिभ्यः—शण्डिक आदि शब्दों से 'इसका अभिजन है' इस अर्थ में ञ्य प्रत्यय होता है।

सिन्धु—सिन्धु आदि तथा तक्षशिला आदि प्रातिपदिकों से 'इसका अभिजन है' इस अर्थ में क्रमशः अण् तथा अञ् प्रत्यय होते हैं।

तूदी—तूदी, शलातुर, वर्मवती तथा कूचवार शब्दों से 'इसका अभिजन है' इस अर्थ में क्रमशः ढक्, छण्, ढञ् तथा यक् प्रत्यय होते हैं।

भक्तिः—प्रथमासमर्थ शब्द से 'इसकी भक्ति है' इस अर्थ में यथाविहित प्रत्यय होते हैं।

अचित्तात्—देशकालभिन्न अचित्तवाचक प्रातिपदिक से 'इसकी भक्ति है' इस अर्थ में ठक् प्रत्यय होता है।

---

(१) कुलून, दिरसा—एतौ शब्दौ पुस्तकान्तरेऽत्र गणेऽधिकौ।

आपूपिकः। शाष्कुलिकः। पायसिकः। अचित्तादिति किम् ? दैवदत्तः। अदेशादिति किम् ? स्रौघ्नः। अकालादिति किम् ? ग्रैष्मः॥

## महाराजाट्ठञ् ॥ ९७ ॥

महाराजशब्दाट्ठञ् प्रत्ययो भवति सोऽस्य भक्तिरित्येतस्मिन् विषये। अणोऽपवादः। महाराजो भक्तिरस्य माहाराजिकः। प्रत्ययान्तरकरणं स्वरार्थम्॥

## वासुदेवार्जुनाभ्यां वुन् ॥ ९८ ॥

वासुदेवार्जुनशब्दाभ्यां वुन् प्रत्ययो भवति सोऽस्य भक्तिरित्येतस्मिन् विषये। छाणोरपवादः। वासुदेवो भक्तिरस्य वासुदेवकः। अर्जुनकः। ननु वासुदेवशब्दात् "गोत्रक्षत्रियाख्येभ्यः" इति वुञस्त्येव, न चात्र वुन्वुञोर्विशेषो विद्यते, किमर्थं वासुदेवग्रहणम् ? संज्ञैषा देवताविशेषस्य, न क्षत्रियाख्या। "अल्पाच्तरम्", "अजाद्यदन्तम्" इति वार्जुनशब्दस्य पूर्वनिपातमकुर्वन् ज्ञापयति-अभ्यर्हितं पूर्वं निपततीति॥

## गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् ॥ ९९ ॥

गोत्राख्येभ्यः क्षत्रियाख्येभ्यश्च प्रातिपदिकेभ्यो बहुलं वुञ् प्रत्ययो भवति सोऽस्य भक्तिरित्येतस्मिन् विषये। अणोऽपवादः। वृद्धाच्छं परत्वाद् बाधते। ग्लुचुकायनिभक्तिरस्य ग्लौचुकायनकः। औपगवकः। कापटवकः। क्षत्रियाख्येभ्यः—नाकुलकः, साहदेवकः, साम्बकः। आख्याग्रहणं प्रसिद्धक्षत्रियशब्दपरिग्रहार्थम्, यथाकथञ्चित् क्षत्रियवृत्तिभ्यो मा भूत्। बहुलग्रहणात् क्वचिदप्रवृत्तिरेव—पाणिनो भक्तरिस्य पाणिनीयः, पौरवीयः॥

## जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने ॥ १०० ॥

जनपदिनो ये बहुवचने जनपदेन समानशब्दास्तेषां जनपदवत्सर्वं भवति प्रत्ययः प्रकृतिश्च सोऽस्य भक्तिरित्येतस्मिन् विषये। "जनपदतदवध्योश्च" इत्यत्र प्रकरणे ये प्रत्यया विहितास्ते जनपदिभ्योऽस्मिन्नर्थेऽतिदिश्यन्ते। जनपदिनो जनपदस्वामिनः क्षत्रियाः। अङ्गा जनपदो भक्तिरस्य आङ्गकः। वाङ्गकः। सौह्मकः। पौण्ड्रकः। तद्वदङ्गाः क्षत्रिया भक्तिरस्य आङ्गकः। वाङ्गकः। सौह्मकः। पौण्ड्रकः। जनपदिनामिति किम् ? पञ्चाला ब्राह्मणा भक्तिरस्य पाञ्चालः। सर्वग्रहणं प्रकृत्यतिदेशार्थम्, स च द्व्येकयोरतिदेशं प्रयोजयति। वृद्धिनिमित्तेषु च वुञादिषु विशेषो नास्तीति। मद्रवृजयोः कनि विशेषः। मद्रस्यापत्यम् "द्व्यञ्मगधकलिङ्गसूरमसादण्" इत्यण्—माद्रः। वृजिशब्दादपि "वृद्धेत्कोसलाजादाञ्ञ्यङ्" इति ञ्यङ्—वार्ज्यः। स भक्तिरस्येति प्रकृतिनिर्ह्रासे कृते—मद्रकः, वृजिकः। जनपदेन समानशब्दानामिति किम् ? अनुषण्डो जनपदः; पौरवो राजा, स भक्तिरस्य पौरवीयः। बहुवचनग्रहणं समानशब्दताविषयलक्षणार्थम्, अन्यथा हि

---

महा—महाराज शब्द से 'इसकी भक्ति है' इस अर्थ में ठञ् प्रत्यय होता है।

वासु—वासुदेव तथा अर्जुन शब्दों से 'इसकी भक्ति है' इस अर्थ में वुन् प्रत्यय होता है।

गोत्र—गोत्रवाचक तथा क्षत्रियवाचक शब्दों से 'इसकी भक्ति है' इस अर्थ में बहुल करके वुञ् प्रत्यय होता है।

जनपदिनाम्—जनपदस्वामिवाचक जो शब्द बहुवचन में जनपदवाचक शब्द के साथ समानश्रुति होते हैं उनसे 'इसकी भक्ति है' इस अर्थ में जनपदवाचक शब्दों के समान ही प्रकृति-प्रत्यय होते हैं।

यत्रैव समानशब्दता तत्रैवातिदेशः स्याद्, एकवचनद्विवचनयोर्न स्यात्—बाङ्गो बाङ्गौ वा भक्तिरस्येति । बहुवचने तु, बहुवचने समानशब्दानामेकवचनद्विवचनयोः सत्स्वपि शब्दभेदेऽतिदेशो भवति—बाङ्गः बाङ्गौ वा भक्तिरस्य बाङ्गकः ॥

## तेन प्रोक्तम् ॥ १०१ ॥

तेनेति तृतीयासमर्थात्प्रोक्तमित्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । प्रकर्षेणोक्तं प्रोक्तमित्युच्यते, न तु कृतम् , "कृते ग्रन्थे" इत्यनेन गतत्वात् । अन्येन कृता माथुरेण प्रोक्ता माथुरी वृत्तिः । पाणिनीयम् । आपिशलम् । काशकृत्स्नम् ॥

## तित्तिरिवरतन्तुखण्डिकोखाच्छण् ॥ १०२ ॥

तित्तिर्यादिभ्यः शब्देभ्यश्छण् प्रत्ययो भवति तेन प्रोक्तमित्येतस्मिन् विषये । अणोऽपवादः । तित्तिरिणा प्रोक्तमधीयते तैत्तिरीयाः । वारतन्तवीयाः । खाण्डिकीयाः । औखीयाः । छन्दसि वायमिष्यते, तेन तित्तिरिणा प्रोक्तः श्लोक इत्यत्र न भवति । "शौनकादिभ्यश्छन्दसि" इत्यत्रास्यानुवृत्तेश्छन्दोऽधिकारविहितानां च तद्विषयतेष्यते(१) ॥

## काश्यपकौशिकाभ्यामृषिभ्यां णिनिः ॥ १०३ ॥

काश्यपकौशिकशब्दाभ्यामृषिवाचिभ्यां णिनिः प्रत्ययो भवति तेन प्रोक्तमित्येतस्मिन् विषये । छस्यापवादः । णकार उत्तरत्र वृद्ध्यर्थः कल्प्यः । ताभ्यां प्रोक्त इति स्मर्यते । तस्यापि च तद्विषयता भवत्येव । "शौनकादिभ्यश्छन्दसि" इत्यत्रास्यानुवृत्तेश्छन्दोऽधिकार विहितानां च तत्र तद्विषयतेष्यते । काश्यपेन प्रोक्तं कल्पमधीयते काश्यपिनः । ऋषिभ्यामिति किम् ? इदानीन्तनेन गोत्रकाश्यपेन प्रोक्तं काश्यपीयम् ॥

## कलापिवैशम्पायनान्तेवासिभ्यश्च ॥ १०४ ॥

कलाप्यन्तेवासिनां वैशम्पायनान्तेवासिनां च ये वाचकाः शब्दास्तेभ्यो णिनिः प्रत्ययो भवति तेन प्रोक्तमित्येतस्मिन् विषये । अणोऽपवादः । छं तु परत्वाद् बाधते । तत्र कलाप्यन्तेवासिनश्चत्वारः–हरिद्रुः, छगली, तुम्बुरुः, उलप इति । वैशम्पायनान्तेवासिनो नव–आलम्बि, पलङ्ग, कमल, ऋचाभ, अरुणि, ताण्ड्य, श्यामायन, कठ, कलापी इति । प्रत्यक्षकारिणो गृह्यन्ते, न तु व्यवहिताः शिष्यशिष्याः । कुतः ? कलापिखाडायग्रहणात् । तथाहि-वैशम्पायनान्तेवासी कालापी, तदन्तेवासिनो वैशपायनान्तेवासिन एव भवन्ति, किं कलापिग्रहणणेन ? तथा वैशम्पायनान्तेवासी कठस्तदन्तेवासी खाडायनस्तस्य किं शौनकादिषु पाठेन ? तदेतत् प्रत्यक्षकारिग्रहणस्य लिङ्गम् । कलाप्यन्तेवासिभ्यस्तावत्–हरिद्रुणा प्रोक्तमधीयते हारिद्रविणः, तौम्बुरविणः, औलपिनः । छगलिनो ढिनुकं वक्ष्यति । वैशम्पायनान्तेवासिभ्यः–आलम्बिनः,

---

**तेन**—तृतीयासमर्थ शब्दों से प्रोक्त अर्थ में यथाविहित प्रत्यय होते हैं ।

**तित्तिरि**—तृतीयासमर्थ तित्तिरि, वरतन्तु, खण्डिक तथा उख शब्दों से प्रोक्त अर्थ में छण् प्रत्यय होता है ।

**काश्यप**—तृतीयासमर्थ ऋषिवाचक काश्यप तथा कौशिक शब्दों से प्रोक्त अर्थ में णिनि प्रत्यय होता है ।

**कलापि**—कलाप्यन्तेवासिवाचक तथा वैशम्पायनान्तेवासिवाचक तृतीयासमर्थ शब्दों से भी प्रोक्त अर्थ में णिनि प्रत्यय होता है ।

---

(१) शौनकेत्यादीष्यत इत्यन्तग्रन्थस्य स्थाने शौनकादिभ्यश्छन्दसि इत्यत्रैवमनुवर्तयितव्यम् इत्याहुः इति पाठो बहुषु पुस्तकेषु ।

पालङ्किनः, कामलिनः, आर्चाभिनः, आरुणिनः, ताण्डिनः, श्यामायनिनः। कठाल्लुकं वक्ष्यति, कलापिनश्चाणम्।

हरिद्रुरेषां प्रथमस्ततश्छगलितुम्बुरू।
उलपेन चतुर्थेन कालापकमिहोच्यते॥
आलम्बिश्चरकः प्राचां पलङ्गकमलावुभौ।
ऋचाभारुणिताण्ड्याश्च मद्ध्यमीयास्त्रयोऽपरे॥
श्यामायन उदीच्येषु उक्तः कठकलापिनोः।

चरक इति वैशंपायनस्याख्या, तत्संबन्धेन सर्वे तदन्तेवासिनश्चरका इत्युच्यन्ते॥

## पुराणप्रोक्तेषु ब्राह्मणकल्पेषु॥ १०५॥

प्रत्ययार्थविशेषणमेतत्, तृतीयासमर्थात् प्रोक्ते णिनिः प्रत्ययो भवति यत्प्रोक्तं पुराणप्रोक्ताश्चेद्ब्राह्मणकल्पास्ते भवन्ति। पुराणेन = चिरन्तनेन मुनिना प्रोक्ताः। ब्राह्मणेषु तावत्-भाल्लविनः, शाट्यायनिनः, ऐतरेयिणः। कल्पेषु-पैङ्गी कल्पः, आरुणपराजी। पुराणप्रोक्तेष्विति किम्? याज्ञवल्कानि ब्राह्मणानि, आश्मरथः कल्पः। याज्ञवल्कादयोऽचिरकाला इत्याख्यानेषु वार्त्ता, तया व्यवहरति सूत्रकारः। तद्विषयता कस्मान्न भवति? प्रतिपदं ब्राह्मणेषु यः प्रत्ययस्तस्य तद्विषयता विधीयते णिनेः, अयं तु याज्ञवल्क्यशब्दस्य कण्वादिषु पाठादण्। न वायं योगश्छन्दोऽधिकारमनुवर्त्तयति, तेन कल्पेष्वपि न भवति। पुराण इति निपातनात्तुडभावः। न वात्यन्तबाधैव, तेन पुरातनमित्यपि भवति॥

## शौनकादिभ्यश्छन्दसि॥ १०६॥

शौनक इत्येवमादिभ्यो णिनिः प्रत्ययो भवति तेन प्रोक्तमित्येतस्मिन् विषये छन्दस्यभिधेये। छाणोरपवादः। शौनकेन प्रोक्तमधीयते शौनकिनः। वाजसनेयिनः। छन्दसीति किम्? शौनकीया शिक्षा। कठशाठ इति अत्र पठ्यते, तत्समुदायार्थम्, केवलाद्धि लुकं वक्ष्यति। कठशाठाभ्यां प्रोक्तमधीयते काठशाठिनः। शौनक। वाजसनेय। साङ्गरव। शार्ङ्गरव। साम्पेय। शाखेय। खाडायन। स्कन्ध। स्कन्द। देवदत्तशठ। रज्जुकण्ठ। रज्जुभार। कठशाठ। कशाय। तलवकार। पुरुषांस। अश्वपेय। (१)शौनकादिः॥

## कठचरकाल्लुक्॥ १०७॥

कठचरकशब्दाभ्यां परस्य प्रोक्तप्रत्ययस्य लुग्भवति। कठशब्दात् "वैशम्पायनान्तेवासिभ्यः" इति णिनेश्चरकशब्दादण्णः। कठेन प्रोक्तमधीयते कठाः। चरकाः। छन्दसीत्येव—काठाः, चारकाः(२)॥

## कलापिनोऽण्॥ १०८॥

कलापिशब्दादण् प्रत्ययो भवति तेन प्रोक्तमित्येतस्मिन् विषये। वैशम्पायनान्ते-

---

पुराण—तृतीयासमर्थ शब्द से प्रोक्तार्थ में णिनि प्रत्यय होता है यदि प्रोक्त पदार्थ पुराणमुनिप्रोक्त ब्राह्मण अथवा कल्प हों।

शौनकादिभ्यः—शौनक आदि शब्दों से प्रोक्तार्थ में णिनि प्रत्यय होता है यदि छन्दस् उसका अभिधेय हो।

कठ—कठ तथा चरक शब्दों से विहित प्रोक्तार्थक प्रत्यय का लुक् हो जाता है।

कलापिनोऽण्—कलापिन् शब्द से प्रोक्त अर्थ में अण् प्रत्यय होता है।

---

(१) स्कम्भ इति पुस्तकान्तरेऽत्र गणेऽधिकः।

(२) श्लोका इत्यधिकं कुत्रचित्।

वासित्वाण्णिनेरपवादः। कलापिना प्रोक्तमधीयते कालापाः। "इनण्यनपत्ये" इति प्रकृतिभावे प्राप्ते, नान्तस्य टिलोपे-'सब्रह्मचारिपीठसर्पिकलापकुथुमि(१)तैतलिजाजलि- (२)जाङ्गलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानम्' इति टिलोपः। अथाण्ग्रहणं किम्, यथाप्राप्तमित्येव सिद्धम्? अधिकविधानार्थम्। तेन माथुरी वृत्तिः, शौलभानि ब्राह्मणानीत्यादि सिद्धम्॥

## छगलिनो ढिनुक्॥ १०९॥

छगलिन्शब्दात् ढिनुक् प्रत्ययो भवति तेन प्रोक्तमित्येतस्मिन् विषये। कलाप्यन्तेवासित्वाण्णिनेरपवादः। छगलिना प्रोक्तमधीयते छागलेयिनः॥

## पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः॥ ११०॥

णिनिरिहानुवर्त्तते, न ढिनुक्। पाराशर्यशिलालिभ्यां णिनिः प्रत्ययो भवति तेन प्रोक्तमित्येतस्मिन् विषये। भिक्षुनटसूत्रयोरिति यथासंख्यं प्रत्ययार्थविशेषणम्, सूत्रशब्दः प्रत्येकमभिसंबध्यते। तद्विषयता चात्रेष्यते, तदर्थं छन्दोग्रहणमनुवर्त्यम्, गुणकल्पनया च भिक्षुनटसूत्रयोश्छन्दस्त्वम्। पाराशर्येण प्रोक्तमधीयते पाराशरिणो भिक्षवः। शैलालिनो नटाः। भिक्षुनटसूत्रयोरिति किम्? पाराशरम्, शैलालम्॥

## कर्मन्दकृशाश्वादिनिः॥ १११॥

भिक्षुनटसूत्रयोरित्येव। कर्मन्दकृशाश्वशब्दाभ्यामिनिः प्रयत्यो भवति तेन प्रोक्तमित्येतस्मिन् विषये यथासंख्यं भिक्षुनटसूत्रयोरभिधेययोः। अणोऽपवादः। अत्रापि तद्विषयतार्थं छन्दोग्रहणमनुवर्त्यम्। कर्मन्देन प्रोक्तमधीयते कर्मन्दिनो भिक्षवः। कृशाश्विनो नटाः। भिक्षुनटसूत्रयोरित्येव—कार्मन्दम्, कार्शाश्वम्॥

## तेनैकदिक्॥ ११२॥

तेनेति तृतीयासमर्थादेकदिगित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। एकदिक् तुल्यदिक्, समानदिगित्यर्थः। सुदाम्ना एकदिक् सौदामनी विद्युत्। हैमवती। त्रैककुदी। पैलुमूली। तेनेति प्रकृते पुनः समर्थविभक्तिग्रहणं छन्दोऽधिकारनिवृत्त्यर्थम्। पूर्वत्र हि छन्दोऽधिकारात् तद्विषयता साध्यते॥

## तसिश्च॥ ११३॥

तसिश्च प्रत्ययो भवति तेनैकदिगित्येतस्मिन् विषये। पूर्वेण घादिषु अणादिषु च प्राप्तेष्वयमपरः प्रत्ययो विधीयते। स्वरादिपाठादव्ययम्। सुदामतः। हिमवत्तः। पीलुमूलतः॥

---

छगलिनः—छगलिन् शब्द से प्रोक्तार्थ में ढिनुक् प्रत्यय होता है।

पाराशर्य—पाराशर्य तथा शिलालि शब्दों से प्रोक्तार्थ में णिनि प्रत्यय होता है यदि क्रमशः भिक्षुसूत्र तथा नटसूत्र अभिधेय हों।

कर्मन्द—कर्मन्द तथा कृशाश्व शब्दों से क्रमशः भिक्षुसूत्र तथा नटसूत्र के अभिधेय होने पर णिनि प्रत्यय होता है।

तेनैक—तृतीयासमर्थ से एकदिक् अर्थ में यथाविहित प्रत्यय होते हैं।

तसिश्च—तृतीयासमर्थ से एकदिक् अर्थ में तसि प्रत्यय होता है।

---

(१) कौथुमीति पाठः।

(२) जाङ्गलीति बहुषु पुस्तकेषु नोपलभ्यते।

## उरसो यच्च ॥ ११४ ॥

उरःशब्दाद्यत् प्रत्ययो भवति चकारात्तसिश्च तेनैकदिगित्येतस्मिन् विषये । अणोऽपवादः । उरसा एकदिग् उरस्यः । उरस्तः ॥

## उपज्ञाते ॥ ११५ ॥

तेनेत्येव । तृतीयासमर्थादुपज्ञात इत्येतस्मिन् विषये यथाविहितं प्रत्ययो भवति । विनोपदेशेन ज्ञातमुपज्ञातम्, स्वयमभिसंबद्धमित्यर्थः । पाणिनिनोपज्ञातं पाणिनीयम् अकालकं व्याकरणम् । काशकृत्स्नम् गुरुलाघवम् । आपिशलम् दुष्करणम् ॥

## कृते ग्रन्थे ॥ ११६ ॥

तेनेत्येव । तृतीयासमर्थात्कृत इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति यत्तत्कृतं ग्रन्थश्चेत् स भवति । वररुचिना कृता वाररुचाः श्लोकाः । हैकुपादो ग्रन्थः । भैकुराटो ग्रन्थः । जालूकः । ग्रन्थ इति किम् ? तक्षकृतः प्रासादः । उत्पादितं कृतम्, विद्यमानमेव ज्ञातमुपज्ञातमित्ययमनयोर्विशेषः ॥

## संज्ञायाम् ॥ ११७ ॥

तृतीयासमर्थात् कृत इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति समुदायेन चेत्संज्ञा ज्ञायते । मक्षिकाभिः कृतं माक्षिकम् । कार्मुकम्(१) । सारघम् । पौत्तिकम् । मधुनः संज्ञा एताः ॥

## कुलालादिभ्यो वुञ् ॥ ११८ ॥

तेन, कृते, संज्ञायामिति चैतत्सर्वमनुवर्तते । कुलालादिभ्यो वुञ् प्रत्ययो भवति तेन कृतमित्येतस्मिन्नर्थे संज्ञायां गम्यमानायाम् । कौलालकम् । वारुडकम् । कुलाल । वरुड । चण्डाल । निषाद । कर्मार । सेना । सिरिध्र । सेन्द्रिय । देवराज । परिषत् । वधू । रुरु । ध्रुव । रुद्र । अनडुह् । ब्रह्मन् । कुम्भकार । श्वपाक । कुलालादि ॥

## क्षुद्राभ्रमरवटरपादपादञ् ॥ ११९ ॥

तेन, कृते, संज्ञायामिति सर्वमनुवर्तते । क्षुद्रादिभ्योऽञ् प्रत्ययो भवति तेन कृतमित्येतस्मिन् विषये संज्ञायां गम्यमानायाम् । अणोऽपवादः । स्वरे विशेषः । क्षुद्रादिभिः कृतं क्षौद्रम् । भ्रामरम् । वाटरम् । पादपम् ॥

## तस्येदम् ॥ १२० ॥

तस्येति षष्ठीसमर्थादिदमित्येतस्मिन् विषये यथाविहितं प्रत्ययो भवति । अणादयः पश्च

---

उरसः—तृतीयासमर्थ उरस् शब्द से एकदिक् अर्थ में यत् तथा तसि प्रत्यय होते हैं ।

उपज्ञाते—तृतीयासमर्थ शब्द से उपज्ञात अर्थ में यथाविहित प्रत्यय होते हैं ।

कृते—तृतीयासमर्थ से कृत ग्रन्थ अर्थ में यथाविहित प्रत्यय होते हैं ।

संज्ञायाम्—तृतीयासमर्थ से कृत अर्थ से यथाविहित प्रत्यय होते हैं यदि प्रत्ययान्त से संज्ञा की प्रतीति हो ।

कुलालादिभ्यः—तृतीयासमर्थ कुलाल आदि शब्दों से संज्ञा के गम्यमान होने पर कृत अर्थ में वुञ् प्रत्यय होता है ।

क्षुद्रा—तृतीयासमर्थ क्षुद्रा, भ्रमर तथा पादप शब्दों से संज्ञा में गम्यमान होने पर कृत अर्थ में अञ् प्रत्यय होता है ।

तस्येदम्—षष्ठीसमर्थ शब्द से 'इदम्' अर्थ में यथाविहित प्रत्यय होते हैं

---

(१) कार्मुतम् इति पाठान्तरम् ।

महोत्सर्गाः, घादयश्च प्रत्यया यथाविहितं विधीयन्ते। प्रकृतिप्रत्ययार्थयोः षष्ठ्यर्थमात्रं तत्संबन्धिमात्रं च विवक्षितम् यदपरं लिङ्गसंख्याप्रत्यक्षपरोक्षादिकं तत्सर्वमविवक्षितम्। उपगोरिदमौपगवम्। कापटवम्। राष्ट्रियम्। अवारपारीणम्। अनन्तरादिष्वनभिधानान्न भवति–देवदत्तस्यानन्तरमिति। ॐसंवहेस्तुरणिट् चॐ। संवोढुः स्वं सांवहित्रम्। सिद्ध एवात्राण् इडर्थमुपसंख्यानम्। ॐअग्नीधः शरणे रण् भं चॐ। आग्नीध्रम्। ॐसमिधामाधाने षेण्यण्ॐ। सामिधेन्यो मन्त्रः। सामिधेनी ऋक्॥

## रथाद्यत्॥ १२१॥

रथशब्दाद् यत् प्रत्ययो भवति तस्येदमित्येतस्मिन् विषये। अणोऽपवादः। रथस्येदं रथ्यम्, चक्रं वा युगं वा। रथाङ्ग एवेष्यते, नान्यत्र, अनभिधानात्। ॐरथसीताहलेभ्यो यद्विधाविति तदन्तविधिरुपसंख्यायतेॐ। परमरथ्यम्। उत्तमरथ्यम्॥

## पत्त्रपूर्वादञ्॥ १२२॥

पतन्ति येनेति पत्त्रमश्वादिकं वाहनमुच्यते। तत्पूर्वाद्रथशब्दादञ् प्रत्ययो भवति तस्येदमित्येतस्मिन् विषये। पूर्वस्य यतोऽपवादः। आश्वरथं चक्रम्। औष्ट्ररथम्। गार्दभरथम्(१)॥

## पत्त्राध्वर्युपरिषदश्च॥ १२३॥

पत्त्रं वाहनम्, तद्वाचिनः प्रातिपदिकादध्वर्युपरिषच्छब्दाभ्यां चाञ्प्रत्ययो भवति तस्येदमित्येतस्मिन् विषये। अणोऽपवादः। ॐपत्त्राद्वाह्येॐ। अश्वस्येदं वहनीयमाश्वम्। औष्ट्रम्। गार्दभम्। आध्वर्यवम्। पारिषदम्॥

## हलसीराट्ठक्॥ १२४॥

हलसीरशब्दाभ्यां ठक् प्रत्ययो भवति तस्येदमित्येतस्मिन् विषये। अणोऽपवादः। हलस्येदं हालिकम्। सैरिकम्॥

## द्वन्द्वाद् वुन् वैरमैथुनिकयोः॥ १२५॥

द्वन्द्वसंज्ञकाद वुन् प्रत्ययो भवति तस्येदमित्येतस्मिन् विषये वैरमैथुनिकयोः प्रत्ययार्थ-

---

**वहेः**—सम्पूर्वक 'वह' धातु से विहित तृन् तथा तृच् प्रत्ययों से पर अण् प्रत्यय को इडागम होता है।

**अग्नीधः**—अग्नीध्र शब्द से 'शरण गृह' अर्थ में इण् प्रत्यय तथा उसकी भसंज्ञा समझनी चाहिए।

**समिधाम्**—आधानविशेष अर्थ में समित् शब्द से षेण्यण् प्रत्यय होता है।

**रथात्**—षष्ठीसमर्थ रथ शब्द से इदमर्थ में यत् प्रत्यय होता है।

**रथ**—रथ, सीता तथा हल शब्द से यत् प्रत्यय के विधान में तदन्तविधि समझनी चाहिए।

**पत्त्र**—वाहनवाचकशब्दपूर्वक रथ शब्द से अञ् प्रत्यय होता है।

**पत्त्राध्वर्यु**—षष्ठीसमर्थ वाहनवाचक शब्द तथा अध्वर्यु एवं परिषद् शब्दों से इदमर्थ में अञ् प्रत्यय होता है।

**पत्त्रात्**—वाहनवाचक शब्दों से वाह्य ( वहनीय ) अर्थ में भी अञ् प्रत्यय समझना चाहिए।

**हल**—षष्ठीसमर्थ हल तथा सीर शब्दों से इदमर्थ में ठक् प्रत्यय होता है।

**द्वन्द्वात्**—द्वन्द्वसंज्ञक से इदमर्थ में वुन् प्रत्यय होता है वैर तथा मैथुनिक के प्रत्ययार्थ-विशेषण होने पर।

---

( १ ) गार्दभरथमित्येतस्याग्रे रासभरथम्। छं परत्वाद् बाधते इत्यधिकमेकस्मिन् पुस्तके।

विशेषणयोः। अणोऽपवादः। छं तु परत्वाद् बाधते। वैरे तावत्-(१)बाभ्रव्यशालङ्कायनिका, काकोलूकिका। मैथुनिकायाम्—अत्रिभरद्वाजिका, कुत्सकुशिकिका, विवहनमथुनिका। वरस्य नपुंसकत्वेऽप्यमी स्वभावतः स्त्रीलिङ्गाः(२)। ॐवैरे देवासुरादिभ्यः प्रतिषेधो वक्तव्यःॐ। देवासुरम्। राक्षोऽसुरं वैरम्॥

## गोत्रचरणाद् वुञ्॥ १२६॥

गोत्रवाचिभ्यश्चरणवाचिभ्यश्च प्रातिपदिकेभ्यो वुञ् प्रत्ययो भवति तस्येदमित्येतस्मिन् विषये। अणोऽपवादः। छं तु परत्वाद् बाधते। गोत्रात्तावत्-ग्लौचुकायनकम्, औपगवकम्। चरणाद्धर्माम्नाययोरिष्यते-काठकम्, कालापकम्, मौदकम्, पैप्पलादकम्॥

## संघाङ्कलक्षणेष्वञ्यञिञामण्॥ १२७॥

संघादिषु प्रत्ययार्थविशेषणेष्वञन्ताद्यञन्ताद् इञन्ताच्च प्रातिपदिकादण् प्रत्ययो भवति तस्येदमित्येतस्मिन् विषये। पूर्वस्य वुञोऽपवादः। ॐघोषग्रहणमत्र कर्तव्यम्ॐ। तेन वैषम्याद्यथासंख्यं न भवति। अञन्तात्-बैदः संघः, बैदोऽङ्कः, बैदं लक्षणम्, बैदो घोषः। यञन्तात्-गार्गः संघः, गार्गोऽङ्कः, गार्गं लक्षणम्, गार्गो घोषः,। इञन्तात्-दाक्षः संघः, दाक्षोऽङ्कः, दाक्षं लक्षणम्, दाक्षो घोषः। अङ्कलक्षणयोः को विशेषः? लक्षणं लक्ष्यभूतस्यैव चिह्नभूतं स्वम्, यथा—विद्या विदानाम्। अङ्कस्तु गवादिस्थोऽपि गवादीनां स्वं न भवति। णित्करणं ङीबर्थं पुंवद्भावप्रतिषेधार्थं च। बैदी विद्याऽस्य बैदीविद्यः॥

## शाकलाद् वा॥ १२८॥

शाकलशब्दात् संघादिषु प्रत्ययार्थविशेषणेषु वाण्प्रत्ययो भवति तस्येदमित्येतस्मिन् विषये। वुञोऽपवादः। शाकलेन प्रोक्तमधीयते शाकलाः। तेषां संघः शाकलाः, शाकलकः। शाकलोऽङ्कः, शाकलकोऽङ्कः। शाकलं लक्षणम्, शाकलकं लक्षणम्। शाकलो घोषः, शाकलको घोषः॥

## छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः॥ १२९॥

संघादयो निवृत्ताः, सामान्येन विधानम्। छन्दोगादिभ्यः शब्देभ्यो ञ्यः प्रत्ययो भवति तस्येदमित्येतस्मिन् विषये। वुञणोरपवादः। चरणाद्धर्माम्नाययोः, तत्साहचर्यान्नटशब्दादपि धर्माम्नाययोरेव भवति। छन्दोगानां धर्मो वाऽऽम्नायो वा छान्दोग्यम्। औक्थिक्यम्। याज्ञिक्यम्। बाहवृच्यम्। नाट्यम्। अन्यत्र छान्दोगं कुलमित्यादि॥

---

**वैरे**—परन्तु वैर के प्रत्ययार्थविशेषण होने पर भी देवासुर आदि शब्दों से वुन् प्रत्यय का प्रतिषेध समझना चाहिए।

**गोत्र**—गोत्रवाचक तथा चरणवाचक शब्दों से इदमर्थ में वुञ् प्रत्यय होता है।

**सङ्घाङ्क**—सङ्घ, अङ्क तथा लक्षण के प्रत्ययार्थ-विशेषण होने पर यञन्त तथा इञन्त प्रातिपदिक से इदमर्थ में अञ् प्रत्यय होता है।

**घोष**—यहाँ घोष शब्द का भी ग्रहण करना चाहिए।

**शाकलाद्वा**—सङ्घ आदि के प्रत्ययार्थविशेषण होने पर शाकल शब्द से इदमर्थ में विकल्प से अण् प्रत्यय होता है।

**छन्दो**—छन्दोग आदि शब्दों से इदमर्थ में ञ्य प्रत्यय होता है।

---

(१) बाभ्रवेति पाठान्तरम्।

(२) वैरस्येत्यारभ्य स्त्रीलिङ्गा इत्यन्तं कचिन्न दृश्यते।

## न दण्डमाणवान्तेवासिषु ॥ १३० ॥

दण्डप्रधाना माणवा दण्डमाणवाः, अन्तेवासिनः शिष्याः, तेष्वभिधेयेषु वुञ् प्रत्ययो न भवति । गोत्रग्रहणमिहानुवर्त्तते, तेन वुञ्प्रतिषेधो विज्ञायते । गौकक्षाः दण्डमाणवाः, अन्तेवासिनो वा । दाक्षाः । माहकाः ॥

## रैवतिकादिभ्यश्छः ॥ १३१ ॥

रैवतिकादिभ्यश्छः प्रत्ययो भवति तस्येदमित्येतस्मिन् विषये । गोत्रप्रत्ययान्ता एते, ततः पूर्वेण वुञि प्राप्ते छविधानार्थं वचनम् । रैवतिकीयः । स्वापिशीयः । रैवतिक । स्वापिशि । क्षैमवृद्धि । गौरग्रीवि । औदमेयि । औदवाहि । बैजवापि । रैवतिकादिः ॥

## कौपिञ्जलहास्तिपदादण् ॥ १३२ ॥

कौपिञ्जलहास्तिपदशब्दाभ्यामण् प्रत्ययो भवति तस्येदमित्येतस्मिन् विषये । गोत्रवुञोऽपवादः, गोत्राधिकारात् । कौपिञ्जलः । हास्तिपदः ॥

## आथर्वणिकस्येकलोपश्च ॥ १३३ ॥

अणित्येव । आथर्वणिकशब्दादण् प्रत्ययो भवति तत्सन्नियोगेन चेकलोपः, तस्येदमित्येतस्मिन् विषये । चरणवुञोपवादः । अथार्वणिकस्यायमाथर्वणो धर्म आम्नायो वा । चरणाद्धर्माम्नाययोः ॥

## तस्य विकारः ॥ १३४ ॥

तस्येति षष्ठीसमर्थाद्विकार इत्येतस्मिन् विषये यथाविहितं प्रत्ययो भवति । प्रकृतेरवस्थान्तरं विकारः । किमिहोदाहरणरम् ? अप्राण्याद्युदात्तमवृद्धं यस्य च नान्यत्र प्रतिपदं ग्रहणम् । अश्मनो विकार आश्मः । आश्मनः । अश्मनो विकार इति टिलोपः पात्तिकः । भास्मनः । मार्त्तिकः । नित्स्वरेणाद्युदात्ता एते । तस्यप्रकरणे तस्येति पुनर्वचनं शैषिकनिवृत्त्यर्थम् । विकारावयवयोर्घादयो न भवन्ति—हालः, सैरः ॥

## अवयवे च प्राण्योषधिवृक्षेभ्यः ॥ १३५ ॥

प्राण्यौषधिवृक्षवाचिभ्यः शब्देभ्यः षष्ठीसमर्थेभ्योऽवयवे यथाविहितं प्रत्ययो भवति, चकाराद्विकारे च । तत्र प्राणिभ्योऽञं वक्ष्यति–कपोतस्य विकारोऽवयवो वा कापोतः । मायूरः । तैत्तिरः । ओषधिभ्यः–मौर्वं काण्डम् , मौर्वं भस्म । वृक्षेभ्यः–कारीरं काण्डम् , कारीरं भस्म । इत उत्तरे प्रत्ययाः प्राण्योषधिवृक्षेभ्यो विकारावयवयोर्भवन्ति(१), अन्ये-

---

**न दण्ड**—दण्डप्रधान माणव तथा शिष्यों के अभिधेय होने पर गोत्रप्रत्ययान्त से वुञ् प्रत्यय नहीं होता है ।

**रैवतिकादिभ्यः**—रैवतिक आदि शब्दों से इदमर्थ में छ प्रत्यय होता है ।

**कौपिञ्जल**—कौपिञ्जल तथा हस्तिपद शब्दों से इदमर्थ में अञ् प्रत्यय होता है ।

**आथर्वणिक**—आथर्वणिक शब्द से इदमर्थ में अण् प्रत्यय तथा इक का लोप भी हो जाता है ।

**तस्य**—षष्ठीसमर्थ से विकार अर्थ में यथाविहित प्रत्यय होते हैं ।

**अवयवे**—षष्ठीसमर्थ प्राणिवाचक, ओषधिवाचक तथा वृक्षवाचक शब्दों से अवयवार्थ में तथा विकार अर्थ में यथाविहित प्रत्यय होते हैं ।

---

(१) भवन्ति इत्यस्याग्रे वृक्षशब्देन वनस्पतयोऽपि गृह्यन्ते । न्यग्रोधस्य विकारोऽवयवो वा नैयग्रोधः । पैप्पलः । औदुम्बरः । ओषधिशब्दाल्लतादयोऽपि गृह्यन्ते । ताम्बूल्याः विकारोऽवयवो या ताम्बूलः । गान्दूचः । एभ्यो विकारावयवयोर्भवन्ति इत्यधिकं पुस्तकान्तरे ॥

भ्यस्तु विकारमात्रे। कथं द्वयमप्यधिक्रियते "तस्य विकारः," "अवयवे च प्राण्यौषधि-वृक्षेभ्यः" इति ? विकारावयवयोर्युगपदधिकारोऽपवादविधानार्थः। कृतनिर्देशौ हि तौ॥

## बिल्वादिभ्योऽण्॥ १३६ ॥

बिल्व इत्येवमादिभ्योऽण् प्रत्ययो भवति विकारावयवयोरर्थयोः। यथायोगमञ्-मयटोरपवादः। बिल्वस्यावयवो विकारो वा बैल्वः। गवेधुकाशब्दोऽत्र पठ्यते, ततः कोपधादेव सिद्धे मयड्बाधनार्थं ग्रहणम्। बिल्व। व्रीहि। काण्ड। मुद्ग। मसूर। गोधूम। इक्षु। वेणु। गवेधुका। कर्पासी। पाटली। कर्कन्धू। कुटीर। बिल्वादिः॥

## कोपधाच्च॥ १३७ ॥

ककारोपधात् प्रातिपदिकादण् प्रत्ययो भवति यथायोगं विकारावयवयोरर्थयोः; अञोऽपवादः। तर्कु-तार्क्कवम्। तित्तिडीक-तैत्तिडीकम्। माण्डूकम्। दार्दुरूकम्। माधूकम्॥

## त्रपुजतुनोः षुक्॥ १३८ ॥

त्रपुजतुशब्दाभ्यामण् प्रत्ययो भवति विकारे, तत्सन्नियोगेन तयोः षुगागमो भवति। ओरञोऽपवादः। त्रपुणो विकारः त्रापुषम्। जातुषम्। अप्राण्यादित्वान्नावयवे॥

## ओरञ्॥ १३९ ॥

उवर्णान्तात्प्रातिपदिकादञ् प्रत्ययो भवति विकारावयवयोरर्थयोः। अणोऽपवादः। अनुदात्तादेरन्यदिहोदाहरणम्। दैवदारवम्। भाद्रदारवम्॥

## अनुदात्तादेश्च॥ १४० ॥

अनुदात्तादेः प्रातिपदिकादञ् प्रत्ययो भवति विकारावयवयोरर्थयोः। अणोऽपवादः। दाधित्थम्। कापित्थम्। माहित्थम्॥

## पलाशादिभ्यो वा॥ १४१ ॥

पलाशादिभ्यः प्रातिपदिकेभ्यो वाऽञ् प्रत्ययो भवति विकाराऽवयवयोरर्थयोः। पालाशम्। खादिरम्। यावसम्। उभयत्र विभाषेयम्-पलाशखदिरशिंशपास्यन्दनानामनुदात्तादित्वात् प्राप्तेऽन्येषामप्राप्ते। पलाश। खदिर। शिंशपा। स्यन्दन। करीर। शिरीष। यवास। विकङ्कत। पलाशादिः॥

## शम्याष्टलञ्॥ १४२ ॥

शमीशब्दाट् टलञ् प्रत्ययो भवति विकारावयवयोरर्थयोः। अञोऽपवादः। शामीलं भस्म। शामीली स्रुक्॥

---

**बिल्वादिभ्यः**—बिल्व आदि शब्दों से विकार तथा अवयव अर्थों में अण् प्रत्यय होता है।

**कोपधाच्च**—ककारोपध शब्दों से भी विकार तथा अवयव अर्थों में अण् प्रत्यय होता है।

**त्रपु**—त्रपु तथा जतु शब्दों से विकारार्थ में अञ् प्रत्यय तथा उसे षुक् का आगम हो जाता है।

**ओरञ्**—विकार तथा अवयव अर्थों में उवर्णान्तप्रातिपदिक से अञ् प्रत्यय होता है।

**अनु**—अनुदात्तादि प्रातिपदिक से भी विकार तथा अवयव अर्थों में अञ् प्रत्यय होता है।

**पलाशादिभ्यः**—पलाश आदि प्रातिपदिकों से उक्त अर्थों में विकल्प से अञ् प्रत्यय होता है।

**शम्याः**—शमी शब्द से उक्त दोनों अर्थों में टलञ् प्रत्यय होता है।

## मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ॥ १४३ ॥

प्रकृतिमात्राद्वा मयट् प्रत्ययो भवति भक्ष्याच्छादनवर्जितयोर्विकारावयवयोरर्थयोर्भाषायां विषये यथायथं प्रत्ययेषु प्राप्तेषु । अश्ममयम् । आश्मनम् । मूर्वामयम् । मौर्वम् । भाषायामिति किम् ? बैल्वः खादिरो वा यूपः स्यात् । अभक्ष्याच्छादनयोरिति किम् ? मौद्गः सूपः, कार्पासमाच्छादनम् । एतयोरिति किमर्थम् , यावता विकारावयवौ प्रकृतावेव ? ये विशेषप्रत्ययाः "प्राणिरजतादिभ्योऽञ्" इत्येवमादयस्तद्विषयेऽपि यथा स्यात्— कपोतमयम् , कापोतम् ; लोहमयम् , लौहमिति ॥

## नित्यं वृद्धशरादिभ्यः ॥ १४४ ॥

भाषायामभक्ष्याच्छादनयोरित्येव । वृद्धेभ्यः प्रातिपदिकेभ्यः शरादिभ्यश्चाभक्ष्याच्छादनयोर्विकारावयवयोर्भाषायां विषये नित्यं मयट् प्रत्ययो भवति । वृद्धेभ्यस्तावत्— आम्रमयम् । नित्यग्रहणं किमर्थम् , यावताऽऽरम्भसामर्थ्यादेव नित्यं भविष्यति ? एकाचो नित्यं मयटमिच्छन्ति, तदनेन क्रियते—त्वङ्मयम् , स्रङ्मयम् , वाङ्मयमिति । शर । दर्भ । मृत् । कुटी । तृण । सोम । बल्वज । शरादिः ॥

## गोश्च पुरीषे ॥ १४५ ॥

गोशब्दात्पुरीषेऽभिधेये मयट् प्रत्ययो भवति । गोमयम् । पुरीष इति किम् ? गव्यं पयः । पुरीषं न विकारो न चावयवस्तस्येदं विषये विधानम् । विकारावयवयोस्तु गोपयसोर्यतं वक्ष्यति ॥

## पिष्टाच्च ॥ १४६ ॥

पिष्टशब्दान्नित्यं मयट् प्रत्ययो भवति तस्य विकार इत्येतस्मिन् विषये । अणोऽपवादः । पिष्टमयं भस्म ॥

## संज्ञायां कन् ॥ १४७ ॥

पिष्टशब्दात् कन् प्रत्ययो भवति विकारे संज्ञायां विषये । मयटोऽपवादः । पिष्टकः ॥

## व्रीहेः पुरोडाशे ॥ १४८ ॥

व्रीहिशब्दान्मयट् प्रत्ययो भवति पुरोडाशे विकारे । बिल्वाद्यणोऽपवादः । व्रीयिमयः पुरोडाशः, व्रैहमन्यत् ॥

## असंज्ञायां तिलयवाभ्याम् ॥ १४९ ॥

तिलयवशब्दाभ्यामसंज्ञाविषये मयट् प्रत्ययो भवति विकारावयवयोरर्थयोः । तिल-

---

**मयड् वा**—भाषाविषय में भक्ष्य तथा आच्छादन से भिन्न विकार तथा अवयव अर्थों में प्रकृतिमात्र से मयट् प्रत्यय होता है विकल्प से ।

**नित्यम्**—भक्ष्याच्छादनभिन्न विकारावयवय अर्थद्वय में वृद्धसंज्ञक प्रातिपदिक से नित्य मयट् प्रत्यय होता है ।

**गोश्च**—गोशब्द से पुरीष ( विष्ठा ) अर्थ में मयट् प्रत्यय होता है ।

**पिष्टाच्च**—पिष्ट शब्द से भी विकारार्थ में मयट् प्रत्यय होता है ।

**संज्ञायाम्**—संज्ञाविषय में पिष्ट शब्द से कन् प्रत्यय होता है ।

**व्रीहेः**—व्रीहि शब्द से पुरोडाशात्मक विकारार्थ में मयट् प्रत्यय होता है ।

**असंज्ञायाम्**—असंज्ञाविषय में तिल तथा यव शब्दों से विकार तथा अवयव अर्थों में मयट् प्रत्यय होता है ।

मयम्। यवमयम्। असंज्ञायामिति किम्? तैलम्, यावकः। "यावादिभ्यः कन्" ॥

## द्व्यचश्छन्दसि ॥ १५० ॥

द्व्यचः प्रातिपदिकाच्छन्दसि विषये मयट् प्रत्ययो भवति विकारावयवयोरर्थयोः। भाषायां मयडुक्तश्छन्दस्यप्राप्तो विधीयते। यस्य पर्णमयी जुहूर्भवति। दर्भमयं वासो भवति। शरमयं बर्हिर्भवति ॥

## नोत्वद्वर्ध्रबिल्वात् ॥ १५१ ॥

उत्वतः प्रातिपदिकाद् वर्ध्रबिल्वशब्दाभ्यां च मयट् प्रत्ययो न भवति। "द्व्यचश्छन्दसि" इति प्राप्तः प्रतिषिध्यते। मौञ्जं शिक्यम्। गार्मुतं चरुम्। वार्ध्री बालप्रग्रथिता भवति। बैल्वो ब्रह्मवर्चसकामेन कार्यः। तपरकरणं तत्कालार्थम्। धूममयान्यभ्राणि। मतुम्निर्देशस्तदन्तविधिनिरासार्थः। इहैव स्यात्—वैणवी यष्टिरिति ॥

## तालादिभ्योऽण् ॥ १५२ ॥

तालादिभ्यः प्रातिपदिकेभ्योऽण् प्रत्ययो भवति विकारावयवयोरर्थयोः। मयडादीनामपवादः। तालं धनुः। वार्हिणम्। ऐन्द्रालिशम् ॥ तालाद्धनुषि(१)। वार्हिण। इन्द्रालिश। इन्द्राहश। इन्द्रायुध। चाप(२)। श्यामाक। पीयुक्षा। तालादिः ॥

## जातरूपेभ्यः परिमाणे ॥ १५३ ॥

जातरूपं सुवर्णम्, बहुवचननिर्देशात्तद्वाचिनः सर्वे गृह्यन्ते। जातरूपवाचिभ्यः प्रातिपदिकेभ्योऽण् प्रत्ययो भवति परिमाणे विकारे। मयडादीनामपवादः। हाटको निष्कः। हाटकं कार्षापणम्। जातरूपम्। तापनीयम्। परिमाण इति किम्? यष्टिरियं हाटकमयी ॥

## प्राणिरजतादिभ्योऽञ् ॥ १५४ ॥

प्राणिवाचिभ्यः प्रातिपदिकेभ्यो रजतादिभ्यश्चाञ् प्रत्ययो भवति विकारावयवयोरर्थयोः। अणादीनामपवादः। अनुदात्तादेरञ् विहित एव, परिशिष्टमिहोदाहरणम्। प्राणिभ्यस्तावत्—कापोतम्, मायूरम्, तैत्तिरम्। रजतादिभ्यः-राजतम्, सैसम्, लौहम्। रजतादिषु येऽनुदात्तादयः पठ्यन्ते रजतकण्टकारप्रभृतयस्तेभ्योऽञि सिद्धे पुनर्वचनं मयड्बाधनार्थम्। रजत। सीस। लोह। उदुम्बर। नीच(३)। दारु। रोहितक। बिभीतक। पीतदारु। तीव्रदारु। त्रिकण्टक। कण्टकार। रजतादिः ॥

---

द्व्यचः—द्व्यच् प्रातिपदिक से वेद में विकारावयव अर्थों में मयट् प्रत्यय होता है।

नोत्वत्—उकारवान् प्रातिपदिक तथा वर्ध्र एवं बिल्व शब्दों से मयट् नहीं होता है।

तालादिभ्यः—ताल आदि शब्दों से विकार एवम् अवयव अर्थों में अण् प्रत्यय होता है।

जात—सुवर्णवाचक शब्दों से परिमाणात्मक विकार अर्थ में अण् प्रत्यय होता है।

प्राणि—प्राणिवाचक तथा रजत आदि शब्दों से विकार तथा अवयव अर्थों में अञ् प्रत्यय होता है।

---

(१) तालाद्धनुषि इत्यस्याग्रे-तालमयमन्यत, नित्यं वृद्धेति मयट्—इत्यधिकं क्वचित।

(२) बर्हेति पाठान्तरम्।

(३) नीलेति पाठान्तरम्।

## ञितश्च तत्प्रत्ययात् ॥ १५५ ॥

अञित्येव । तदिति विकारावयवयोरर्थयोः प्रत्यवमर्शः । ञितो विकारावयवप्रत्ययस्तदन्तात्प्रातिपदिकादञ् प्रत्ययो भवति विकारावयवयोरेव(१)। मयटोऽपवादः। 'ओरञ्'। 'अनुदात्तादेश्च'। 'पलाशादिभ्यो वा'। 'शम्याष्ट्लञ्'। 'प्राणिरजतादिभ्योऽञ्'। 'उष्ट्राद्वुञ्'। 'एण्या ढञ्'। 'कंसीयपरशव्ययोर्यञञौ' इत्येते प्रत्यया गृह्यन्ते। दैवदारवस्य विकारोऽवयवो वा दैवदारवम्। दाधित्थस्य दाधित्थम्। पालाशस्य पालाशम्। शामीलस्य शामीलम्। कापोतस्य कापोतम्। औष्ट्रकस्य औष्ट्रकम्। ऐणेयस्य ऐणेयम्। कांस्यस्य कांस्यम्। पारशवस्य पारशवम्। ञित इति किम्? बैल्वमयम्। तत्प्रत्ययादिति किम्? बैदमयम् ॥

## क्रीतवत्परिमाणात् ॥ १५६ ॥

"प्राग्वतेष्ठञ्" इत्यत आरभ्य क्रीतार्थे ये प्रत्ययाः परिमाणाद्विहितास्ते विकारेऽतिदिश्यन्ते। परिमाणात् क्रीत इव प्रत्यया भवन्ति तस्य विकार इत्येतस्मिन् विषये। अणादीनामपवादः। संख्या परिमाणग्रहणेन गृह्यते, न रूढिपरिमाणमेव। निष्केण क्रीतं नैष्किकम्। एवं निष्कस्य विकारो नैष्किकः। शतेन क्रीतं शत्यम्, शतिकम्। शतस्य विकारः शत्यः, शतिकः। साहस्रः। वतिः सर्वसादृश्यार्थः। "अध्यर्द्धपूर्वाद् द्विगोर्लुगसंज्ञायाम्" इत्येवमादिकमप्यतिदिश्यते। द्विसहस्रः, द्विसाहस्रः। द्विनिष्कः, द्विनैष्किकः ॥

## उष्ट्राद् वुञ् ॥ १५७ ॥

उष्ट्रशब्दाद् वुञ् प्रत्ययो भवति विकारावयवयोरर्थयोः। प्राण्यञोपवादः। उष्ट्रस्य विकारोऽवयवो वा औष्ट्रकः ॥

## उमोर्णयोर्वा ॥ १५८ ॥

उमाशब्दादूर्णाशब्दाच्च वा वुञ् प्रत्ययो भवति विकारावयवयोरर्थयोः। औमकम्। औमम्। और्णकम्। और्णम् ॥

## एण्या ढञ् ॥ १५९ ॥

एणीशब्दाद् ढञ् प्रत्ययो भवति विकारावयवयोरर्थयोः। प्राण्यञोऽपवादः। ऐणेयं मांसम्। पुंसस्त्वञेव भवति–एणस्य मांसमैणम्(२) ॥

---

ञितश्च—ञित्विकारावयवार्थकप्रत्ययान्त शब्द से विकारावयव अर्थों में ही पुनः अञ् प्रत्यय होता है।

क्रीत—परिमाणवाचक शब्दों से क्रीतार्थक प्रत्ययों की तरह विकारार्थक प्रत्यय भी होते है।

उष्ट्रात्—उष्ट्र शब्द से विकार तथा अवयव अर्थों में वुञ् प्रत्यय होता है।

उमोर्णयोर्वा—उमा तथा ऊर्णा शब्दों से विकार और अवयव अर्थों में विकल्प से वुञ् प्रत्यय होता है।

एण्याः—एणी शब्द से विकार तथा अवयव अर्थों में ढञ् प्रत्यय होता है।

---

(१) विकारावयवयोरित्येवेति पाठान्तरम्।

(२) एणस्य मांसम् ऐणमित्यस्याग्रे–कोशाड्ढञ् वक्तव्यः, कौशेयं वासः सूत्रं च इत्यधिकं क्वचित्।

## गोपयसोर्यत् ॥ १६० ॥

गोपयःशब्दाभ्यां यत् प्रत्ययो भवति विकारावयवयोरर्थयोः। गव्यम्। पयस्यम्। सर्वत्र गोरजादिप्रसङ्गे यदस्त्येव, मयड्विषये तु विधीयते॥

## द्रोश्च ॥ १६१ ॥

द्रुशब्दाद्यत्प्रत्ययो भवति विकारावयवयोरर्थयोः। ओरञोऽपवादः। द्रव्यम्॥

## माने वयः ॥ १६२ ॥

द्रुशब्दान्माने विकारविशेषे वयः प्रत्ययो भवति। यतोऽपवादः। द्रुवयम्॥

## फले लुक् ॥ १६३ ॥

विकारावयवयोरुत्पन्नस्य फले तद्विशेषे विवक्षिते लुग्भवति। आमलक्याः फलमामलकम्। कुवलम्। बदरम्। फलितस्य वृक्षस्य फलमवयवो भवति विकारश्च, पल्लवितस्येव पल्लवः॥

## प्लक्षादिभ्योऽण् ॥ १६४ ॥

फल इत्येव। प्लक्षादिभ्यः प्रातिपदिकेभ्यः फले विकारावयवत्वेन विवक्षितेऽण् प्रत्ययो भवति। अञोऽपवादः। विधानसामर्थ्यात्तस्य न लुग्भवति। प्लाक्षम्। नैयग्रोधम्। प्लक्ष। न्यग्रोध। अश्वत्थ। इङ्गुदी। शिग्रु। कर्कन्धु(१)। बृहती(२)। प्लक्षादिः॥

## जम्ब्वा वा ॥ १६५ ॥

फल इत्येव। जम्बूशब्दात् फलेऽभिधेये वाऽण् प्रत्ययो भवति। अञोऽपवादः। अत्राणो विधानसामर्थ्याल्लुङ्न भवति, अञस्तु भवत्येव-जाम्बवानि फलानि जम्बूनि वा॥

## लुप् च ॥ १६६ ॥

वेत्येव। जम्ब्वाः फलेऽभिधेये प्रत्ययस्य वा लुब्भवति। युक्तवद्भावे विशेषः। जम्ब्वाः फलं जम्बू फलम्। जम्बु फलम्। जाम्बबमिति वा। ॐलुप्प्रकरणे फलपाकशुषामुपसंख्यानम्ॐ। व्रीहयः। यवाः। माषाः। मुद्गाः। तिलाः। ॐपुष्पमूलेषु

---

गो—गो तथा पयस् शब्दों से विकार तथा अवयव अर्थों में यत् प्रत्यय होता है।

द्रोश्च—द्रु शब्द से भी विकार और अवयव अर्थों में यत् प्रत्यय होता है।

माने—द्रु शब्द से मानात्मक बिकारार्थ में वय प्रत्यय होता है।

फले—विकारार्थक तथा अवयवार्थक प्रत्ययों का फलात्मक विकार की विवक्षा में लुक् हो जाता है।

प्लक्षादिभ्योण—प्लक्ष आदि शब्दों से फलातमक विकार और तदात्मक अबयव अर्थों में अण् प्रत्यय होता है।

जम्ब्वा वा—जम्बू शब्द से फलात्मक अवयवादि अर्थों में विकल्प से अञ् प्रत्यय होता है।

लुप्—जम्बू शब्द से विहित फलावयवार्थक प्रत्यय का विकल्प से लुप् हो जाता है।

लुप्प्रकरणे—लुप् के प्रकरण में फल के पाक से सूखने वाले पदार्थों के वाचक शब्दों का भी परिग्रहण समझना चाहिए।

पुष्प—पुष्पमूल के अभिधेय होने पर बहुल करके फलात्मकविकारार्थक प्रत्ययों का लुप् समझना चाहिए।

---

(१) ऋक्रतु इति पाठान्तरम्। अन्यत्र-ककन्तु इत्यपि पाठान्तरम्।

(२) काक्ष, तुरुरु इत्यधिकं कुत्रचित्।

बहुलम्‌ । मल्लिकायाः पुष्पं मल्लिका । नवमल्लिका(१) जातिः । विदार्या मूलं विदारी । अंशुमती । बृहती । न च भवति-पाटलानि पुष्पाणि, शाल्वानि मूलानि, बैल्वानि फलानीति ॥

## हरीतक्यादिभ्यश्च ॥ १६७ ॥

हरीतकी इत्येवमादिभ्यः शब्देभ्यः फले प्रत्ययस्य लुब् भवति । लुकि प्राप्ते लुपो विधाने युक्तवद्भावे स्त्रीप्रत्ययश्रवणे च विशेषः । हरीतक्याः फलं हरीतकी । कोशातकी । नखरजनी । अत्र च व्यक्तिर्युक्तवद्भावेनेष्यते, वचनं त्वभिधेयवदेव भवति । हरीतक्याः फलानि हरीतक्यः । हरीतकी । कोशातकी । नखरजनी(२) । शष्कण्डी(३) । दाडी । दोडी । श्वेतपाकी । अर्जुनपाकी । काला । द्राक्षा । ध्वाङ्क्षा । गर्गरिका । कण्टकारिका । शेफालिका । (४) हरीतक्यादिः ॥

## कंसीयपरशव्ययोर्यञञौ लुक् च ॥ १६८ ॥

'प्राक्क्रीताच्छः'-कंसीयः । 'उपगवादिभ्यो यत्'-परशव्यः । कंसीयपरशव्यशब्दाभ्यां यथासंख्यं यञञौ प्रत्ययौ भवतस्तस्य विकार इत्येतस्मिन् विषये, तत्संनियोगेन च कंसीयपरशव्ययोर्लुग्भवति । कंसीयस्य विकारः कांस्यः । परशव्यस्य विकारः पारशवः । प्रादिपदिकाधिकाराद्धातुप्रत्ययस्य न लुग्भवति । परशव्यशब्दादनुदात्तादित्वादेवाञि सिद्धे लुगर्थं वचनम् । ननु च "यस्येति" लोपे कृते "हलस्तद्धिते" इति यलोपो भविष्यति ? नैतदस्ति । ईतीति तत्र वर्त्तते ॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ
चतुर्थाध्यायस्य तृतीयः पादः ॥



---

**हरीतक्यादिभ्यः**—हरीतकी आदि शब्दों से विहित फलार्थक प्रत्यय का भी लुप् हो जाता है ।

**कंसीय**—कंसीय तथा परशव्य शब्दों से विकारार्थ मे क्रमशः यञ् एवम् अञ् प्रत्यय तथा प्रकृति का अन्त्यलोप भी हो जाता है ।

चतुर्थाध्याय का तृतीय पाद समाप्त हुआ ।



---

(१) नवमालिका इति पाठान्तरम् ।
(२) नखररजनी इति पाठान्तरम् ।
(३) शाकण्डी इति पाठान्तरम् ।
(४) शेफालिकेत्यस्याग्रे येषां च फलपाकनिमित्तः शोषः पुष्पमूलेषु बहुलम् इत्यधिकम् ।

# अथ चतुर्थाध्यायस्य चतुर्थः पादः ॥

## प्राग्वहतेष्ठक् ॥ १ ॥

"तद्वहति रथयुगप्रासङ्गम्" इति वक्ष्यति । प्रागेतस्माद्वहतिसंशब्दनाद्यान् अर्थाननुक्रमिष्यामः ठक् प्रत्ययस्तेष्वधिकृतो वेदितव्यः । वक्ष्यति-"तेन दीव्यति खनति जयति जितम्" इति—अक्षैर्दीव्यति आक्षिकः । ॐठक्प्रकरणे तदाहेति माशब्दादिभ्य उपसंख्यानम्ॐ । माशब्द इत्याह माशब्दिकः । नैत्यशब्दिकः । कार्यशब्दिकः । वाक्यादेतत्प्रत्ययविधानम् । ॐआहौ प्रभूतादिभ्यःॐ । प्रभूतमाह प्राभूतिकः । पार्याप्तिकः । क्रियाविशेषणात् प्रत्ययः । ॐपृच्छतौ सुस्नातादिभ्यःॐ । सुस्नातं पृच्छति सौस्नातिकः । सौखरात्रिकः । सौखशायनिकः । ॐगच्छतौ परदारादिभ्यःॐ । परदारान् गच्छति पारदारिकः । गौरुतल्पिकः ॥

## तेन दीव्यति खनति जयति जितम् ॥ २ ॥

तेनेति तृतीयासमर्थाद् दीव्यति खनति जयति जितमित्येतेष्वर्थेषु ठक् प्रत्ययो भवति । अक्षैर्दीव्यति आक्षिकः । शालाकिकः । अभ्र्या खनति आभ्रिकः । कौद्दालिकः । अक्षैर्जयति आक्षिकः । अक्षैर्जितमाक्षिकम् । शालाकिकम् । सर्वत्र करणे तृतीया समर्थविभक्तिः । देवदत्तेन जितमिति प्रत्ययो न भवति, अनभिधानात्, अङ्गुल्या खनतीति च । प्रत्ययार्थे संख्याकालयोरेव विवक्षा क्रियाप्रधानत्वेऽपि चाख्यातस्य । तद्धितः स्वभावात् साधनप्रधानः ॥

## संस्कृतम् ॥ ३ ॥

तेनेति तृतीयासमर्थात्संस्कृतमित्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । सत उत्कर्षाधानं संस्कारः । दध्ना संस्कृतं दाधिकम् । शार्ङ्गवेरिकम् । मारिचिकम् । योगविभाग उत्तरार्थः ॥

## कुलत्थकोपधादण् ॥ ४ ॥

कुलत्थशब्दात् ककारोपधाच्छब्दाच्च प्रातिपदिकादण् प्रत्ययो भवति संस्कृतमित्ये-

---

प्राग्—'तद्वहति' अर्थ से पूर्व जिन अर्थों का उल्लेख किया जायगा उन अर्थों में ठक् प्रत्यय होता है ।

ठक्प्रकरणे—ठक्-प्रकरण में 'तदाह' ( ऐसा कहता है ) अर्थ में माशब्द आदि से भी ठक् प्रत्यय समझना चाहिए ।

आहौ—'आह' ( कहता है ) अर्थ में प्रभूत आदि शब्दों से ठक् प्रत्यय समझना चाहिए ।

पृच्छतौ—'पृच्छति' ( पूछता है ) अर्थ में सुस्नात आदि शब्दों से ठक् प्रत्यय होता है ।

गच्छतौ—'गच्छति' ( जाता है ) अर्थ में परदारा आदि शब्दों से ठक् प्रत्यय होता है ।

तेन—तृतीयासमर्थ शब्दों से 'दीव्यति' ( क्रीड़ा करता है ), 'खनति' ( खोदता है ), 'जयति' ( जीतता है ) तथा 'जितम्' ( जीता गया ) अर्थों में ठक् प्रत्यय होता है ।

संस्कृतम्—तृतीयासमर्थ शब्द से संस्कृत अर्थ में ठक् प्रत्यय होता है ।

कुलत्थ—कुलत्थ तथा ककारोपध शब्दों से संस्कृत अर्थ में अण् प्रत्यय होता है ।

तस्मिन् विषये । ठकोऽपवादः । कुलत्थैः संस्कृतं कौलत्थम् । ककारोपधात्-तैत्तिडीकम्(१), दार्दभकम् ॥

## तरति ॥ ५ ॥

तेनेति तृतीयासमर्थात्तरतीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । तरति प्लवते इत्यर्थः । कांडप्लवेन तरिति कांडप्लविकः । औडुपिकः ॥

## गोपुच्छाट्ठञ् ॥ ६ ॥

गोपुच्छशब्दात् ठञ्प्रत्ययो भवति तरतीत्येतस्मिन्नर्थे । ठकोऽपवादः । स्वरे विशेषः । गौपुच्छिकः ॥

## नौद्व्यचष्ठन् ॥ ७ ॥

नौशब्दाद् द्व्यचश्च प्रातिपदिकाट्ठन् प्रत्ययो भवति तरतीत्येतस्मिन्नर्थे । ठकोऽपवादः । नावा तरति नाविकः । द्व्यचः खल्वपि-घटिकः, प्लविकः, बाहुकः । षकारः सांहितिकः, नानुबन्धः । बाहुका स्त्री ॥

आकर्षात् पर्पादेर्भस्त्रादिभ्यः कुसीदसूत्राच्च ।
आवसथात् किसरादेः षितः षडेते ठगधिकारे ॥
विधिवाक्यापेतं च षट्त्वं प्रत्ययास्तु सह ॥

## चरति ॥ ८ ॥

तेनेति तृतीयासमर्थाच्चरतीत्येतस्मिन्नर्थे ठक प्रत्ययो भवति । चरतिर्भक्षणे गतौ च वर्त्तते । दध्ना चरति दाधिकः । हास्तिकः । शाकटिकः ॥

## आकर्षात् ष्ठल् ॥ ९ ॥

आकर्षशब्दात् ष्ठल्प्रत्ययो भवति चरतीत्येतस्मिन्नर्थे । ठकोऽपवादः । लकारः स्वरार्थः । षकारो ङीषर्थः । आकर्षेण चरति आकर्षिकः । आकर्षिकी । आकर्ष इति सुवर्णपरीक्षार्थो निकषोपल उच्यते ॥

## पर्पादिभ्यः ष्ठन् ॥ १० ॥

पर्प इत्येवमादिभ्यः ष्ठन् प्रत्ययो भवति भवति चरतीत्येतस्मिन्नर्थे । ठकोऽपवादः । नकारः स्वरार्थः । षकारो ङीषर्थः । पर्पिकः । पर्पिकी । अश्विकः । अश्विकी । पर्प । अश्व । अश्वत्थ । रथ । जाल । न्यास । व्याल । पादः पच्च । पदिकः । पर्पादिः ।

---

तरति—तृतीयासमर्थ शब्दों से 'तरति' ( पार करता है, या तैरता है ) अर्थ में ठक् प्रत्यय होता है ।

गो—गोपुच्छ शब्द से 'तरति' अर्थ में ठञ् प्रत्यय होता है ।

नौ—नौ तथा द्व्यच् प्रातिपदिक से 'तरति' अर्थ में ठन् प्रत्यय होता है ।

चरति—तृतीयासमर्थ प्रातिपदिक से 'चरति' ( खाता है तथा जाता है ) अर्थ में ठक् प्रत्यय होता है ।

आकर्षात्—आकर्ष शब्द से 'चरति' अर्थ में ष्ठल् प्रत्यय होता है ।

पर्पादिभ्यः—पर्प आदि शब्दों से 'चरति' अर्थ में ष्ठन् प्रत्यय होता है ।

---

( १ ) तैत्तिरीकम् इति पाठान्तरम् ।

## श्वगणाट्ठञ्च ॥ ११ ॥

श्वगणशब्दाट्ठञ् प्रत्ययो भवति, चकारात् ष्ठन्, चरतीत्येतस्मिन्नर्थे । ठकोऽपवादः । श्वगणेन चरति श्वागणिकः, श्वागणिकी । ठन्–श्वगणिकः, श्वगणिका । श्वादेरिञोऽन्यत्र वक्ष्यति, इकारादिग्रहणं च कर्त्तव्यं श्वागणिकाद्यर्थमिति । तेन ठञि द्वारादिकार्यं न भवति ॥

## वेतनादिभ्यो जीवति ॥ १२ ॥

तेनेति तृतीयासमर्थेभ्यो वेतनादिभ्यः शब्देभ्यो जीवतीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । वेतनेन जीवति वैतनिकः कर्मकरः । धनुर्दण्डग्रहणमत्र संघातविगृहीतार्थम् । धानुर्दण्डिकः । धानुष्कः । दाण्डिकः । वेतन । वाह । अर्द्धवाह । धनुर्दण्ड । जाल । वेस । उपवेस । प्रेषण । उपस्ति । सुख । शय्या । शक्ति । उपनिषत् । उपवेष । स्रक् । पाद । उपस्थान । वेतनादिः ॥

## वस्नक्रयविक्रयाट्ठन् ॥ १३ ॥

वस्नक्रयविक्रयशब्दाभ्यां तृतीयासमर्थाभ्यां ठन् प्रत्ययो भववि जीवतीत्येतस्मिन् विषये । ठकोऽपवादः । वस्नेन जीवति वस्निकः । क्रयविक्रयग्रहणं संघातविगृहीतार्थम्—क्रयविक्रयिकः, क्रयिकः, विक्रयिकः ॥

## आयुधाच्छ च ॥ १४ ॥

आयुधशब्दाच्छप्रत्ययो भवति, चकाराट्ठँश्च जीवतीत्येतस्मिन् विषये । आयुधेन जीवति आयुधीयः, आयुधिकः ।

## हरत्युत्सङ्गादिभ्यः ॥ १५ ॥

तेनेत्येव । उत्सङ्गादिभ्यस्तृतीयासमर्थेभ्यो हरतीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । हरतिर्देशान्तरप्रापणे वर्त्तते । उत्सङ्गेन हरति औत्सङ्गिकः । औडुपिकः । उत्सङ्ग । उडुप । उत्पत । पिटक । उत्सङ्गादिः(१) ॥

## भस्त्रादिभ्यः ष्ठन् ॥ १६ ॥

भस्त्रेत्येवमादिभ्यस्तृतीयासमर्थेभ्यो हरतीत्येतस्मिन्नर्थे ष्ठन्प्रत्ययो भवति । भस्त्रया हरति भस्त्रिकः । भस्त्रिकी । भरटिकः । भरटिकी । भस्त्रा । भरण(२) । शीर्षभार । शीर्षेभार । अंसभार । अंसेभार । भस्त्रादिः ।

---

श्वगणात्—श्वगण शब्द से 'चरति' अर्थ में ठञ् तथा ष्ठन् प्रत्यय होते हैं ।

वेतनादिभ्यः—तृतीयासमर्थ वेतन आदि शब्दों से 'जीवति' ( जीता है ) अर्थ में ठक् प्रत्यय होता है ।

वस्न—तृतीयासमर्थ वस्न, क्रय, विक्रय तथा क्रयविक्रय शब्दों से जीवति अर्थ में ठन् प्रत्यय होता है ।

आयुधात्—तृतीयासमर्थ आयुध शब्द से 'जीवति' अर्थ में छ तथा ठन् प्रत्यय होते हैं ।

हरत्युत्सङ्गादिभ्यः—तृतीयासमर्थ उत्सङ्ग आदि शब्दों से 'हरति' ( हरण करता है या ले जाता है ) अर्थ में ठक् प्रत्यय होता है ।

भस्त्रा—भस्त्रा आदि शब्दों से 'हरति' अर्थ में ष्ठन् प्रत्यय होता है ।

---

( १ ) उडप, पिटाक एतौ शब्दौ अत्र पुस्तकान्तरेऽधिकौ ।

( २ ) भारण इति पाठान्तरम् ।

## विभाषा विवधवीवधात् ॥ १७ ॥

हरतीत्येव। विवधवीवधशब्दाभ्यां तृतीयासमर्थाभ्यां विभाषा ष्ठन् प्रत्ययो भवति। तेन मुक्ते प्रकृतेष्ठक् भवति। विवधेन हरति विवधिकः। विवधिकी। वीवधिकः। वीवधिकी। ठक् खल्वपि-वैवधिकः, वैवधिकी। विवधवीवधशब्दौ समानार्थौ पथि पर्याहारे च वर्त्तेते॥

## अण् कुटिलिकायाः ॥ १८ ॥

हरतीत्येव। कुटिलिकाशब्दात्तृतीयासमर्थादण् प्रत्ययो भवति हरतीत्येतस्मिन्नर्थे। कुटिलिकया हरति मृगो व्याधं कौटिलिको मृगः। कुटिलिकया हरत्यङ्गारान् कौटिलिकः कर्मारः। कुटिलिका = वक्रगतिः, कर्माराणामायुधकर्षणी लोहमयी यष्टिश्चोच्यते॥

## निर्वृत्तेऽक्षद्यूतादिभ्यः ॥ १९ ॥

तेनेत्येव। अक्षद्यूतादिभ्यस्तृतीयासमर्थेभ्यो निर्वृत्त इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। अक्षद्यूतेन निर्वृत्तम् आक्षद्यूतिकं वैरम्। जानुप्रहतिकम्। अक्षद्यूत। जानुप्रहत। जङ्घाप्रहत। पादस्वेदन। कण्टकमर्द्दन। गतागत। यातोपयात। अनुगत। अक्षद्यूतादिः॥

## क्त्रेर्मम् नित्यम् ॥ २० ॥

निर्वृत्त इत्येव। "ड्वितः क्त्रिः" इत्ययं क्त्रिशब्दो गृह्यते। क्त्र्यन्तान्नित्यं मप्प्रत्ययो भवति तेन निर्वृत्त इत्येतस्मिन्नर्थे। डुपचष् पाके-पक्त्रिमम्। डुवप्-उप्त्रिमम्। डुकृञ्-कृत्रिमम्। नित्यग्रहणं स्वातन्त्र्यनिवृत्त्यर्थम्, तेन क्त्र्यन्तं नित्यं मप्प्रत्ययान्तमेव भवति, विषयान्तरे न प्रयोक्तव्यमिति। ॐभावप्रत्ययान्तादिमब्वक्तव्यःॐ। पाकेन निर्वृत्तं पाकिमम्। त्यागिमम्। सेकिमम्। कुट्टिमम्॥

## अपमित्ययाचिताभ्यां कक्कनौ ॥ २१ ॥

निर्वृत्त इत्येव। अपमित्ययाचितशब्दाभ्यां यथासंख्यं कक्, कन् इत्येतौ प्रत्ययौ भवतो निर्वृत्त इत्येतस्मिन्नर्थे। आपमित्यकम। याचितकम्॥

## संसृष्टे ॥ २२ ॥

तेनेत्येव। तृतीयासमर्थात् संसृष्ट इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। संसृष्टमेकीभूतमभिन्नमित्यर्थः। दध्ना संसृष्टं दाधिकम्। मारिचिकम्। शार्ङ्गवेरिकम्। पैप्पलिकम्॥

## चूर्णादिनिः ॥ २३ ॥

चूर्णशब्दादिनिः प्रत्ययो भवति संसृष्टे। ठकोऽपवादः। चूर्णैः संसृष्टाश्चूर्णिनोऽपूपाः। चूर्णिनो धानाः॥

---

**विभाषा**—विवध तथा वीवध शब्दों से विकल्प से 'हरति' अर्थ में ष्ठन् प्रत्यय होता है।

**अण**—तृतीयासमर्थ कुटिलिका शब्द से 'हरति' अर्थ में अण् प्रत्यय होता है।

**निर्वृत्ते**—तृतीयासमर्थ अक्षद्यूत आदि शब्दों से निर्वृत्त ( सम्पन्न ) अर्थ में ठक् प्रत्यय होता है।

**क्त्रेर्मम्**—तृतीयासमर्थ क्त्रिप्रत्ययान्त शब्द से निर्वृत्त अर्थ में नित्य मम् प्रत्यय होता है।

**भाव**—भावप्रत्ययान्त शब्दों से इमम् प्रत्यय का विधान समझना चाहिए।

**अप**—अपमिति तथा अयाचित शब्दों से यथाक्रम निर्वृत्त अर्थ में कक् तथा कन् प्रत्यय होते हैं।

**संसृष्टे**—तृतीयासमर्थ शब्द से संसृष्ट अर्थ में ठक् प्रत्यय होता है।

**चूर्णादिनिः**—चूर्ण शब्द से संसृष्ट अर्थ में इनि प्रत्यय होता है।

## लवणाल्लुक् ॥ २४ ॥

संसृष्ट इत्यनेनोत्पन्नस्य ठको लवणशब्दाल्लुग्भवति । लवणः सूपः । लवणं शाकम् । लवणा यवागूः । द्रव्यवाची लवणशब्दो लुकं प्रयोजयति, न गुणवाची ॥

## मुद्गादण् ॥ २५ ॥

मुद्गशब्दादण् प्रत्ययो भवति संसृष्ट इत्येतस्मिन् विषये । ठकोऽपवादः । मौद्ग ओदनः । मौद्गी यवागूः ॥

## व्यञ्जनैरुपसिक्ते ॥ २६ ॥

तेनेत्येव । व्यञ्जनवाचिभ्यः प्रातिपदिकेभ्यस्तृतीयासमर्थेभ्य उपसिक्त इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । दध्ना 'उपसिक्तं दाधिकम् । सौपिकम् । घारिकम् । व्यञ्जनैरिति किम् ? उदकेनोपसिक्त ओदनः ॥

## ओजःसहोम्भसा वर्तते ॥ २७ ॥

ओजस् , सहस् , अम्भस् इत्येतेभ्यस्तृतीयासमर्थेभ्यो वर्त्तत इत्यर्थे ठक् प्रत्ययो भवति । ओजसा वर्त्तते औजसिकः शूरः । साहसिकश्चौरः । आम्भसिको मत्स्यः ॥

## तत् प्रत्यनुपूर्वमीपलोमकूलम् ॥ २८ ॥

तदिति द्वितीया समर्थविभक्तिः । प्रति, अनु इत्येवम्पूर्वेभ्य ईपलोमकूलशब्देभ्यो द्वितीयासमर्थेभ्यो वर्त्तत इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । ननु च वृतिरकर्मकः, तस्य कथं कर्मणा सम्बन्धः ? क्रियाविशेषणमकर्मकाणामपि कर्म भवति । प्रतीपं वर्त्तते प्रातीपिकः । आन्वीपिकः । प्रातिलोमिकः । आनुलोमिकः । प्रातिकूलिकः । आनुकूलिकः ॥

## परिमुखं च ॥ २९ ॥

परिमुखशब्दाद् द्वितीयासमर्थाद्वर्त्तत इत्यस्मिन्नर्थे ठक् प्रत्ययो भवति । परिमुखं वर्त्तते पारिमुखिकः । चकारोऽनुक्तसमुच्चयार्थः—पारिपार्श्विकः ॥

## प्रयच्छति गर्ह्यम् ॥ ३० ॥

तदिति द्वितीयासमर्थात्प्रयच्छतीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति, यत्तद्द्वितीयासमर्थं गर्ह्यं चेत्तद्भवति । द्विगुणार्थं द्विगुणं तादर्थ्यात्ताच्छब्द्यम् । द्विगुणं प्रयच्छति द्वैगुणिकः । त्रैगुणिकः । *वृद्धेर्वृधुषिभावो वक्तव्यः* । वार्धुषिकः । प्रकृत्यन्तरं वा वृद्धिपर्यायो वृधुषिशब्दः । गर्ह्यमिति किम् ? द्विगुणं प्रयच्छत्यधमर्णः ॥

---

लवणात्—लवण शब्द से उत्पन्न संसृष्टार्थक ठक् का लुक् हो जाता है ।

मुद्गादण्—मुद्ग शब्द से संसृष्ट अर्थ में अण् प्रत्यय होता है ।

व्यञ्जनैः—तृतीयासमर्थ व्यञ्जनवाचक प्रातिपदिक से 'उपसिक्त' अर्थ में ठक् प्रत्यय होता है ।

ओजः—तृतीयासमर्थ ओजस्, सहस् तथा अम्भस् शब्दों से वर्त्तन अर्थ में ठक् प्रत्यय होता है ।

तत्—प्रतिपूर्वक तथा अनुपूर्वक ईप, लोम तथा कूल शब्दों से वर्त्तन अर्थ में ठक् प्रत्यय होता है ।

परिमुखम्—द्वितीयासमर्थ परिमुख शब्द से वर्त्तन अर्थ में ठक् प्रत्यय होता है ।

प्रयच्छति—निन्द्यार्थप्रतिपादक द्वितीयासमर्थ शब्दों से 'प्रयच्छति' ( देता है ) अर्थ में ठक् प्रत्यय होता है ।

वृद्धे—वृद्धि शब्द से ठक् प्रत्यय तथा वृद्धि को वृधुषि आदेश होते हैं ।

## कुसीददशैकादशात् ष्ठन्ष्ठचौ ॥ ३१ ॥

प्रयच्छति गर्ह्यमित्येव। कुसीदं वृद्धिस्तदर्थं द्रव्यं कुसीदम्। एकादशार्था दश दशैका-दशशब्देनोच्यन्ते। कुसीददशैकादशशब्दाभ्यां यथासंख्यं ष्ठन्, ष्ठच् इत्येतौ प्रत्ययौ भवतः प्रयच्छति गर्ह्यमित्यस्मिन् विषये। ठकोऽपवादौ। कुसीदं प्रयच्छति कुसीदिकः। कुसीदिकी। दशैकादशिकः। दशैकादशिकी॥

## उञ्छति ॥ ३२ ॥

तदिति द्वितीयासमर्थादुञ्छतीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। बदराण्युञ्छति बादरिकः। श्यामाकिकः। भूमौ पतितस्यैकैकस्य कणस्योपादानमुञ्छः। कणानुञ्छति काणिकः(१)॥

## रक्षति ॥ ३३ ॥

तदिति द्वितीयासमर्थाद्रक्षतीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। समाजं रक्षति सामाजिकः। सांनिवेशिकः॥

## शब्ददर्दुरं करोति ॥ ३४ ॥

तदिति द्वितीयासमर्थाभ्यां शब्ददर्दुरशब्दाभ्यां करोतीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। शब्दं करोति शाब्दिको वैयाकरणः। दार्दुरिकः कुम्भकारः॥

## पक्षिमत्स्यमृगान् हन्ति ॥ ३५ ॥

तदित्येव। पक्ष्यादिभ्यो द्वितीयासमर्थेभ्यो हन्तीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। स्वरूपस्य पर्यायाणां तद्विशेषाणां च ग्रहणमिहेष्यते। पक्षिणो हन्ति पाक्षिकः। शाकुनिकः। मायूरिकः। तैत्तिरिकः। मत्स्य-मात्स्यिकः, मैनिकः, शाफरिकः, शाकुलिकः। मृग-मार्गिकः, हारिणिकः, सौकरिकः, सारङ्गिकः॥

## परिपन्थं च तिष्ठति ॥ ३६ ॥

परिपन्थशब्दात्तदिति द्वितीयासमर्थात्तिष्ठतीत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। परिपन्थं तिष्ठति पारिपन्थिकश्चौरः। चकारो भिन्नक्रमः प्रत्ययार्थं समुच्चिनोति। परिपन्थं हन्ति पारिपन्थिकः। समर्थविभक्तिप्रकरणे पुनर्द्वितीयोच्चारणं लौकिकवाक्यप्रदर्शनार्थम्-परिपथशब्दपर्यायः परिपन्थशब्दोऽस्तीति ज्ञापयति, स विषयाऽन्तरेऽपि प्रयोक्तव्यः॥

---

**कुसीद**—निन्द्यार्थक कुसीद तथा दशैकादश शब्दों से 'प्रयच्छति' अर्थ में क्रमशः ष्ठन् तथा ष्ठच् प्रत्यय होते हैं।

**उञ्छति**—द्वितीयासमर्थ शब्दों से 'उञ्छति' ( जमीन पर गिरे दानों को चुनता है ) अर्थ में ठक् प्रत्यय होता है।

**रक्षति**—द्वितीयासमर्थ शब्दों से 'रक्षति' ( रक्षा करता है ) अर्थ में ठक् प्रत्यय होता है।

**शब्द**—द्वितीयासमर्थ शब्द तथा दर्दुर शब्दों से 'करोति' अर्थ में ठक् प्रत्यय होता है।

**पक्षि**—द्वितीयासमर्थ पक्षिन्, मत्स्य तथा मृग शब्दों से 'हन्ति' ( मारता है ) अर्थ में ठक् प्रत्यय होता है।

**परिपन्थम्**—द्वितीयासमर्थ परिपन्थ शब्द से 'तिष्ठति' ( ठहरता है ) तथा 'हन्ति' अर्थ में ठक् प्रत्यय होता है।

---

( १ ) भूमावित्यारभ्य काणिक इत्यन्तं बहुषु पुस्तकेषु नास्ति॥

